**Upadeśamálá-avachúri.** An abridgement of the lessons taught in the Upadeśamálá. By Siddha Sádhu.

**Beginning.** अर्हं । जगच्चूडामणि । ऋषभो जगच्चूडामणिभूतोऽधुना मुक्तिपदस्थायितया जगत उपरिवर्त्तीत्यर्थः । वीरः पुनः आसन्नतया त्रिलोकश्रीतिलकः । तथा अनयोर्मध्ये एक ऋषभो लोकादित्यः । युगादौ प्रभात इव निखिलव्यवहारकारणत्वापादकः । पुनर्वीरः त्रिभुवनस्येदानीन्तनजन्तुचक्षुर्भूतागमार्थभाषकत्वात् । अधुनैतदुद्देशेनैवं तपःकर्म्मोपदेशमाह । संवच्छरगाहा । नवरं जइच्छए उपमाणेणं त्ति । तपःकर्म्मणि यत्नं कुर्य्यात् । इत्यादि ।

**End.** दातव्या पुनरियं बहुश्रुतेभ्यो विवेकिभ्यः । इह सूत्रेषु पाठानां बाहुविध्यात् पर्य्यालोचयतां सम्यगर्थप्रदः प्रतिभासः । स एवास्माभिः पाठो विहितः । कृतिरियं सिद्धर्षिचरणरेणोः सिद्धसाधोरिति ॥

**Colophon.** इति श्रीउपदेशमालावचूरिः ।

विषयः । जैनोपदेशमालासन्दर्भस्य संक्षेपेण व्याख्यानम् ।

---

**No 3285.** उपदेशरत्नकोशः, वा उपदेशरत्नमाला । Substance, country-made paper, 12 × 4½ inches. Folia, 2. Lines, 8 on a page. Extent, 39 ślokas. Character, Nágara. Date, ? Place of deposit, Válucbara, Panchâyata-pausála. Appearance, old. Verse. Correct.

**Upadeśa Ratnakośa.** Verses briefly inculcating humanity, mercy to created beings, and other Jain virtues. By Padma Jineśvara Súri.

**Beginning.** उवएसरयणकोस नासिय नीसेससयलदोगच्च ।
उवएसरयणमाल वुच्छ नमिउन वीरजिणं ॥
जीवदयाइ रमिज्जइ इंदियवग्गो दमिज्जइ सयावि ।
सच्चं चेव वचविज्जइ धम्मसमिणमेव ॥
सीलमङ्क खंडिज्जइ मवसिज्जइ समं कुशीलेहिं ।
गुरुवयणं नक्खलिज्जइ आरनज्जइ धम्मपरमत्थो ॥ इत्यादि ।

**End.** इय पउमजिणेसरसूरिवयण जिणवयणगुंफरमणीयं ।
वहउ जणोकं च गयं विउलं उवएसमालमिणं ॥

**Colophon.** इति उपदेशरत्नमाला समाप्ता ।

विषयः । संक्षेपेण जीवदयादिरूपधर्म्मानुष्ठानस्य कर्त्तव्यताकथनम् ।

---

**No. 3286.** **पुष्पमालाप्रकरणम् ।** Substance, country-made paper, 12 × 5 inches. Folia, 25. Lines, 11 on a page. Extent, 584 Slokas. Character, Nágara. Date, Sм. 1541. Place of deposit, Válnchara, Pancháyata-pausála. Appearance, old. Verse. Correct. Half Mágadhí.

**Pushpamálá-prakarana.** On the religious principles taught by Varddhamána Jina. Anonymous.

**Beginning.** सिद्धमकम्ममविग्गाचमकलं कमसंखमक्खयं धीरं ।
प्रणमामि सुगर + + ल परमत्थपयासणं वीरं ॥
जिणवयणकाननां उचिणि उणसुवरममरिसगुणड्ढं ।
वणममालमेयं रएमि वरकुसुममालं व ॥
रयणायरपवभड्ढं रयणं व सुदुल्लहं मणुअजम्मं ।
तत्थवि रोरस्स निहिव्व दुल्लहोचोर जिणधम्मो ॥ इत्यादि ।

**End.** जाव जिणसासणमिणं जावय धम्मो जयंमि विप्फुरइ ।
तावण्डिज्जउ एसा भव्वेहिं सया सुवत्तीहिं ॥

**Colophon.** इति श्रीपुष्पमालाप्रकरणं समाप्तं । संवत् । १५४१ ।

विषयः । मानवजन्मलाभेऽपि तत्र जैनधर्म्मस्य दुर्लभत्वकीर्त्तनम् । जैनधर्म्मस्य चाहिंसा-मूलत्वनिरूपणम् । अत एव सर्व्वत्र जीवेषु दयादानाभयदानादीनां परमधर्म्मजनकत्वकीर्त्तनम् । गुरूपदेशादीनामावश्यकत्वकथनं । संक्षेपेण वर्द्धमानजिनोक्तधर्म्मदेशनासारकथनं । अत्र वर्द्धमानजिनेन्द्रोक्तधर्म्मोपदेशरूपाणां पुष्पाणां गुम्फनात् पुष्पमालेति प्रकरणस्याभिधानमन्वर्थमिति ज्ञेयम् ।

---

**No. 3287.** **धर्म्मशर्म्माभ्युदयः ।** Substance, country-made paper, 14 × 5 inches. Folia, 99. Lines, 6 on a page. Extent, 1,700 Slokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Ghattu Babu. Appearance, decayed. Prose. Correct.

**Dharmaśarmábhyudaya.** An epic poem in 21 cantos on the birth of Dharma S'armá *alias* Jina. By Harichandra.

**Beginning.** श्रीनाभिसूनोश्चिरमङ्घ्रियुग्मनखेन्दवः कौमुदमेधयन्तु ।
यत्रानमन्नाकिनरेन्द्रचक्रचूडाग्रगर्भप्रतिबिम्बमेणः ॥
चन्द्रप्रभं नौमि यदीयभासा नूनं जिता चान्द्रमसी प्रभा सा ।
नोचेत् कथं तर्हि तदङ्घ्रिलग्नं नखच्छलाद्दिङ्कुटमभाषीत् ॥

दुरवरशोदधिमेव थाश्रां मुर्हमुंडरहृष्टखशाठपहाः ।
यं स्वर्गिणोऽनल्पगुणं प्रणेमुस्तनोतु नः शर्म स धर्मनाथः ॥ इत्यादि ।

End. अभजदथ विविधैर्वाकप्रस्नोपचारैः
प्रभुरिह हरिचन्द्राराधितो मोक्षलक्ष्मीम् ।
तदनु तदनुयायी प्राप्तपर्यन्तपूजो-
पचितसुकृतराशिः स्वं पदं नाकिलोकः ॥

Colophon. इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये एकविंशः सर्गः ॥ समाप्तोऽयं ग्रन्थः । (अतः परं कवेरस्य प्रशस्तिरेका वर्त्तते । सा च नितरां प्रलुप्ताक्षरतया नाधिगन्तुं शक्यते ।)

विषयः । प्रथमे सर्गे,—सज्जनस्तुतिदुर्जननिन्दाकीर्त्तनं । जम्बूद्वीपवर्णनं । कनकाद्रिवर्णनं । भारतवर्षवर्णनं । आर्य्यावर्त्तवर्णनं । उत्तरकोशलाख्यदेशवर्णनं । तत्र रत्नपुरनगरवर्णनं ।

द्वितीये सर्गे,—रत्नपुरपुरन्दरस्य सूर्य्यवंशीयनरपतेः महासेनस्य वर्णनं । तन्महिष्याः सुव्रताया रूपादिवर्णनं । नृपतेः पुत्रप्राप्तिचिन्तनवर्णनं । अथ प्राचेतसाख्यस्य दिव्यसुमेरुयानपालकमुखाद्रागमनसंवाददत्तान्तवर्णनं ।

तृतीये सर्गे,—परिकरसमेतस्य राज्ञो मुनिदर्शनार्थं गमनवर्णनं । वनवर्णनं । उद्यानप्राप्तिवर्णनं । मुनिवर्णनं । मुनिमहीपालयोः समागमवर्णनं । मुनिसमीपे राज्ञः पुत्रप्राप्तिचिन्तावर्णनं । भाविनः पुत्रस्य पूर्व्वजन्मविषये मुनिं प्रति राज्ञः प्रश्नादिवर्णनञ्च ।

चतुर्थे सर्गे,—धर्म्मनाथस्य पूर्व्वजन्मवृत्तान्तवर्णनमुखेन धातकीखण्डनामकद्वीपे वत्साख्यदेशवर्णनं । तत्र सुसीमाख्यनगरीवर्णनं । तदधिपतेः दशरथनृपस्य वर्णनं । तस्य वैराग्योदयवर्णनं । नृपं प्रति मन्त्रिमहाभ्याकमतानुकूल उपदेशः । राजकृतं तत्खण्डनञ्च । नृपतेर्वनगमनवृत्तान्तवर्णनं । तस्य तपस्यावर्णनं । स एव महासेनस्य नृपतेः पुत्रत्वेनावतरिष्यतीति कथनञ्च ।

पञ्चमे सर्गे,—महासेननृपतेः सभायां साईं लक्ष्म्या कासाञ्चिद्दिव्याङ्गनानामागमनवृत्तान्तवर्णनं । दिव्याङ्गनाकृतराजमहिषीसेवनवर्णनं । राजपत्न्याः स्वप्नदर्शनवृत्तान्तवर्णनं । महिष्या गर्भलक्षणादिवर्णनं ।

षष्ठे सर्गे,—माघशुक्लत्रयोदश्यां पुष्यनक्षत्रे धर्म्मनाथस्य जन्माभूदितिवर्णनं । इन्द्रादिकृतस्य महासेनकृतस्य च तज्जन्मोत्सवस्य वर्णनं ।

सप्तमे सर्गे,—सूतिकागृहस्थितायाः महिष्याः अङ्के मायाकल्पितमेकं शिशुं निधाय धर्म्मनाथमपहृत्य शची शक्राय समर्पयामास । शक्रोऽपि तमादाय सुरकुमारैश्च देवसेनासमेतो व्योमवर्त्मना सुमेरुपर्व्वतं जगामेतिवर्णनं । सुमेरुवर्णनं । तत्र देवसेनासन्निवेशवर्णनं । शक्रागमनादिवर्णनञ्च ।

अष्टमे सर्गे,—सुमेरौ मणिसिंहासने धर्म्मनाथस्य उपवेशनवर्णनं । धर्म्मनाथस्य अभिषेकवर्णन-

मुखेन क्षीरसमुद्रवर्णनं । इन्द्रादिकृततत्स्तुतिवर्णनं । धर्म्मनाथस्य पुनः मातुरङ्के अधिष्ठानवर्ण-नञ्च ।

नवमे सर्गे,—धर्म्मनाथस्य बाल्यवर्णनं । यौवनवर्णनं । यौवराज्यप्राप्तिवर्णनञ्च । विदर्भाधिना-थेन प्रतापराजेन स्वदुहितुः स्वयंवरे धर्म्मनाथानयनार्थं प्रेषितस्य दूतस्य आगमनवर्णनं । धर्म्मना-थस्य विदर्भगमनवर्णनं । पथि प्राप्ताया गङ्गाया वर्णनञ्च ।

दशमे, एकादशे- द्वादशे, त्रयोदशे च सर्गे,—विन्ध्यगिरिवर्णनं । षडृतुवर्णनं । पुष्पावचय-वर्णनं । नर्मदायां जलक्रीडावर्णनं ।

चतुर्दशे सर्गे,—सन्ध्यावर्णनं । अन्धकारवर्णनं । चन्द्रोदयवर्णनं । नायिकानां प्रसाधनवर्णनं । दूतीसंप्रेषणादिवर्णनञ्च ।

पञ्चदशे सर्गे,—पानगोष्ठीवर्णनं । रात्रिक्रीडावर्णनञ्च ।

षोडशे सर्गे—प्रभातवर्णनं । विदर्भदेशप्राप्तिवर्णनं । विदर्भदेशवर्णनं ।

सप्तदशे सर्गे—स्वयंवरवर्णनमुखेन राजकन्यया धर्म्मनाथो वृत इति वर्णनं । धर्म्मनाथस्य कुण्डिनपुरप्रवेशवर्णनं । नगरनारीविभ्रमवर्णनं । विवाहवर्णनं । वध्वा सह धर्म्मनाथस्य स्वपुरप्राप्तिवर्णनञ्च ।

अष्टादशे सर्गे,—रत्नपुरे महोत्सववर्णनञ्च । धर्म्मनाथपितुर्महासेनस्य वैराग्यवर्णनं । धर्म्मनाथं प्रति तत्कृतस्य नीत्युपदेशस्य वर्णनं । तस्य राज्याभिषेकवर्णनं । महासेनस्य वनगमनवर्णनं ।

ऊनविंशे सर्गे,—अनेकनृपतिभिः सह सुषेणस्य चित्रयुद्धवर्णनं ।

विंशे सर्गे,—पञ्चलक्षवर्षपर्य्यन्तं सम्यक् प्रजापालनं विधाय उल्कापातदर्शनेन धर्म्मनाथस्य वैराग्यप्राप्तिवर्णनं । विरक्तस्य तस्य तपस्यावर्णनं । ज्ञानप्राप्त्यादिवर्णनञ्च ।

एकविंशे सर्गे,—दिव्यसभामधिष्ठितस्य धर्म्मनाथस्य संक्षेपेण जिनसिद्धान्तवर्णनं । पश्चात्तु प्रशस्तिकीर्त्तनञ्च ।

---

**No 3288.** कर्पूरमञ्जरीप्रकाशः। Substance, country-made paper, 14 × 5 inches. Folia, 58. Lines, 6 on a page. Extent, 952 ślokas. Character, Nágara. Date, ? Place of deposit, Váhádurapura, Zillá Murshidábád, Sitánátha Bhaṭṭácharya. Appearance, decayed. Prose. Correct.

**Karpúramañjarí-prakáśa.** A commentary by Rájaśekhara on a Prákrit poem called Karpúramañjarí. By Vásudeva, son of Prabhákara Bhaṭṭa.

**Beginning** दशास्योपदेशाच्चिरं जानकीशं
कुम्भोपाख्यमानम्य घाटाह्वयानं ।

गणेशञ्च गण्डोल्लसद्भृङ्गसङ्गं
चरीचाङ्गसङ्गांशु गङ्गानरङ्गान् ॥
तातं प्रभाकरं नत्वा मातरं गोमतीमपि ।
कर्पूरमञ्जरीटीका वासुदेवेन तन्यते ॥

कर्पूरमञ्जर्य्याख्यनाटकारम्भे सूत्रधार आशीरूपां नान्दीं पठति भद्रमिति ।

अत्र च व्यासादय इत्यादौ सरस्वत्या इत्येतत्प्रभृतिषष्ठ्यन्तलोपक्रमभङ्गाभासेऽपि भवन्तित्यादि-प्रधानक्रियापदानां लोकमतप्रक्रमः शङ्कुः । तेन रीतिर्नाम शब्दगुणः । इत्यादि ।

**End.** आकाश इति ।
किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमपि चेतत् स्यादाकाशभाषितं ॥
इति भारतः ।

**Colophon.** इति श्रीमद्द्विजकुलदम्बिकाराविन्दसुन्दरपदद्वन्द्वकुन्दप्रतिमयशःप्रकरप्रखरक-ठोरकिरणकरप्रभप्रतिभप्रभाकारभट्टात्मजवासुदेवविरचिते कर्पूरमञ्जरीप्रकाशे चतुर्थं जवनिकान्तरं समाप्तं ।

विषयः । राजशेखरकृतप्राकृतभाषामयकर्पूरमञ्जर्य्यभिधानसट्टकस्य व्याख्यानम् ।

---

**No. 3289.** सञ्जीवनी । Substance, country-made paper, 14 × 5½ inches. Folia, 140. Lines, 8 on a page. Extent, 4,030 ślokas. Character, Bengali. Date, ? Place of deposit, Mírapura, Zillá Mursidábád, Yádavachandra Bhaṭṭáchárya. Appearance, new. Prose. Incorrect.

**Sanjíbaní.** A commentary on the Kumárasambhava of Kálidása. From canto 8 to 17. By Sítaráma, son of Lakshmaṇa Bhaṭa and Satí. This is a continuation of the work of the commentary of Mallinátha.

**Beginning.** शिरसा सकलं शशाङ्कमूर्त्तर्मिषितं विश्वतमङ्ककेन भूरि ।
गरलञ्च गलेन चिन्मयामो चरमङ्गाङ्करादिराजकन्यां ।
टीकासप्तसु मल्लिनाथकृतिना सञ्जीवनीसंज्ञिका
या सर्गेषु कुमारसम्भवमहाकाव्यस्य चक्रे पुरा ।
सैवैतद्वशिष्टदिक्प्रमितसर्गेषु विद्वन्मुदे
सीतारामकवीश्वरेण च यथाप्रज्ञं समापूर्य्यते ॥

नयपरिणीतमिरिजारत्नःकेलिमपि विवर्णयिषुस्तत्र भवान् कालिदासः अष्टमं सर्गमारभते । पाणिपीड़नविधेरिति । पाणिपीड़नं नाम षोड़शविधेषु संस्कारेषु कश्चित् संस्कारविशेषः । पीड़-यति यस्मिन्निति पीड़नं । इत्यादि ।

**End.** मल्लिनाथेष्टनं । स्वलक्षणम् ।

यं प्रासूत सुतं पुरा च जननी नाम्ना सुवीरेति या
ख्यातो यस्य बुधेन्द्रमस्तकमणिः श्रीलक्ष्मणाख्यः पिता ।
यद्वृत्तादद्वितीयं जगद्विजयते विद्वत्तया नैपुणं
तेनासौ रचिता कुमारविहृतिः सञ्जीवनी जीवदा ॥
संवत्सरेऽङ्काग्निपुराणतुल्ये नभस्यमासे वलक्षे दशे च ।
तिथावनङ्गस्य सजीववारे टीका कुमारस्य समापदेषा(?) ॥
— — — — — — ।

**Colophon.** इति श्रीपर्श्वमौकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसम्भवश्रीसीतारामकविविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये तारकासुरवधो नाम सप्तदशः सर्गः । समाप्तोऽयं ग्रन्थः ।

विषयः । कालिदासकृतकुमारसम्भवस्य अष्टमसर्गादारभ्य सप्तदशसर्गं यावत् मल्लिनाथरीत्यनुसारेण व्याख्यानम् ।

---

**No. 3290.** तत्त्वबोधविधायिनी, वा सम्मतिटीका । Substance, country-made paper, 13 × $5\frac{1}{2}$ inches. Folia, 910. Lines, 11—13 on a page. Extent, 14,332 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyatapausála. Appearance old. Prose. Incorrect. Sanskrit.

**Tatvabodhavidháyiní.** On Jain Philosophy, in describing which the author's great object is to refute the doctrines of the several systems of the Hindu Philosophy. By Abhayadeva Súri.

**Beginning.** (आदितः सप्तनिपत्राणि न विद्यन्ते । — — — यथागमः विधिः कश्चिन्नित्यः सर्वज्ञबाधकः । न च मन्त्रार्थवादानां तात्पर्य्यमवकल्प्यते ॥ यथागमेन सर्वज्ञवादोऽयमान्यसंश्रयात् । नृराकारप्रणीतस्य प्रामाण्यं मन्यते कथमित्यादितो येन दृष्टकालंत्यादिप्रयोगेणाभिहितो हेतुः । स व्यवहारनिषेधानुपलम्भमात्रनिमित्तो निरोधोऽन्यत्र प्रवर्तित इत्यत्रापि तन्निमित्तसद्भावात् प्रवर्तयितुं युक्तः । इत्यादि ।

**End.** एवंविधमुखाध्यासितस्य जैनवचनस्य सामायकादिबिन्दुसारपर्यन्तश्रिप्रा-योधेः कल्याणमस्त्विति प्रतिकरणसमाप्तावल्पमङ्गलमप्यादृत्यार्थं विशिष्टां क्षितिमाचेति ।

Colophon. इति तत्त्वबोधविधायिन्यां सम्मतिटीकायां तृतीयं काण्डं समाप्तम् ॥

इति कतिपयसूत्रव्याख्यया यन्मयाप्तं
कुशलमतुलमस्मात् सम्मतिर्भव्यसार्थैः ।
भवभयमभिभूय प्राप्यतां ज्ञानगर्भं
विमलममयदेवस्थानमानन्दसारम् ॥
पुष्यद्वाग्दानवादिद्विरदघनघटाकुम्भपीठ-
प्रध्वंसोद्भूतमुक्ताफलविशदयशोराशिभिर्यस्य तूर्णम् ।
गम्यं दिग्दन्तिदन्तज्वलनिचितपदं व्योमपर्य्यन्तभागात्
स्वल्पब्रह्माण्डभाण्डोदरनिविड़तरो + + ति संप्रतस्थे ॥
प्रद्युम्नसूरिशिष्येण तत्त्वबोधविधायिनी ।
तस्येषाभयदेवेन सम्मतेर्विवृतिः कृता ॥

विषयः । न्यायवैशेषिकसांख्यपातञ्जलमीमांसावेदान्तचार्व्वाकबौद्धादिमतनिरसनपुरःसरं सम्मतिसूत्रव्याख्यानम् ॥

---

**No. 3291.** आर्य्याशतकम् । Substance, country-made paper, 13 × 5 inches. Folia, 7. Lines, 7 on a page. Extent, 125 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Ghattu Bábu. Appearance, decayed. Verse. Incorrect.

**A'ryá-śataka.** A hymn in praise of Kámákhyá, a form of Dúrgá. By Múkakavi Sárvabhauma.

**Beginning.** कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥
काञ्चनकाञ्चीनिलयं करधृतकोदण्डबाणसृणिपाशम् ।
कठिनस्तनभरनम्रं कैवल्यानन्दकन्दमवलम्बे ॥
चिन्मितपक्ष्मपरिपोषणचिन्तामणिरेव काञ्चिनिलया मे ।
चिरतरसुचरितसुलभा चित्तं शिशिरयतु चित्सुधाधारा ॥ इत्यादि ।

**End.** जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते ।
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥
आर्य्याशतकं भक्त्या पठतामार्य्या कटाक्षेण ।
निःसरति वदनकमलाद्वाणी पीयूषधोरणी दिव्या ॥

**Colophon.** इति श्रीमूककविसार्वभौमकृतौ आर्य्याशतकं समाप्तम् ॥

**विषयः ।** काञ्चीपुराधिष्ठात्र्याः कामाक्ष्याः स्तुतिव्याजेन तद्रूपमाहात्म्यादिवर्णनम् ।

**No 3292** द्रव्यसङ्ग्रहसूत्रम्। Substance, country-made paper, 12 × 5 inches. Folia, 5. Lines, 8 on a page. Extent, 40 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Verse. Incorrect. Arddha-Mágadhí.

**Dravya-sañgraha-sútra.** A treatise on Jaina Metaphysics and salvation. By Nemichandra Siddhántadeva, who lived after the time of Bhoj Deva of Dhar.

**Beginning.** जीवमजीवं दव्वं जिणवरवसभेण जेण णिदिट्ठं ।
देविंदविंदवंदं वंदे तं सव्वदा सिरसा ॥
जीवो उव ओगमओ अमुत्ति कत्ता स देहपरिमाणो ।
भुत्ता संसारत्थो सिद्धो सो विस्ससोड्ढगइ ॥ इत्यादि ।

**End.** दव्वसंगहमिणं मुणिणाहा दोससंचय + दा सुदपुण्णा ।
सोधयंतु तणुसुत्तधरेणं णेमि चंदमुणिणा भणियं जं ॥

**Colophon** इति द्रव्यसङ्ग्रहसूत्रं समाप्तम् ।

विषयः । जीवाजीवादिषड्विधद्रव्यनिरूपणं । अत्र जीवस्य लक्षणादिविशेषणमुखेन चार्वाक बौद्धतार्किकादिमतखण्डनं । तत्र परमार्थतः लोकप्रमितासंख्येयदेशमात्रोऽपि व्यवहारेण जीवस्य देहपरिमितत्वकथनं । पञ्चविधास्तिकायनिरूपणं । अथ यथा अनन्तज्ञानदर्शनसुखवीर्य्यगुणचतुष्टयं सर्व्वजीवसाधारणम्, एवं रूपरसगन्धस्पर्शगुणचतुष्टयं सर्व्वपुद्गलसाधारणमितिनिरूपणं । पुद्गलादि-स्वरूपकथनं । आकाशादीनां लक्षणादिकथनं । आस्रवबन्धपुण्यपापादिनिरूपणं । क्षयोपशमादि-निरूपणं । संवरादिनिरूपणं । प्रसङ्गाद्ब्रह्मचर्य्यनिरूपणं । अथ लोकसंस्थानादिकथनं । तत्र ज्यो-तिर्लोकादिपरिमाणादिकथनञ्च । अथ संसारे पतन्तं जीवमुद्धृत्य देवेन्द्रादिवन्द्ये निरञ्जनामलसुखा-दिगुणलक्षणे मोक्षपदे धरतीति धर्म्मलक्षणप्रतिपादनं । क्षुत्पिपासादिरूपद्वाविंशतिविधपरीषह-निरूपणं । सामायिकादिचारित्रपञ्चकनिरूपणं । अथ मोक्षनिरूपणं । तत्र ध्यानध्येयध्यातृध्यानफ-लादिनिरूपणं । सम्यग्दर्शनज्ञानचारित्रनिरूपणं । गुरुनयनिरूपणं । मन्त्राष्टकनिरूपणं । अथ धर्मध्यानादिस्वरूपकथनं । सर्व्वोत्कृष्टसिद्धिरूपकथनञ्च ।

---

**No. 3293.** द्रव्यसङ्ग्रहवृत्तिः, वा ब्रह्मदेववृत्तिः। Substance, country-made paper, 15 × 6 inches. Folia, 84. Lines, 13 on a page. Extent, 2,639 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Prose. Slightly correct. Sanskrit.

**Dravya-sañgraha-vṛitti** ALIAS **Brahmadeva-vṛitti.** A gloss on the next preceding work. By Brahmadeva.

**Beginning.** प्रनम्य परमात्मानं सिद्धं त्रैलोक्यवन्दितं ।
स्वाभाविकचिदानन्दस्वरूपं निर्म्मलाव्ययं॥
शुद्धजीवादितत्त्वानां देशकञ्च जिनेश्वरं ।
द्रव्यसङ्ग्रहसूत्राणां वृत्तिं वक्ष्ये समासतः ॥

अथ मालवदेशे धारानामनगराधिपतिभोजदेवाभिधानके कलिकालचक्रवर्त्तिसम्बन्धिनः श्रीपाल-मण्डलेश्वरस्य सम्बन्धिन्याश्रमनामनगरे श्रीमुनिसुव्रतचैत्यालये शुद्धात्मद्रव्यसंवित्तिसमुत्पन्नसुखामृ-तरसास्वादविपरीतनारकादिदुःखभयभीतस्य परमात्मतत्त्वभावनोत्पन्नसुख + + रसपिपासितस्य भेदाभेदरत्नत्रयभावनाप्रियस्य — — — — — सोमाभिधानराजश्रेष्ठिनो निमित्तं श्रीनेमिचन्द्रसिद्धान्तदेवैः — — — — विरचितवृहद्द्रव्यसङ्ग्रहग्रन्थस्य—इत्यादि ।

**End.** मोक्षमार्गप्रतिपादकनामतृतीयाधिकार इत्यधिकारत्रयेणाष्टाधिकपञ्चाशत्-सूत्रैः श्रीनेमिचन्द्रसिद्धान्तदेवैर्विरचितस्य द्रव्यसङ्ग्रहाभिधानग्रन्थस्य सम्बन्धिनी ब्रह्मदेववृत्तिः समाप्ता ॥

**Colophon.** ग्रन्थसंख्या शत१७०० ।

विषयः । नेमिचन्द्रसिद्धान्तदेवकृतद्रव्यसङ्ग्रहसूत्रस्य व्याख्यानम् ॥

---

**No. 3294.** दानलीला । Substance, country-made paper, 14 × 4 inches. Folia, 8. Lines, 7 on a page. Extent, 126 ślokas. Character, Bengali. Date, ? Place of deposit, Váluchara, Jagadánanda Gosvámí. Appearance, fresh. Verse. Incorrect.

**Dánalílá.** A poem in praise of the benevolences of Krishṇa. By Mádhava Bhaṭṭa.

**Beginning.** अस्ति स्वस्तिकरी समस्तजगतां निर्वाणगर्वापहा
क्षौणीमण्डलमध्यभूषणमणिः काचित्पुरी माधवी ।
रम्या हृष्यतरङ्गिणीमधुकरी कर्म्मद्रुमोन्मूलनी
सत्यानन्दचिदात्मनोऽनरतवेच्छा(ऽनवरतस्वेच्छा)विहारस्थली ॥
स्निग्धच्छायनवप्रसूनविलसन्माधुर्य्यलोभभ्रमत्-
कालिन्दीपुलिनोपवर्त्तिपवनप्राप्तेयिमप्राश्रयम् ।
ब्रह्मेन्द्रादिसुरेन्द्रमग्नमहिमप्रेमैकलभ्यं परं

पूर्णब्रह्मरसोपिचारभवनं तत्राखिलं वृन्दावनं ॥ इत्यादि ।

**End.** कश्चित्कर्णाटविप्रावरसयसितिरभूद्विश्वासी द्विजन्मा
सोमैरेष्टा च येनोत्तरवयसि पुनर्भुक्तिश्चेत्य काशीं ।
गत्वाभ्यैर्मिर्वीवाससुख्यमपमविविमिः कीर्तिमाश्राप्य लोके
संन्यस्याशेषकर्माश्रमि पदमत्त नैति यस्मिन् मनोऽपि ॥
अजनिषत ततूजांस्तस्य षड् यः कनीयान्
अखिलगुणगरीयांस्तत्र यत्नेश्वराख्यः ।
अजनि च तनयोऽस्माद्दाक्षिदेवोऽस्य चाग्रा-
मगणितगुणधामा लक्ष्मणो माधवश्च ॥
आद्यो वंशावतंसः सुरगुरुसदृशः प्रज्ञया विष्णुदेवः
— — — — — — ।
तस्यासंख्तनयास्त्रयोऽपि सुधियो रामः कृपाचन्द्रमाः
श्रीमान् विश्वपतिश्च माधव इति ख्याता गुणाम्भोधयः ।
तत्राकारि कनीयसा सुकृतिना चेतश्चमत्कारकं
काव्यं कृष्णकृपाभिलाससमनसा श्रीदानलीलाभिधं ॥
वसुकररसेन्दुवर्षे पक्षे शुक्ले चतुर्दश्यां ।
चन्द्रे तपसि कृतेयं वारीयाभे सुराशि गुरजाभे ॥

**Colophon.** इति श्रीमद्वृन्दावनचन्द्रचरणारविन्दमकरन्दास्वादमुदितमनोमधुकरेण भट्टश्रीमन्माधवेन कृतं दानलीलाभिधं काव्यं समाप्तं ।

विषयः । श्रीकृष्णस्य दानलीलावर्णनव्याजेन तस्य रूपादिवर्णनम् ।

---

**No. 3295. स्तुतिशतकम् ।** Substance, country-made paper, 13 × 5 inches. Folia, 10. Lines, 8 on a page. Extent, 210 ślokas. Character, Nágara. Date, ? Place of deposit, Válucbara, Ghaṭṭu Bábu. Appearance, old. Verse. Generally correct.

**Stuti-śataka.** A century of verses in praise of the goddess Kámákhyá. By Múkakavi.

**Beginning.** पाण्डित्यं परमेश्वरि स्तुतिविधौ नैवाश्रयन्ते गिरां
वैरिञ्चान्यपि गुम्फनानि विगलद्गर्वाणि शर्वाणि ते ।
स्तोतुं त्वां परिफुल्लनीलनलिनश्यामाक्षि कामाक्षि मां

बाचालीकुरुत तथापि नितरां कल्पाद्भुतोदरः ॥
तापिच्छस्तवकत्विषे तनुभृतां दारिद्र्यमुद्राद्विषे
संसाराख्यतमोमुषे पुररिपोर्वामाङ्कलीलाजुषे ।
कम्पातीरमुपेयुषे कवयतां जिह्वाकुटीं जग्मुषे
विश्वत्राणपुषे नमोऽस्तु सततं तस्मै परज्योतिषे ॥ इत्यादि ।

**End.** इमं परवरप्रदं प्रकृतिपेशलं पावनं
परापरचिदाकृतिप्रकटनप्रदीपायितम् ।
स्तवं पठति नित्यदा मनसि भावयन्नम्बिकां
जपैरलमलं मखैरधिकदेहसंशोषणैः ।

**Colophon.** इति श्रीमूककविसार्वभौमविरचितं स्तुतिशतकं सम्पूर्णम् ।

**विषयः।** काञ्चीपुराधिष्ठात्र्याः कामाख्याः रूपादिवर्णनमुखेन माहात्म्यादिवर्णनम् ॥

---

**No. 3296.** अर्थदीपिका, वा श्रावकप्रतिक्रमणसूत्रवृत्तिः। Substance, country-made paper, 12 × 5 inches. Folia, 208. Lines, 13 on a page. Extent, 6,744 ślokas. Character, Nágara. Date, Sm. 1652. Place of deposit, Váluchara, Panchájata-pausála. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Artha-dípiká.** A gloss on a Jaina Sútra entitled *S'rávaka-pratikramaṇa.* It treats of the duties of S'rávakas, and illustrates the subject by a number of anecdotes. By Ratnaśekhara Gaṇi.

**Beginning.** जयति सततोदयश्रीः श्रीवीरजिनेश्वरोऽभिनवभानुः ।
कुवलयबोधं विदधति यस्य विलासो विभोर्यस्य ॥
श्रुतजलजलधीन् बहुविधस+प्रतिदधाने गणधरेन्द्रान् ।
श्रुतदेवताश्च विश्रुतगुणैर्गरिष्ठान् निजगुरूंश्च ॥
— — — — — ।

इह तावत् श्रमणसामयिकेन प्रतिक्रमणमनुष्ठेयं । सामायिककर्त्ता च साक्षात् गुरोरभावस्थाप-नाचार्य्येस्थापना पूर्व्वं विधेया । सर्व्वस्यापि स्वानुष्ठानस्यैवमेवागमेऽभिहितत्वात् । शून्यानुष्ठान-स्य च फलशून्यत्वापत्तेः । इत्यादि ।

**End.** एवां कालविध्यादि मतकृतविचिकोत्सुचार्थं पार्श्वं ॥
— — — — — — ।

यषां श्रीसुगुरूणां प्रसादतोऽब्दे वसुवसुविश्वमिते ।
श्रीरत्नशेखरसूरिरिमामकृत कृतिमुदे ॥

— — — — — — ।

एतस्यां टीकायामनुष्टुभामर्थदीपिकानाम्न्यां ।
षट्‌षष्टिशतीचत्वारिंशद्युक्तानुमिता ॥

**Colophon.** समाप्ता चेयमर्थदीपिकानाम्नी श्रावकप्रतिक्रमणसूत्रवृत्तिः । समाप्ता । संवत्
१९५९ ।

विषयः । श्रावकप्रतिक्रमणाभिधानजैनसूत्रस्य उपाख्यानकोपनयपुरःसरं व्याख्यानम् ॥

---

**NO. 3297.** **श्रावकदिनकृत्यम्** । Substance, country-made paper, 12 × $4\frac{1}{2}$ inches Folia, 55. Lines, 6 on a page. Extent, 694 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, fresh. Verse. Generally correct. Ardha Mágadhí.

**S'rávaka-dinakritya.** A summary of the duties of S'rávakas. Anonymous. Contents: Daily prayer and other religious duties of Jaina householders. Obeisance—Worship—Differences between worshipping with material substances and mental worship. Hymn and obeisance to the *Chaitya*—Contemplation or *prabhábana* of Chaitya. Ceremonies to be observed on first entering a *Chaitya*. Plastering a Chaitya with sandal paste—Merits of repairing dilapidated temples of Jina. Prohibition to taste anything offered to Jina. Prohibition of unfair dealings in trade. Rectitude in law courts. Consequences of associating with bad men. The mode of offering gifts. Superiority of the merits of the grant of land to that of the grant of any other thing. Gift of beds, &c. Merit of encouraging the virtuous. The merits of the Suris. H.

**Beginning** वीरं न मे अवति लोयभाणुं विसुद्धनाणं सुमणाभिणाणं ।
वुच्छामि सड्ढाणदिणस्स किच्चं जिणंदचंदाणय आगमाओ ॥
नवकारेण विबोधो अणुसरणं सावओ वयाइं मे ।
जोगो चिइवंदणमो पच्चक्खाणं च विहिपुव्वं ॥ इत्यादि ।

**End.** नाणस्स सव्वाविइणस्स किच्चं जं किंचिपुण्णं मए + जियंति ।
तेणं तु भव्वाणभवसवाणं निच्चाणदुक्खाणभवेउ + सो ॥

चयाणमाणेण जिणुनमाणं मयं मेत्तत्थं मए विदुभमेणं ।
जं मे वितरं सुह तम्म सुमं तं भवभमिच्छामि दुक्कडं ति ॥

Colophon. इति श्रीश्रावकदिनकृत्यं समाप्तम् ।

विषयः । जैनस्यावश्यकानामाह्निकादिकृत्यनिरूपणं । तत्र आदौ नमस्कारविधिकथनं । पूजादिविधिकथनं । तत्र द्रव्यपूजाभावपूजादिभेदनिरूपणं । चैत्यवन्दनदण्डककथनं । प्रभाक्मादि-विधिकथनं । चैत्यप्रवेशविधिकथनं । चम्दनादिविधिकथनं । वन्दनविधिकथनं । श्रवणादिविधि-कथनं । जिनभवनजीर्णोद्धारादिफलकथनं । देवद्रव्यभक्षणादिनिषेधकथनं । अथ कूटवाणिज्यादि-करणनिषेधकथनं । व्यवहारशुद्धिकथनं । कुमित्रादिसंसर्गफलकथनं । दानविधिकथनं । वस्त्रान्न-पानादिदानापेक्षया भूमिदानस्य फलाधिक्यकथनं । शय्यादिदानविधिकथनं । धार्मिकेषु वात्स-ल्यादिकरणमाहात्म्यादिकथनं । सूरिगुणादिकथनञ्च ।

---

**No. 3298. उपदेशमालाप्रकरणम्।** Substance, country-made paper, 12 × 5 inches. Folia, 24 Lines, 10 on a page. Extent, 767 ślokas. Character, Nágara. Date, ? Place of deposit, Válucbara, Pancháyata-pausála. Appearance, old. Verse. Incorrect. Arddha-Mágadhí.

**Upadeśamálá-prakaraṇa.** A treatise on salvation. By Dharmadása Gaṇi. A man scorched by the glowing embers of sin, becomes anxious for *mukti*, and the only way leading up to *mukti* is the performance of austerities. That way is explained in the cult preached by Ṛishabha and others, and it consists of dispassion and aversion to worldly objects. The present work enumerates and explains what these duties and austerities are, and treats of *Áchára*. H.

**Beginning.** नमिऊण जिणवरिंदे इंदनरिंदच्चिए तिलोयगुरु ।
उवएस मालमिणमो वुच्छामि गुरुवएसेणं ॥
गजचूडामणिभूओ उसभो वीरो तिलोय सिरितिलउ ।
एगो लोगाइच्चो एगो चक्खूति हुयणस्स ॥
संवच्छरमुसभ जिणो छम्मासा वद्धमाणजिणचंदो ।
इय विहरिया निसरण जएज्ज उवमाणेणं ॥ इत्यादि ।

**End.** चक्खरमत्ताहीणं जंचिय पढियं अयाणमाणेणं ।
तं खमउ मज्झ सव्वं जिणवयणविणिग्गया वाणी ॥

**Colophon.** इति श्रीधर्मदासगणिविरचितं श्रीउपदेशमालाप्रकरणं समाप्तं ।

विषयः। अथ अधर्म्माङ्गारदाहेन नितरां परिक्लिष्टस्य तदुपशमनाय निर्व्वेदमापन्नस्य मोक्षसुखाभिषेकाय साधीयसीं मतिं समुपलभ्य मोक्षद्वारभूतेषु तपःकर्म्मसु सुतरां प्रवृत्तिर्जायते। एवं तत्र प्रवर्त्तमानेन ऋषभादिजिनेन्द्रोक्तोपदेशक्रमेण पापकर्म्मादिभ्यो विरतेन सततः अहिंसादिधर्म्मानुष्ठानं विधेयमिति प्रपञ्चनम्। तत्र तत्र तपःकर्म्मनिरूपणमुखेन आचारादिधर्म्मनिरूपणञ्च।

---

**No. 3299.** योगविन्दुः। Substance, country-made paper, 12 × 5 inches. Folia, 28. Lines, 10 on a page. Extent, 655 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Paṇcháyata-pausála. Appearance, fresh. Verse. Generally correct. Sanskrit.

**Yogavindu.** A treatise on the Jain Yoga. Anonymous. Contents: Nature, sanctity and importance of *Yoga*, which stands in close connection with *mukti*. It is called *yoga* (योजन) because it leads to *mukti*. A discussion on the nature of Átmá or soul, in the course of which the opinions of Máheśvara and other philosophical schools are refuted. Connection of Karma with Átmá. Nature of bondage. Jaina synonym of átmá is *purusha*. The attributes of the *purusha*. Various kinds of *Yoga*, and their definitions. Sacredness of *Yoga*. It produces transcendental knowledge. Patience, mercy, chastity, good conduct &c. are auxiliaries to *Samádhi*. The *Yoga* systems of Patanjali and others have nothing to do with *mukti*. A refutation of such doctrines as *sabhába-váda* and others. *Yoga* consists of perfect vision. Devotion as preached by the Jainas can alone lead to *mukti*. *Yama, Niyama* and so on are auxiliaries to *mukti*. Refutation of such doctrines as the existence of a supreme being—Isvara. Thoughts on *maitri* &c. Various kinds of *yoga*. Want of necessity for the assumption made by some as to the two kinds of *Yoga*. Conscious and unconscious—*Samprajnáta* and *Asamprajnáta*. The merits of performing various kinds of *Samádhi*. Refutation of the theories of the Mímáñsakas and of the Sáñkhyas. The nature of *mukti*. A refutation of the various theories of other schools of philosophy. H.

**Beginning** नत्वाद्यन्तविनिर्मुक्तं शिवं योगीन्द्रवन्दितं।
योगविन्दुं प्रवक्ष्यामि तत्त्वसिद्ध्यै महोदयं॥

सर्व्वेषां योगशास्त्राणामविरोधेन तत्त्वतः ।
सन्नीत्या स्थापकञ्चैव मध्यस्थांस्तद्विदः प्रति ॥
मोक्षहेतुर्यतो योगो भिद्यते न ततः क्वचित् ।
साध्याभेदात्तथाभावे तूक्तिभेदो न कारणं ॥
मोक्षहेतुत्वमेवास्य किन्तु यत्नेन धीधनैः ।
सद्गोचरादिसंशुद्धं मृग्यं स्वहितकाङ्क्षिभिः ॥ इत्यादि ।

End. एवमाद्यत्र शास्त्रज्ञैस्तत्त्वतः स्वहितोद्यतैः ।
माध्यस्थमवलम्ब्योच्चैरालोच्यं स्वयमेव तु ॥
आत्मसंस्मृत्यनुकम्प्यापि योगशास्त्रसमार्णवात् ।
आचार्य्यहरिभद्रेण योगविन्दुः समुद्धृतः ॥
समुद्धृत्यार्ज्जितं पुण्यं यदेनं शुभयोगतः ।
भवान्ध्यविरहात्तेन जनः + योगलोचनः ॥

Colophon. इति श्रीयोगविन्दुः परिपूर्णः ।

विषयः । मोक्षनिमित्तत्वेन योगस्य अभ्यर्हितत्वकथनं । मोक्षेण सह योजनात् योग इति नि-र्व्वचनकथनञ्च । आत्मस्वरूपकथनमुखेन साङ्ख्यादिमतनिरसनं । आत्मना कथं कर्म्मसंयोग इति निरूपणं । बन्धनिरूपणं । जैनमतेनात्मनः पुरुष इति संज्ञाकथनं । पुरुषकारादिनिरूपणं । अथ योगस्य तात्त्विकातात्त्विकसानुबन्धनिरनुबन्ध-सास्रवानास्रवसंज्ञाकथनं । क्रमेण तात्त्विकादीनां लक्ष-णादिकथनं । योगमाहात्म्यकीर्त्तनं । योग एव सर्व्वथा सेवनीय इति कथनं । योगस्य अतीन्द्रियज्ञा-नजनकत्वकथनं । धृतिक्षमाब्रह्मचर्य्यसदाचारादीनां तत्राप्युपयोगित्वकथनं । पातञ्जल्यादियोगशास्त्र-स्य अनभ्यर्हितत्वकथनं । प्रसङ्गेन स्वभाववादादिनिरसनं । सम्यग्दर्शनादिरूप एव योग इति निरू-पणं । जैनशास्त्रभक्तिरेव मुक्तिदूतीतिकथनं । यमनियमादीनां तदुपयोगित्वकथनं । अन्याभिमते-श्वरवादादिखण्डनं । मैत्र्यादिचिन्तनविधिकथनं । भावनाध्यानसमतावृत्तिसंक्षययोगचयकथनं । वृत्तिसंक्षय-रूपयोगकीर्त्तनं । अन्याभिमतेन सम्प्रज्ञातासम्प्रज्ञातनामभेदे हेतुकथनं । सर्व्वसमाधिफलकीर्त्तनं । अथ मीमांसकादिमतनिरसनं । सांख्यादिमतखण्डनञ्च । मुक्तिनिरूपणं । तत्र अपरदर्शनमतखण्डनञ्च ॥

---

**No. 3300.** योगविन्दुवृत्तिः । Substance, country-made paper, 12 × 5 inches. Folia, 70. Lines, 15 on a page. Extent, 352 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pausâla. Appearance, fresh. Prose. Generally correct. Sanskrit.

**Yogavindu-vritti.** A gloss on the *Yogavindu* of the Jainas.

**Beginning.** यद्योगचिन्तामणितोऽप्यधीतो येनाधिगम्यो जगतः पवित्रं ।

स योगिहृन्मारकवन्दनीयो योगतादृशवताद्धि घनं जयो नः ॥

सुधाबिन्दोरिवानन्दमानन्दमुपचिन्वतः ।

योगबिन्दोः समासेन टिप्पनेषा विधीयते ॥

गुरूपदेशो न च तादृगस्ति मतिर्न वा काचिदुदाररूपा ।

तथापि योगप्रियतावशेन यत्नस्तदाभ्यासकृते ममायं ॥

तत्र चेदमादिमं सूत्रं । नत्वेत्यादि । नत्वा अभिवन्द्यादिं प्रथमभावो इन्मपर्यवसान । विनिर्मुक्तं विरचितं । किमित्याह शिवं सकलोपद्रवकलाविकलं । इत्यादि ।

**End.** योगलोचनः । यथावस्थितवस्तुपरिज्ञानावन्ध्यकारणत्वाद्योग एव लोचनमपि यस्य स तथा । विरह इति च भगवतः । श्रीहरिभद्रसूरेः स्वप्रकरणाङ्कप्रद्योतक इति ।

**Colophon.** समाप्तेयं योगबिन्दुटिप्पनिः ॥

विषयः । जैनयोगबिन्दुप्रकरणस्य व्याख्यानम् ।

---

**No. 3301.** षड्दर्शनसमुच्चयटीका । Substance, country-made paper, 11½ × 5 inches Folia, 45. Lines, 12 on a page. Extent, 1,282 ślokas. Character, Nágara Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Prose. Incorrect. Sanskrit.

**Shaḍdarśana-samuchchaya-ṭiká.** A commentary on the *Shaḍdarśana-samuchchaya*, being an epitome of the six schools of Hindu Philosophy. By Haribhadra Súri.

**Beginning.** ॐ नमः श्रीसर्वज्ञाय ।

सज्ज्ञानदर्पणतले विमलेऽत्र यस्य ये केचिदर्थनिवहाः प्रकटीबभूवुः ।

तेऽद्यापि भान्ति कलिकालजदोषभस्मप्रोद्दीपिता इव शिवाय स मेऽस्तु वीरः ॥

जैनं यदेकमपि बोधविधायिवाक्यमेवं स्तुतिः पवयती भुवि येन चक्रे ।

चारित्रमाप्य वचनेन महत्तरायाः ।

श्रीमान् स नन्दतु चिरं हरिभद्रसूरिः ॥

— — — — — ।

ज्ञातं विधाय संक्षेपरुचिसत्त्वानुकम्पया ।

टीका विधीयते स्पष्टा षड्दर्शनसमुच्चये ॥

इह श्रीजिनशासनप्रभावनाविर्भावकप्रभोदयभूरियशाश्चतुरंगमतप्रकरणोपलतजिनधर्मो भगवान् .

श्रीहरिभद्रसूरिः षड्दर्शनप्रमाणपरिभाषाखप + • + + + + + षर्णो निगद्यते अभिधीयतेऽत्र सम्बन्धः । इत्यादि ।

End. न च, पूर्व्वभवादिसम्बन्धशुभाशुभकर्म्मविपाकः । वेद्यसुखदुःखानुबन्धः स अपेक्ष इत्यर्थः । संयोगास्तु तत्रिभिरावश्रीमद्गुनिगुणः ।

Colophon. इतः अधिकम् ।

विषयः । हरिभद्रसूरिकृतषड्दर्शनसमुच्चयस्य व्याख्यानम् ।

---

No. 3302. षडावश्यकवृत्तिः । Substance, country-made paper, 12 × 5 inches. Folia, 99. Lines, 15 on a page. Extent, 4,410 ślokas. Character, Nágara. Date, Sм. 1721. Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Prose and verse. Incorrect. Sanskrit.

**Shaḍávaśyaka-vṛitti.** A commentary on the *Shaḍávaśyaka-sútra,* or maxims of good conduct for Jains. Anonymous.

Beginning. श्रीमन्नाभिकुलाब्जबोधनहते मार्त्तण्डबिम्बायते
यल्लोके व्यवहारसाररचनाचातुर्य्यधुर्य्यायते ।
धर्म्मं येन चतुर्व्विधं प्रथमतः श्रीसङ्गमाचरते
स श्रीनाभिभवाङ्गजो वितनुते भव्यात्मनां मङ्गलं ॥
— — — — — — ।
श्रीवर्द्धमानं चरमं जिनेन्द्रं सिद्धार्थभूपालकुलप्रदीपं ।
भवार्णवोत्तारणपोततुल्यं नमाम्यहं वन्तपदपद्मरम्यं ॥
— — — — — — ।
सुप्रसन्नमनाः सन्तु (?) सन्त × सुविचक्षणाः ।
ग्रन्थोऽयं यत्प्रसादेन विस्तारं प्राप्यते जने ॥

अपि च । प्रथमं सकलसामायिकस्य सूत्रं श्रीजिनशासनस्य सार एकादशाङ्गचतुर्दशपूर्व्वोद्धारः सदैव मासत + नपरमेष्ठिनमस्कारः । सचाय । नमो अरिहंताणमिति ।

End. श्रीधर्म्मसूरिपादपङ्कजमेव सूरिर्व्वरोऽभूदधिपक्ष्मनामा ।
शिष्यस्तदीयो मतिमाभिधानः कथाश्चकारोत् पाठकराजवल्लभः (?) ।
— — — — — — ।
षडावश्यकरम्येषा वार्त्तिकस्था कथानिसां ।

कृता च स्तोकबन्धेन सन्नाधावबोधतये (?) ।
यावत् सूर्यशशी यावत् यावज्जिनेन्द्रशासनं (?) ।
तावद्ग्रन्थकथाप्येषा वाच्यमाना बुधव्रजैः ॥

**Colophon.** इति श्रीधर्मघोषगच्छे वादीन्द्रश्रीधर्मसूरीन्द्रसन्ताने सूरपदे श्रीमदी-
मिलकसूरिशिष्यपाठकश्रीराजवल्लभकृतैषा चतुर्विंशतिका ।

विषयः । चतुर्विंशतिकाभिधानजैनस्तवस्य व्याख्यानमुखेन पद्येन कथानकीर्त्तनम् ।

---

**No. 3303.** गणधरसार्द्धशतकम् । Substance, country-made paper, 12 × 5 inches. Folia, 11. Lines, 8 on a page. Extent, 210 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, fresh. Verse. Correct.

**Gaṇadhara-sárddha-śataka.** An eulogium of Rishabhasena, surnamed *Gaṇadhara,* the principal disciple of the first Jina named Rishabha. Similar eulogia of Agitasvámí, the principal disciple of the last Jina, as well as of Gautama Svámi and others, the disciples of Varddhamána Jina. By Jinadatta Súri.

**Beginning.** गुणमणिरोहण गिरिणो रिसहजिणंदस्स पढममुणिवइणो ।
सिरि उसह(भ)सेणगणहारिणो पणवयामि पए ॥
अजिआइ जिणिं दाणं जणियाणं दाण पणय पाणीणं ।
धुणिमो दीवमणीणं गणहारीणं गुण गुणगुणीणं ॥
सिरिवद्धमाणवरनाणचरणदंसण मणीण जलनिहिणो ।
तिहुअणपहुणो पडिहमणीय सगुणो समणो गौमो ॥ इत्यादि ।

**End.** ते मह सव्वे परमो वयारिणो वंदणारिहा गुणणो ।
कय सिव सुह संपाए ते सिं पाए सया वंदे ॥
जिणदत्तगणिमण सयं संपत्तं सोमचंदविंबं ।
भव्वेहिं भणिज्जंतं भवरविसंतावमवहरउ ॥

**Colophon.** इति श्रीगणधरसार्द्धशतकं समाप्तं ।

विषयः । ऋषभनामधेयादिजिनेन्द्रस्य प्रधानशिष्यः गणधरशब्दभाक् कश्चित् ऋषभसेननामा आसीत् । तस्य गुणकथनव्याजेन स्तोत्रकथनं । एवं शेषजिनेन्द्रस्य प्रधानशिष्याणां गणधराणाम ·

जिनस्वामिप्रमुखानां तथा वर्द्धमानजिनेन्द्रस्य प्रधानशिष्याणां गणधराणां गौतमस्वामिसुधर्म्मस्वामि-प्रभृतीनां गुणादिवर्णनं ।

---

**No. 3304. गणधरसार्द्धशतकलघुवृत्तिः ।** Substance, country-made paper, 12 × 5 inches. Folia, 32. Lines, 15 on a page. Extent, 1,598 ślokas. Character, Nágara. Date, SM. 1651. Place of deposit, Váluchara, Panchâyata-pausála. Appearance, fresh. Prose. Correct. Sanskrit.

**Gaṇadhara-sárddha-śataka-laghu-vṛitti.** Scholia on the *Ganadhara-sárdha-s'ataka*. By Sarvarája Gaṇi.

**Beginning.** कल्याणं वः प्रतन्यात् प्रथमजिनपतिर्विश्वविश्वैकपूज्यो
यस्य श्रीपुण्डरीकः प्रथमगणधरः पञ्चकोटिसमेतः ।
श्रीमच्छत्रुञ्जयाद्रौ सकलरिपुजयात् प्राप्तसत्कीर्त्तिपूरः
प्रेयःश्रेयःसुकन्यापरिणयनमनो ब्रह्मचारी स्वयञ्च ॥

श्रीविक्रमपुरश्रीमहावीरदेवव्याख्यानभूतप्रेतनिरसनश्रीमदुज्जयिनीयोगिनीचक्रप्रतिबोधकुमार्गनि-रोधश्रीमद्धर्म्मविजपाठकसप्तवर्णावत्थानप्रतिवादिसिंहसिंहनादभञ्जविधानश्रीत्रिभुवनगिरिदेशनियति तपश्चरणयतिवारणनिवारणश्रीपार्श्वनाथ — — श्रीजिनदत्त सूरिः — — — गणधरसार्द्धशतकाभिधं प्रकरणं चिकीर्षुः — — — प्रतिपादयितुं प्रथममिमां गाथामाह । गुणमणीति । व्याख्या । श्रीऋषभसेनगणधारिणः । ऋषभसेननामगण-धरस्य । इत्यादि ।

**End.** नानालब्धिनदीपरिवृढश्रीपुण्डरीकादिम-
ज्ञानध्यानचरित्रसद्गुणगणाधाराम्बुधारेश्वराम् ।
स्तुत्वा यन्मयका शुभं निमितः संप्रापि पुण्यं ततो
भव्यौघः प्रतनोतु सिद्धिकमलापाणिग्रहेणोत्सवं ॥

**Colophon.** इति श्रीगणधरसार्द्धशतकलघुवृत्तिः समाप्ता ।

विषयः । जिनदत्तसूरिकृतगणधरसार्द्धशतकप्रकरणस्य व्याख्यानम् ।

---

**No. 3305. मन्त्रार्थदीपिका ।** Substance, country-made yellow paper, 14 × 8½ inches. Folia, 248. Lines, 7 on a page. Extent, 7,378 ślokas. Character, Bengali. Date, ? Place of deposit, Simuliyá. Post Málipotá, Zilla Nadíyá. Kálíkṛishṇa Gosvámí. Appearance, old. Prose and verse. Generally correct.

**Mantrártha-dípiká.** Elaborate expositions of the mystic meanings of mantras or rituals used in religious ceremonies. By Govinda Nyáyavágísa.

**Beginning.** देवश्रीरघुनाथपादयुगलध्यानाप्तसामोदिना
मन्त्राणामखिलार्थदुर्घटतया संक्षेपतो यत्नतः ।
मन्त्रोद्धारकुलोपचाररचनैर्नत्वा गुरुन्सादराद्-
गोविन्देन विधीयते सुमनसो मन्त्रार्थसन्दीपिका ॥
गोविन्दन्यायवागीशभट्टाचार्य्यविनिर्म्मितां ।
मन्त्रार्थदीपिकां धीरा भावयध्वं सुनिर्म्मलां ॥
सन्ति यद्यपि भूयांसो मन्त्रार्थानां प्रकाशकाः ।
तथापि सारमालम्ब्य किञ्चिदत्र विधीयते ॥
सतारराशिकोष्ठानामनुकूलान् भजेन्मनून् ।
मनूनिति शारदातिलकवचनात् ।

**End.** किरीटकेयूरहारकुण्डलमत्स्यचक्रगदाम्भोजचक्रपीताम्बरधरश्रीवत्साङ्कितवक्षः-स्थलश्रीभूमिसहितात्मकचोभिन + + दीप्तकराय सहस्रादित्याभाय नमः ।

**Colophon.** इति मन्त्रार्थदीपिका समाप्ता ।

विषयः । शाक्तशैवादिपञ्चोपासकानां हिताय विविधमन्त्रोद्धारमन्त्रादिनिरूपणं । तत्र स्वरचक्रनिरूपणं । नामचक्रं । ऋणिधनिचक्रं । नक्षत्रचक्रं । राशिचक्रं । नाडीचक्रं । अकथहचक्रादिनिरूपणं । एषां संख्यानादिकथनञ्च । मन्त्रदोषपरिहारोपायकथनं । वैष्णवशैवादि-मन्त्रेषु क्रमेण नक्षत्रकोष्ठादिशुद्धेरावश्यकताकथनं । वकारभेदनिरूपणं । आसननिरूपणं । वर्जनीयासनकथनं । मन्त्रविशेषे आसनविशेषे फलाधिक्यकथनं । कूर्मचक्रसंख्यानादिकथनं । काली-ताराप्रभृतीनां नानाविधयन्त्रनिरूपणं । तत्र तत्र सर्वतोभद्रादीनां परिमाणकथनञ्च । यन्त्रादिनाशे प्रायश्चित्तविधानं । भैरवीमन्त्रविवरणं । भुवनेश्वरीयन्त्रादिनिरूपणं । मातङ्गीयन्त्रं । त्रिपुरायन्त्रं । इन्द्राणी-महालक्ष्मीप्रभृतीनां यन्त्रादिनिरूपणं । एवं शैववैष्णवादियन्त्रनिरूपणं । सामान्यतो यन्त्रसंस्कारकथनं । देवप्रतिष्ठाविधिः । तत्कालादिनिरूपणं । पुरश्चरणविधानं । तत्कालादिनिरूपणं । ग्रहणकाले श्राद्धं पुरश्चरणं वा कर्त्तव्यमित्याशङ्कायां श्राद्धाधिकारिणा श्राद्धं कर्त्तव्यं न पुरश्चरणं किन्तु श्राद्धं कृत्वा होमादिकं कार्य्यं श्राद्धानधिकारिणा तु पुरश्चरणं कर्त्तव्यं । "श्राद्धदानानुरोधेन यदि जापं त्यजेन्नरः ।" इत्यस्य चारम्भपुरश्चरणविषयत्वादितिनिरूपणं । पुरश्चरणे भोजननियमः । जपलक्षणं । शेषपात्रपूजाविधिः । जपादौ रुद्राक्षधारणावश्यकता । वर्णमालानिरूपणं । करमालानिरूपणं । मणिरत्नादिमालाकथनं । महाशङ्खमालाकथनं । माला-

संस्कारः। ध्यानप्रकरणे मातृकाकाली-श्मशानकाली-गुह्यकाली-तारा-त्रिपुरासुन्दरी-भुवनेश्वरी-मातृकाघटितपञ्चाशन्मन्त्रभैरवी-चैतन्यभैरवी-वज्रभैरवी-षट्कूटभैरव्यादि-प्रचण्डचण्डिका-छिन्नमस्ता-बगला-मातङ्गी-मातृमातङ्ग्यादि-उच्छिष्टचाण्डाली-लक्ष्मी-महालक्ष्मी-त्वरिता-रेणुकाशबरी-नित्या-त्रिपुटा-दुर्गा-जयदुर्गा-शूलिनी-नवदुर्गा-महिषमर्द्दिनी-कात्यायनी- इन्द्राक्षी-मङ्गलचण्डी-सरस्वती-षोडशवर्णात्मकसरस्वती-हंसवागीश्वरी-वाचस्पतिसरस्वती-पारिजातसरस्वती-गणेश-महागणपति-विरिगणपति-शक्तिगणपति-हेरम्ब-त्र्यम्बक-गणेशादि-लक्ष्मीविनायक-शिव-दक्षिणामूर्त्ति-मञ्जुघोष-महानीलकण्ठ-चिन्मय-गरुड-वानरमन्त्रादि-अघोरास्त्र-पाशुपतास्त्र-क्षेत्रपाल- चण्डेश्वर-सूर्य्य-चन्द्र-अन्नपूर्णा-कर्णपिशाची- सुरसुन्दरी-योगिनी-मनोहरणयोगिनी-कनकवतीयोगिनी-रतिसुन्दरीयोगिनी-पद्मिनी-योगिनी-नटिनी-रागिणी-श्रीविष्णु-गोपाल-सम्मानगोपालादि-राम-सीता-हयग्रीव-नृसिंह-वराह-वामन-वासुदेव-नारायण-लक्ष्मीवासुदेवादीनां ध्यानकथनं। गायत्रीप्रकरणे मन्त्रविशेषे गायत्री-निरूपणं। प्रातरादिषु कालेषु गायत्रीध्यानकथनं। कलौ तन्त्रोक्तविधानेन देवादिपूजाकर्त्तव्यता। दीक्षाविधिः। पञ्चोपासकानां मन्त्रादिकथनं। तत्र तत्र ऋष्यादिनिरूपणं। सर्व्वत्र पूजनप्रयोगकथनञ्च। होमविधिः। संक्षेपदीक्षापद्धतिः। शवसाधनप्रकरणं। वेतालादिसिद्धि-प्रकरणं। चतुःषष्ठ्युपचारादिकथनं। राधामन्त्रादिनिरूपणं। किरीटादिमन्त्रकथनञ्च। अत्र शेषभागे पत्रसंख्या नास्ति।

---

**No. 3306.** तात्पर्य्यतरङ्गिणी वा मनोरमा। Substance, country-made paper, 13 × 3 inches. Folia, 21. Lines, 8 on a page. Extent, 920 ślokas. Character, Bengali. Date, ? Place of deposit Śántipura, Kálídása Vidyávágíśa. Appearance, old. Prose. Incorrect.

**Tátparya-taraṅgiṇí** ALIAS **Manoramá.** A gloss on the drama of *Prasanna-rághava* of Jayadeva. By Raghunandana. The MS. is a mere fragment, containing only the first Act of the drama.

**Beginning.** ब्रह्मविष्णुशिवैर्नित्यं सेवितं × महाप्रभुं।
ज्योतिर्म्मयं चिदानन्दं गोविन्दं तमहं भजे॥
यस्य चाङ्के स्थिता गौरी वदने यस्य भारती।
तमादिपुरुषं वन्दे जगदानन्दमीश्वरं॥
सौमित्रिर्दक्षिणे यस्य वामे यस्य च जानकी।
चिदानन्दं जगन्नाथं रामचन्द्रमहं भजे॥
ज्योतिर्म्मयौ चिदानन्दौ ब्रह्मादीनां स्तुतिक्षमौ।

तां वन्दे जगतां धात्रीं × + ॐ शिवप्रियां ।
योऽयं देवान् नमस्कृत्य टीकां चक्रे मनोरमां ।
बालानां पाठनार्थाय प्रसन्नराघवस्य च ॥
( भगवतीमं हरिं नत्वा पूर्वस्य लयं प्रभुं ।
प्रसन्नराघवस्यार्थं वक्ति श्रीरघूनन्दनः ॥)
इह खलु सकलमस्य इत्यादि ।

**End.** इति श्रीप्रसन्नराघवटीकायां तात्पर्य्यतरङ्गिण्यां प्रथमोऽङ्कः । + × × × बन्धूकेति बन्धाः सीतायाः अधरः बन्धूकबन्धुः बिम्बोष्ठमिति यावत् । इतः छिन्नभावात् परिशेषवाक्यं नास्ति ।

**विषयः ।** जयदेवमिश्रकृतप्रसन्नराघवनाटकस्य द्वितीयाङ्कस्य कियदंशं यावद्व्याख्यानं ।

---

**No. 3307.** अलङ्कारशेखरः । Substance, Foolscap paper, 13 × 5 inches. Folia, 36. Lines, 8 on a page. Extent, 1,100 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagísa. Appearance, new. Prose and verse. Correct.

**Alaṅkára-śekhara.** An elaborate treatise on Rhetoric. By Keśava Miśra. It was written under the auspices of Mahárája Mánikya-chandra.

**Beginning.** प्राचाम् कमोदरीणां राधानयनाम्बुधर्व्वसं ।
तेजस्तमालनीलं शरदागतवारिपङ्कजं वन्दे ॥
स्वप्रकाशचिदानन्दमयाय परमात्मने ।
अविद्यातिमिरध्वान्तभास्कराय नमाम्यहं ॥
ग्रन्थाः काव्यकला विनाय विविधा ये यत्र पूर्व्वं मया
ते तर्कार्थवसंश्रयव्ययनिभिः शक्याः परं वेदितुं ।
इत्यालोच्य धुरा मदाश्रयनृपादारविन्दश्चवन्-
मञ्जीरध्वनिकोऽप्यसौऽयमधुना प्रस्तूयते प्रक्रमः ॥
आसीत् प्रत्यर्थिपृथ्वीरमणकमलिनीचन्द्रचेतमालाथः
कीर्त्तिभाजतृणमर्त्त्याम्बरकुमुदवनीयामिनीजीवनाथः ।
राजश्राजन्यमौलीमुकुटमणिनखप्रांशुराजपादपीठः

प्रोद्यत्साम्राज्यलक्ष्मीशिथिलितभुजयो रामचन्द्रोऽवनीन्द्रः ॥

÷ + • + + + + + ॥

क्षीराम्भोधेः शशीव द्युतिरिव वदनाद्वेधसो रामचन्द्रा-
दस्मादुद्यत्प्रतापः समजनि सुमना धर्म्मचन्द्रो नरेन्द्रः ।
यस्याद्यापि प्रसन्नस्मितसुभगमुखाः स्विद्यदुद्यत्कपोला
रोमाञ्चारम्भभव्याखिलद्रयुवतयो यस्य गायन्ति कीर्त्तीः ॥

+ + + + + + + ॥

तस्मादजायत समस्तगुणाभिरामो माणिक्यचन्द्र इति राजकचक्रशक्रः ।
प्रत्यर्थिभूपतिपरिस्फुरराज्यलक्ष्मीवल्लीसमाक्रमसुरभीकृतपाणिपद्मः ॥
काव्यालङ्कारपारङ्गममतिरखिलक्ष्माभृतां चक्रवर्त्ती
सर्व्वेषामस्तु काव्ये मतिरतिनिपुणेत्याशयं संनिवेश्य ।
वेदान्तन्यायविद्यापरिचयचतुरं केशवं संनियुज्य
श्रीमन्माणिक्यचन्द्रः क्षितिपतितिलको ग्रन्थमेनं विधत्ते ॥ इत्यादि ।

End. तर्कप्रौढमतिः प्रशस्तकवितावल्लीवसन्तोत्सवः
कोषव्याकरणप्रपञ्चचतुरोऽलङ्कारपारङ्गमः ।
श्रीमत्केशवमिश्रमद्भुतगुणावासं नियुज्य स्वयं
चक्रे शक्रसमः प्रबन्धमनघं माणिक्यचन्द्रो नृपः ॥

Colophon. इति श्रीमहाराजाधिराजश्रीमन्माणिक्यचन्द्रकारिते अलङ्कारशेखरे न्यायाचार्य्यकेशवमिश्रविरचिते विश्रामरत्नं ॥

समाप्तश्चायमलङ्कारशेखरः ।

विषयः। प्रथमे उपक्रमरत्ने,—काव्यलक्षणं। काव्यस्वरूपविचारप्रसङ्गेन मम्मट-वाभट-भोजादीनां मतकथनं। काव्यफलनिरूपणं। काव्यहेतुनिरूपणं। संस्कृत-प्राकृत-पैशाच-मागधभेदेन तस्य चतुर्व्विधत्वकथनं। गौडी-वैदर्भी-मागधीनां रीतीनां लक्षणादिकथनं। श्लोक-चूर्णक-कर्भक-उत्कलभेदादुक्तेश्चातुर्व्विध्यकथनं। मुद्रालक्षणं। पदमुद्रादिकथनं। अभिधाशक्ति निरूपणं। लक्षणा। व्यञ्जना। उत्तममध्यमाधमकाव्यनिरूपणं।

२ये, दोषरत्ने,—दोषलक्षणं। कष्ट-अप्रयुक्त-सन्दिग्ध-व्यर्थ-अश्लील-अप्रतीत-असाधु-अवाचक-भेदात् अष्टविधपददोषनिरूपणं। न्यून-विसन्धि-व्याकीर्ण-समाप्त-पुनरात्त-भग्नक्रम-भग्नयति-भग्नच्छन्दः—वाच्यगर्भ-अरीतिमत्-अविसृष्ट विधेयांश-समुदायार्थ-वर्ज्जित-विरुद्धमतिकृद्भेदेन द्वादशविधवाक्यदोषनिरूपणं। असमर्थसमासो दोषान्तरमिति गोवर्द्धनाचार्य्यमतकीर्त्तनं। विरस-व्याहत-ग्राम्य-खिन्न-हीनोपम-अधिकोपम-असदृशोपम-देशादिविरोधिभेदादष्टविधवाक्यार्थदोषनिरूपणं।

३ ये, गुणरत्ने,—गुणलक्षणं। गुणानां शब्दार्थगतत्वकथनं। संक्षेप-उदात्त-प्रसाद-उक्ति-समाधिभेदेन पञ्चविधशब्दगुणनिरूपणं। भाविकत्व-सुशब्दत्व-पर्य्यायोक्ति-सुधर्म्मिताभेदेनार्थगुणस्य चतुर्व्विधत्वनिरूपणं। उक्तानामेव गुणानां विषयाविषयादिभेदात् तद्दोषत्वरूपत्वेनैवेषकगुण-निरूपणं।

४ र्थे, अलङ्काररत्ने,—अलङ्कारलक्षणं। शब्दालङ्कारः। चित्रं। वक्रोक्तिः। लाटानुप्रासः। छेकानुप्रासः। गूढं। श्लेषः। प्रहेलिका। प्रश्नोत्तरं। यमकञ्च। चतुर्द्दशविधमाथमर्थालङ्कार-निरूपणं। अन्येषां यथायथमत्रैवान्तर्भावकथनं। तत्र उपमालक्षणं। वाक्यार्थोपमा। अतिशयो-पमा। श्लेषोपमा। निन्दोपमा। अद्भुतोपमा। विपर्य्ययोपमा। संशयोपमा। नियमोपमा। लोपमा। विक्रियोपमा। समभिव्याहारोपमा। रूपकलक्षणं। विरुद्धरूपकं। समस्तरूपकं। व्यस्त-रूपकं। रूपकरूपकं। श्लिष्टरूपकं। उत्प्रेक्षा। उत्प्रेक्षाव्यञ्जकशब्दाः। समासोक्तिः। अपह्नुतिः। समाहितं। स्वभावोक्तिः। सारः। दीपकं। मालादीपकं। सहोक्तिः। अन्यदेशत्वं। विशेषोक्तिः। विभावना। अन्यमतेन व्यतिरेककथनं। आक्षेपकथनञ्च।

५ मे, वर्णकरत्ने,—योषिद्वर्णनप्रकारकीर्त्तनं। तत्र चन्द्रकला-चम्पकदाम-शिरीषकुसुम-विद्युत्-तारा-कनकलता-दमनकमत्र-काञ्चनयष्टि-दीपादिभिः सह कामिनीशरीरस्य सादृश्यवर्ण-नीयता, गोरोचना-स्वर्ण-विद्युत्-हरिद्रा-वराटक-चम्पक-हेमकेतकीप्रभृतिभिः सह तनुद्युतेः सादृश्यं तमः-शैवाल-समुद्र-वर्ह-भ्रमर-चामर-यमुनावीचि-नीलाश्म-नीलाब्ज-मेघादिभिः केशस्य सादृश्यं। ललाटस्य अर्द्धचन्द्रहेमपट्टिकाभ्यां सादृश्यं। भ्रुवोः वल्ली-स्मरधनुः-तरङ्ग-भृङ्गाली-पल्लवैः सादृश्यं। कपोलस्य चन्द्र-मुकुराभ्यां सादृश्यं। मुखस्य चन्द्र-कमल-दर्पणादिभिः सादृश्यं। नासयोः तिलकुसुम-कामतूणीराभ्यां सादृश्यं। कण्ठस्य कम्बूसमत्वं। नयनयोः मृगनयन-कमल-कुमुद-कमलपत्र-चाप-खञ्जन-चकोर-केतक-भृङ्ग-कामबाणादिभिः साधर्म्यं। अधरोष्ठयोः प्रवाल-बिम्ब-बन्धूक-नवपल्लवादि-भिः सादृश्यं। दन्तानां मुक्ता-माणिक्य-नामरत्न-दाड़िमी-कुन्दकोरक-तारादिभिः सादृश्यं। वाण्याः हंस-भृङ्ग-कोकिलस्वरादिभिः सादृश्यं। एवं बाहु-नख-स्तनादीनां सादृश्यनिरूपणं। पुरुषशरीर-वर्णनप्रकारकीर्त्तनं। अत्र गोवर्द्धनाचार्य्यादीनां मतकथनं। सादृश्यव्यञ्जकशब्दादिनिरूपणं।

६ ष्ठे, कविसम्प्रदायरत्ने,—कविसम्प्रदायस्य त्रिविधत्वकथनं। वर्णनीयेषु नियमकथनं। महा-काव्यादौ वर्णनीयविशेषनिरूपणं। पुर-गिरि-कानन-समुद्रादौ वर्णनीयनिर्देशः। श्वेत-रक्त-कृष्णत्वेन वर्णनीयविशेषकथनं। अङ्काभिधानं।

७ मे, कविसामर्थ्यरत्ने,—चित्राद्युपकारिशब्दादिनिरूपणं। समस्यापूरणादिकं। तदुपाय-कीर्त्तनं।

८ मे, चित्रामरत्ने,—रसस्य व्यापकत्वकथनं। रसलक्षणं। रसविभागः सम्भोगशृङ्गारः। अनू-ढ़ा-स्वीया-परकीया-वारवनिताभेदात् नायिकायाः चतुर्व्विधत्वकथनं। खण्डिता। उत्कण्ठिता।

प्रोषितपतिका। अभिसारिका। कलहान्तरिता। वासकसज्जा। विप्रलब्धा। स्वाधीनभर्तृका च। सामान्यनायकलक्षणं। धृष्टशठादीनां लक्षणं। विप्रलम्भशृङ्गारलक्षणं। पूर्व्वरागः। मानः। प्रवासः। करुणः। देवादिविषया रतिः। हास्यरसः। करुणः। वीरः। भयानकः। वीभत्सः। रौद्रः। अद्भुतः। शान्तः। रसानामविरोधविरोधकथनं। स्थायिभावाः। रत्यादीनां लक्षणं। उद्दीपनविभावः। आलम्बनादयश्च। हेला-विच्छित्तिप्रभृतयः। निर्व्वेदादयः। रसदोषनिरूपणं। दिव्यादिव्यादिनायकचेष्टादिवर्णनं। शृङ्गारवीरादौ अनुकूलवर्णच्छन्दआदिनियमनं।

---

**No. 3308.** शुद्धिनिर्णयः। Substance, Palm-leaf, 10 × $1\frac{1}{2}$ inches. Folia, 103. Lines, 5 on a page. Extent, 1,793 śloka. Character, Bengali. Date, Sm, 1416. Place of deposit, Guptipáḍá. Khudiráma Nyáyabhúshaṇa. Appearance old. Prose and verse. Correct.

**S'uddhinirṇaya.** A digest of the laws relating to religious purifications. By Váchaspati Miśra. The work treats of religious impurities of all kinds, including those arising from death, birth and other domestic causes. Neglect of ceremonial rules, and the ceremonies required for the purification thereof. It treats also of the purification of crude materials to adapt them for religious purposes. Chapters are also given on moral offences and their expiations.

ॐ नमो गणेशाय।

**Beginning** प्रणम्य परमात्मानं श्रीवाचस्पतिशर्म्मणा।
आलोच्य मुनिवाक्यानि शुद्धिनिर्णय उच्यते॥
प्रायणे जनने शुद्धिरशुद्धिनियतक्रियाः।
वर्णसङ्करशुद्धिश्च व्यवस्था शुद्धिरिष्यते॥
विदेशस्थस्य बालस्य नारीणां प्रायणे तथा।
गर्भस्रावापस्त्नूनां शुद्धयस्तदनन्तरं॥ इत्यादि।

**End.** त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥

अदृष्टमशुचितया न स्वयं प्रमितं निर्णिक्तं प्रक्षालितं ब्राह्मणानामिति॥

**Colophon.** इति महामहोपाध्यायमिश्रश्रीवाचस्पतिविरचितः शुद्धिनिर्णयः समाप्तः। संवत् १४१६ चैत्रामावास्यायां।

विषयः। वक्तव्यनिर्देशः। शुद्धिपदार्थनिरूपणादिकं। प्रायश्चशुद्धिः। ब्राह्मणप्रवलक्षणं।

सपिण्डादिनिरूपणं । अविद्याद्यशौचं । वर्णसङ्कराशौचं । जननशुद्धिः । पुत्रापुत्रपत्तिनिमित्तकाशा-स्पृश्यत्वं । अशौचयोः कार्य्याकार्य्यनियमकथनं । अशौचिसकाशात् पात्राद्यग्रहणनिरूपणं । वर्णसन्नि-पातशुद्धिनिरूपणं । अशौचसङ्करः । विदेशस्थाशौचकथनं । पारिभाषिकविदेशस्थाशौचकथनं । बालाद्यशौचं । स्त्र्यशौचं । गर्भस्रावाशौचकथनं । मृत्युविशेषाशौचकथनं । सपिण्डाद्यशौचं । मातृबान्धवादिनिरूपणं । निर्हारादिशुद्धिः । अस्नानाशौचं । अनशौचिनः सपिण्डादिकरूपं । निर्हरणादिनिरूपणं । साग्निदाहादिविधिः । पर्णनरदाहविधिः । उदकदानविधानं । अनुदकदायिनः । उदकदानार्हनिरूपणं । सर्पादिनिहतेभ्यो नारायणबलिदानविधानं । यतीनामौर्द्धदेहिकक्रिया । तत्र प्रयोगः । विष्णुबलिविधानं । त्रयोदश्यां योगेश्वरपूजा । शोकापनोदनं । प्रेतस्पर्शिनां प्रवेशनविधानं । नीरक्षीरदानविधिः । पिण्डदानविधानं । अस्थिसञ्चयः । अशौचान्तकृत्यं । क्षौरादिविधानं । देहशुद्धिनिरूपणं । प्रक्षालनादिशुद्धिः । मद्यादिनिरूपणं । नाभ्यधःपुरीषाद्युपस्पर्शे विशेषकथनं । करव्यतिरेकेण अङ्गे विशेषकथनं । इन्द्रियेषु विशेषः । रजकादिस्पर्शे शुद्धिनिरूपणं । निष्ठीवादौ शुद्धिनिर्णयः । स्नानशुद्धि । चण्डालादिस्पर्शे शुद्धिकथनं । निधुवनशौचं । मानुषास्थ्यादिस्पर्शशौचं । चैत्यादिस्पर्शस्नानं । अनुदकमूत्रादित्यागे शुद्धिकथनं । मार्जारादिस्पर्शे विशेषः । आतुरस्नानं । भूतशुद्धिः । जलशुद्धिः । शवादिदूषितवाप्यादिशुद्धिः । तैजसादिशुद्धिः । शूद्रभुक्तपात्रशुद्धिः । रजस्वलाद्युपहतशुद्धिः । कांस्यशुद्धौ विशेषः । फलपात्रशुद्धिः । मृण्मयपात्रशुद्धिः । चर्म्मादिशुद्धिः । वस्त्रादिशुद्धिः । निर्य्यासगुडादिशुद्धिः । शाकमूलादिशुद्धिः । मध्वादिशुद्धिः । यज्ञपात्रशुद्धिः । पुस्तकशुद्धिः । कृष्णाजिनादिशुद्धिः । आसनादिशुद्धिः । धान्यादिशुद्धिः । पक्वान्नशुद्धिः । लशुनाद्युपहतान्नादिशुद्धिः । तत्र वायसाद्युपहते । म्लेच्छभाण्डस्थितद्रव्यशुद्धिः । तीर्थविवाहादौ स्पर्शास्पर्शे दोषाभावकथनं । स्वभावशुद्धिः । स्त्रीणां व्यभिचारादौ त्यागच्छेदनिषेधः । तत्र बलात्कारादौ विशेषः । कर्म्मकाले नाभ्यधःस्पर्शनिषेधः । व्यभिचारिणीनां योषितां प्रायश्चित्तनिषेधः । अदृष्टशुद्धिकीर्त्तनञ्च ।

---

**No. 3309. प्रसन्नराघवनाटकम् ।** Substance, country-made paper, inches ? Folia, ? Lines, ? on a page. Extent, ? ślokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose and verse. Correct.

**Prasannarághava Náṭaka.** A dramatic composition on the career of Ráma from the time of his marriage to the fall of Rávana. By Jayadeva.

**Beginning.** चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ।

भालेष्वञ्जनभूषो लिखन्ति युगपद्द्वये पुष्पवर्णावली:
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥

अपि च,—

आकर्ण्य मुरजिन्मुखेन्दुमधुरोन्मीलन्नवन्माधुरी
गौरोद्गानमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः ।
लीलाकल्पितमेघनादविभवो यः कुम्भकर्णव्यथा-
दायी दानवदन्तिनां दशमुखं दिक् चक्रमाक्रामति ॥

अन्यच,—

नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णन-
प्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः ।
सन्नोधं मधुकैटभौ सकवचस्तेषं सुतामम्बुधेः
सोत्प्रासप्रणयं सरोजवसतिं पृच्छन् हरिः पातु वः ॥

\+ \+ \+ \+ \+ \+ \+ सूत्र ।

स्फुटमस्ति प्रसन्नराघवं नामेति ।

\+ \+ \+ \+ × कः पुनरस्य

कविः । सूत्र । सप्रणयकोपं,—

विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति ।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः ॥

अपि च,—

लक्ष्मणस्येव यस्यास्य सुमित्रागर्भजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भ्रमायते मनः ॥ इत्यादि ।

End. आयन्नामविरामरामचरितक्रीडाभिरामाः सता-
मुन्मीलन्नवमालिकाविरचितस्रग्दामरम्या गिरः ।
याः कण्ठेऽपि निवेश्य पेशलधियो रोमाञ्चलीलाङ्किताः
कान्ताबाहुलताविलासमखिलास्तेषात् क्षणं मन्वते ॥
इति निष्क्रान्ताः सर्वे ।

Colophon. इति श्रीजयदेवविरचिते प्रसन्नराघवनाम्नि नाटके सप्तमोऽङ्कः समाप्तः ।
समाप्तश्चायं ग्रन्थः ।

विषयः । परिणयादारभ्य रावणवधोत्तरमयोध्यायां प्रत्यागमनपर्य्यन्तं रामचरितमवलम्ब्य-विरचितोऽयं ग्रन्थः ।

तत्र प्रथमाङ्के,—रङ्गभूमिं प्रविष्टस्य दाक्षायणस्य मधुरप्रिय-प्रियालापयोरालापावर्णनेन, 'बालरावणयोरपि कर्णाश्रितं विश्रान्तोऽयं सीतास्वयम्बरवृत्तान्तः' इति सूचना । मञ्जीरकनूपुरकाभ्यां स्वयम्बरागतानां नृपतीनां प्रशस्तिवर्णनादिकं । 'निर्व्वीरमुर्व्वीतलमिति' वैतालिकवाक्यमाकर्ण्य क्रुद्धस्य दशाननस्य सौधशिखरगतां सीतां सखीभ्यां सह चित्रपटमालोकयन्तीमवलोकयतो बाणासुरेण समं विवादवर्णनं ।

२ये,—भिक्षुतापसभूमिकयोराक्षसयोरन्योन्यं संवादेन रामकृतताड़कादिवधसूचनं । वसन्तवर्णनं । चण्डिकायतनमागच्छन्तीं सह सखीजनेन जानकीं समीक्षमाणेन रामेण तद्रूपातिशयवर्णनं । तयोरन्योन्यमनुरागरञ्जितयोश्चेष्टादिवर्णनं । सन्ध्यावर्णनञ्च ।

३ये,—कुब्जवामनयोः कौतुकवर्णनं । रामलक्ष्मणाभ्यां सार्द्धं विश्वामित्रस्य प्रवेशमुखेन प्रभातवर्णनं। शतानन्दस्य अभिनयः । विश्वामित्रजनकयोः परस्परमाप्यायनं । नयनानन्दजननं रामरूपं निरूपयतः सीरध्वजस्य प्रीत्यतिशयवर्णनादिकं । परशुरामसन्देशकथनार्थं कस्यचिन्मुनेः प्रवेशः । धनुर्भङ्गः ।

४र्थे,—नेपथ्ये ध्रुवा गीतिः । जामदग्न्य-दाक्षायणयोरभिनयः । रामपरशुरामयोः संवादः । लक्ष्मणस्य कौतुकं । तस्य भार्गवं प्रति सोल्लुण्ठनोक्तिः । परशुरामेण राममनोरञ्जनञ्च ।

५मे,—गङ्गायमुनयोरभिनयः । ताभ्यां सह सरय्वाः संवादेन रामस्य वनप्रवासादिवृत्तान्तसूचनं । अयोध्यातो रामनिर्व्वासनसमये कौशल्यादीनां रामादीन् प्रति शिक्षादानकथनं । कलहंसस्य अभिनयेन रामादीनां वनगतवृत्तान्तवर्णनं । तत्र शूर्पणखानिग्रहादिकथनं । गोदावरीभर्त्तुरस्य सागरस्य प्रवेशेन सीताहरणवृत्तान्तसूचनं । तुङ्गभद्रया तेषां पुरतः सुग्रीवस्य राज्याभिषेकादिकथनञ्च ।

६ष्ठे,—विरहविधुरस्य रामचन्द्रस्य वैक्लव्यवर्णनं । लक्ष्मणकृततत्समाश्वासनञ्च । विद्याधरोपनीतमिन्द्रजालकं तत्त्वतोऽजानतो रामस्य तत्र सीताप्रतिकृतिमवलोकयतश्चेष्टावर्णनं । किञ्च तत्र त्रिजटामायाग्रस्तया सीतया तत्पुरतो निजवृत्तान्तकीर्त्तनं । नेपथ्ये हनूमतो लङ्काप्रवेशादिसूचनं । कुतेजितसीतानुरागस्य रावणस्य अशोकवनं प्रविश्य सामादिप्रयोगेणापि तच्चित्तप्रसादमलभमानस्य "किमतः परं कालक्षेपेण तदधुना सत्वरं मम करे कपालपात्रमर्पयतां येनास्याः कण्ठरुधिरेण कालिकामर्च्चयामीति" विकटाक्षराक्षसप्रसारितकरतलस्य 'अये न्यस्तं न कपालमेतत् किन्तु शिर एव नूनमक्षयकुमारस्येति' कथयतो मूर्च्छादिवर्णनं। सीतया अङ्गारमेव अशोकतरुचितारचितपञ्चरात्रप्रपञ्चं । हनूमता सीतायाः समीपे रामादिप्रवृत्तिकथनं । नेपथ्ये तत्कृतलङ्कादाहनसूचनं ।

७मे,—पुलस्त्यशिष्यकरालकयोरभिनयेन रावणहतविभीषणनिग्रहसूचनं। चन्द्रानिलादि-हतरावणपरिचर्य्या। प्रहस्तकेन सह दशाननस्य चित्तविनोदनचित्रदर्शनं। तत्र सागरकूलस्थित-कपिकुल-सेतुबन्धादिदर्शनावसरे प्रविष्टाया मन्दोदर्य्या उत्कण्ठादिवर्णनं। नेपथ्ये मेघनादकुम्भक-र्णादिवधसूचनं। विद्याधरमिथुनाभ्यां रामरावणयोः समरसंवादवर्णनं। सीतालक्ष्मणसुग्रीवविभीषणादिभिः सह रामस्य प्रवेशेन सन्ध्यादिवर्णनं। पुष्पकारोहणेन अयोध्यागमनाभिनयः। प्रभातवर्णनञ्च।

---

**No 3310.** पुराणसारः। Substance, country-made paper, 19×3 inches. Folia, 277. Lines, 9 on a page. Extent, 14,196 ślokas. Character, Bengali. Date ? Place of deposit, Government of India. Also Málipotá, Post Málipotá, Zilá Nadíyá, Kásináth Bhattáchárya. Appearance, very old. Verse, correct, some part incorrect.

**Purána-sára.** An abstract of the eighteen great Puráṇas, treating principally of their historic portions. By Rájá Rudra Ráya *alias* Rudra S'armá.

**Beginning.** नारायणं भवमहार्णवकर्णधारं कारुण्यपूर्णजलधिं कलधौतवर्णं।
सर्गस्थितिप्रलयमूलममूलमेकं केयूरकौस्तुभविभूषणमानतोऽस्मि॥
श्रीनन्दनन्दनपदद्वितयारविन्दं वन्दे पुरन्दरपुरःसरवन्द्यवन्द्यं।
आनन्दकन्दमतनोदरविन्दजोऽपि यल्लीलया भुवनसृष्टिवितानमेनं॥
यद्दानन्दामन्दात्मजचरणलाभात् सुरधुनी
धुनीतेऽघं यस्यां त्रिपुरमथनस्य प्रणयिणी।
स्वयं वाणी साक्षादनुदिनविनोदी द्विजगणो
जयत्येका धन्या त्रिजगति नवद्वीपनगरी॥
रराज तत्र द्विजराजतेजा द्विजो भवानन्द इति क्षितीन्द्रः।
ननन्द तन्नन्दन एव आर्य्यः पूतः प्रजापालनमुख्यकार्य्यः॥
तातेऽतिभक्तो द्विजदेवरक्तो गोपालरायस्तनयस्ततोऽस्य।
दुष्टप्रशास्ताखिलशिष्टगोप्ता शिवाश्रयी वाङ्निलयो दयालुः॥
असौ यशोधाम रमाभिरामः श्रीमान् + + राघवराय आसे।
+ + + + +
+ + + + +॥

अपि च।

अधीनीताऽनीतिः श्रितविबुधरीतिः क्षितिपतिः
\+ \+ \+ श्रीवृन्दाभवममवनीदेवकुलपाः ।
सदादामोद्भूतावनिमिलिखद्दैन्यो मधुरवाक्
गुणग्रामैक + + द्विषदमधिग+ति मच+ ॥
एकत्रोत्तमधर्म्मशास्त्र+तस्तोत्रादिशुश्रूषया
संदृष्ट्वाखिलसार+पिरकरं नानापुराणादिमः ।
ग्रन्थं नाम पुराणसारमखिलामोदाय मोक्षप्रदं
श्रीमद्राघवरायसूनुरकरोत् श्रीचन्द्रशर्म्माचिरात् ॥

End. भविष्ये,—इतिहासपुराणानि + + + + + + + + । यः करोत्यौर्द्धदेहिकं । ——————लिलेख सुमतिर्गोविन्दरामः कृती ॥

Colophon. यथादृष्टमित्यादिना दोषास्तु मानुसन्धेयाः ।

(अत्र शेषपत्रस्य अर्द्धखण्डितत्वात् परिसमाप्तिसूचकं वाक्यं न सम्पूर्णं लब्धं ।)

विषयः । सर्व्वेषां पुराणानां सारमाकलय्य सङ्कलितोऽयं ग्रन्थः । तत्र आदिसृष्टिवर्णनं । कालपरिमाणादिकथनं । युगादिमानकथनं । ब्रह्मण उत्पत्तिकथनादिकं । देवदेवीनामुत्पत्त्यादिकथनं । विश्वनिर्णयः । चतुर्द्दशमनूनां वंशविस्तारादिकथनं । मन्वन्तराणि । देवानां राज्ये नियोगकथनं । सूर्य्यवंशादिवर्णनं । भुवनकोषवर्णनं । भूगोलवर्णनं । पर्व्वतविशेषेषु देवानां स्थानकथनं । विशेषेण भारतखण्डवर्णनं । कूर्म्मनिवेशकथनं । कुरुकिम्पुरुषवर्षादिवर्णनं । ज्योतिश्चक्रवर्णनं । पञ्चविकल्पकीर्त्तनं । तत्र तिथ्यादीनां स्वरूपादिकथनं । चन्द्रक्षयवृद्धिकथनं । पृथ्वीच्छायाया राहुत्वानत्वकथनं । स्वर्गवर्णनं । इन्द्रसभावर्णनं । यमसभावर्णनं । वरुणसभावर्णनं । कुबेरसभावर्णनं । ब्रह्मसभावर्णनं । सप्तपातालवर्णनं । देवोत्पत्तिकारणकीर्त्तनं । दैनन्दिनप्रलयवर्णनं । प्राकृतप्रलयवर्णनं । आत्यन्तिकप्रलयवर्णनं । युगपरिमाणकथनादिकं । भविष्यवर्णनं । कलिधर्म्मकथनं । युगधर्म्मव्यवस्था । अष्टाविंशतिव्यासकथनं । वेदविभागादिकथनं । ब्रह्मचर्य्याद्याश्रमधर्म्मनिरूपणं । वर्णाश्रमाचारकथनं । (अत्र मन्वादीनां वचनोपन्यासः ।) षड्विधस्नाननिरूपणं । गुरुनिरूपणं । दिवाकृत्यनिरूपणं । रात्रिकृत्यकथनं । षोडशदिनपर्य्यन्तं ऋत्वभिगमने प्रत्येकं कन्यापुत्रयोः शुभाशुभकथनं । कर्त्तव्याकर्त्तव्यनिरूपणं । निषिद्धद्रव्याणि । वानप्रस्थधर्म्मकथनं । यतिधर्म्मनिरूपणं । गायत्रीजपादिप्रकारकीर्त्तनं । ब्रह्मनिरूपणं । विष्णुमाहात्म्यकीर्त्तनं । भक्तिमहिमा । स्मरणकीर्त्तनादिनिरूपणं । विष्णुशिवयोरभेदकथनं । विष्णुपूजाक्रमविधिः । वैशाखादिद्वादशमासेषु विष्णुपूजनविधानादिकं । वैष्णवपीठमालाकथनं । शिवमाहात्म्यकीर्त्तनं । शैवपीठमालाकथनं । शिवलिङ्गपूजामाहात्म्यादिकथनं । स्थावरपैत्तलादिलिङ्गनिरूपणं । तत्स्पर्शनफलकीर्त्तनं । तत्पूजाविधानञ्च । पुष्पविचारः । गौरीनामाष्टकस्तोत्रं । देवीपीठमालाकथनं । दुर्गास्मरणादिफलकीर्त्तनं । तत्पूजाविधानकीर्त्तनं । शालग्रा-

ममाहात्म्यकथनं। शिलाचक्रनिरूपणं। शालग्रामलक्षणकथनं। तुलसीरोपणादिमाहात्म्यकीर्त्तनं। तत्पूजाविधानं। अथ इतिहासकथनं। धात्रीमाहात्म्यकथनं। तीर्थयात्रामाहात्म्यकीर्त्तनं। तीर्थयात्राविधिकथनं। गङ्गामाहात्म्यकीर्त्तनं। गङ्गागर्भसीमानिरूपणं। तत्स्मरण-श्रवण-नमस्कारादीनां विधानं। अथ भेकीभेकयोरुपाख्यानकीर्त्तनं। गङ्गातीरे वाणिज्यादिनिषेधः। वाराणसीमाहात्म्यकथनं। तत्र वासादिफलकथनं। विश्वेश्वरदर्शनादिमाहात्म्यं। मणिकर्णिकामाहात्म्यकथनं। ज्ञानवापीमाहात्म्यं। ओङ्कारेश्वरभैरवादीनां माहात्म्यकथनं। पुरुषोत्तममाहात्म्यकथनं। अथ वासमरणादिफलकथनं। रोहिणीकुण्डाक्षयवटादिमाहात्म्यं। जगन्नाथसुभद्रादिदर्शनफलकथनं। समुद्रस्नानमाहात्म्यं। पञ्चतीर्थमाहात्म्यकथनं। श्वेतगङ्गाश्वेतमाधवमाहात्म्यकथनं। मत्स्यमाधवनृसिंहादिमाहात्म्यं। रथयात्राशयनयात्रादिफलकथनं। द्वादशयात्राफलकीर्त्तनञ्च। एवं प्रयागमाहात्म्यादिकीर्त्तनं। अथ धनुर्ध्वजस्य उपाख्यानकथनं। गयामाहात्म्यादिकीर्त्तनं। गयापरिमाणादिनिरूपणं। कमलतीर्थमाहात्म्यादिकथनं। मथुरामाहात्म्यकथनं। तत्परिमाणादिकथनं। मधुवनकुमुदवनादिमाहात्म्यं। ध्रुवतीर्थादिमाहात्म्यं। अथ चन्द्रसेनस्य उपाख्यानं। बदरिकाश्रममाहात्म्यादिकीर्त्तनं। नर्म्मदामाहात्म्यकथनं। द्वारकामाहात्म्यकथनं। अथ विविधाख्यानकीर्त्तनं। अयोध्यामाहात्म्यकीर्त्तनं। कुरुक्षेत्रमाहात्म्यकथनं। पुष्करमाहात्म्यकीर्त्तनं। नैमिषारण्यमाहात्म्यकथनं। गङ्गासागरसङ्गममाहात्म्यं। अथ हरद्रथाभिधानराक्षसस्य उपाख्यानं। गङ्गाद्वारमाहात्म्यकथनं। अथ मनोमालकन्दपतेरुपाख्यानकीर्त्तनं। सर्व्वतीर्थमाहात्म्यकथनं। पिष्टमालतीर्थवर्णनादिकं। गुरुतीर्थकथनं। मानसिकतीर्थनिरूपणादिकं। अथ वेदधर्म्मायाः उपाख्यानं। भार्य्यातीर्थादिनिरूपणं। अधर्म्मनिरूपणादिकं। पापशान्त्युपायकथनं। विष्णोरपराधाः। रत्नानां परीक्षानिरूपणं। तत्र वज्रपरीक्षाप्रकारकीर्त्तनं। मुक्ताफलपरीक्षा। पद्मरागादिपरीक्षा। मरकतपरीक्षा। इन्द्रनीलपरीक्षा। वैदूर्य्यपरीक्षा। कर्केतनादिपरीक्षा। पुलकपरीक्षा। रुधिराक्षपरीक्षा। स्फटिकरत्नपरीक्षा। विद्रुमादिपरीक्षा। विस्तरतः स्त्रीपुरुषयोः शुभाशुभलक्षणकथनं। गजलक्षणं। तत्परीक्षा च। अश्वलक्षणं। तत्परीक्षा च। गजचिकित्साकथनं। अश्वचिकित्साकथनं। पुनर्विस्तरेण पुष्पच्छायावर्णादिलक्षणादिकीर्त्तनं। लक्ष्मीविलासकीर्त्तनं। अलक्ष्मीविलासकथनं। दुर्निमित्तनिरूपणं। विविधोत्पातवर्णनं। महापुराणानां नाम श्लोकसंख्यादिनिरूपणं। एवमुपपुराणानां। स्वप्नदर्शने शुभाशुभफलकीर्त्तनं। क्षत्रियवैश्यादीनां भ्रातृव्यलाभोपायकथनं। अथ मतङ्गोपाख्यानकीर्त्तनं। राजमन्त्र्यादिलक्षणं। क्षिप्रकारिणश्चिरकारिणः प्रशंसाकथनं। कालस्वरूपादिकीर्त्तनं। मृत्योर्जन्मकथनं। अथ मानेतिहासकीर्त्तनं। यमयातनादिवर्णनं। अथ द्रौपद्युत्पत्तीतिहासकीर्त्तनं। कर्म्मणां फलकीर्त्तनं। अथ विविधोपाख्यानकीर्त्तनं। धर्म्मशीलतावर्णनं। अत्रोपाख्यानादिकथनं। धर्म्मरक्षोपायादिकथनं। अथ धर्म्मव्याख्यानोपाख्यानादिकथनं। कुञ्जरोपाख्यानं। वासुराजोपाख्यानं। स्वर्गसुखवर्णनादिकं। गुरुतीर्थोपाख्यानं। प्रजाहरस्य दानवस्याभिप्रायिकारकथनं। अङ्गभर-

मोपाख्यानं। पद्मपुष्पमाहात्म्यकीर्त्तनं। चर्म्म रक्तपद्माभिधानमाहात्म्यस्य उपाख्यानकीर्त्तनं। हत-प्रोपाख्यानं। सौदासात् चौनकमस्य उपदेशे देवदर्शनप्रसङ्गेन शुक्रमुनिसंवादकीर्त्तनं। धर्म्मादिषु नष्टेषु केन प्राप्नुयो जीवेदिति प्रश्नावेन विश्वामित्रवशिष्ठसंवादकीर्त्तनं। शालग्राममाहात्म्यकीर्त्तनं। चच पञ्चप्रेतोपाख्यानादिकथनं॰। पापफलकथनादिकथनं। विषयवश्याचमत्कारतादिनिरूपणं। पितृलो-पाख्यानकीर्त्तनं। यथातेचपाख्यानं। योगप्रक्रियाकथनं। मरणकालनिरूपणं। तच दानादिविधा नश। पितोरन्नर्जसकरणे पुत्राणां फलकथनं। पूजाकथनेतिहासकीर्त्तनं। वेतननिर्णयः। (चर्थात् कालवश्यनिर्म्माण-स्फाटिकमणिवेधनादौ वेतनदानव्यवस्था।) चभिचारनविधिः। नमस्कानिरूपणं। सारस-शुक-मयूरादिशकुनानां शुभाशुभचिन्तनं। स्वप्नचरित्रकीर्त्तनं। चिकापलापलकथनं। राजसभक्ष्यनिरूपणं। द्रव्यशुद्धिकथनं। कृषिविषये संवत्सरराजादिज्ञानं। हरिज्ञानं। मेघफलक-थनं। द्वादशमासेषु हलिलक्षणं। चनावृष्टिलक्षणं। यज्ञाश्वधारणादिविधिः। चोङ्कारमाहात्म्यक-थनं। अपचयादिनिरूपणं। चनध्यायनिरूपणादिकं। द्रायभागः। भूकम्पलक्षणं। मेघोत्पत्तिकारणा-दिकथनं। मेघानां ख्यानादिनिरूपणञ्च।

---

**No. 3311.** पञ्चकल्पतरुः। Substance, country-made yellow paper, 19 × 3 inches. Folia, 331. Lines, 7 on a page. Extent, 8,832 ślokas. Character, Bengali. Date ? Place of deposit, Simuliyá, Post, Málipotá, Zilá, Nadíyá. Kálíkṛishṇa Gośvámí. Appearance, old. Prose and verse. Correct.

**Panchakalpataru.** A digest of Tantric rites, giving elaborate descriptions of mystic circles and of worship of the Deví through the same. By Rághavadeva Śarmá, son of Rámánanda Tarkapanchánana. The codex is evidently incomplete as it does not refer in detail to Śákta divinities. The extant portion is divided into five parts. The first is devoted to mystic circles and incantations; the second to purification and accessories of worship, such as rosaries, &c.; the third is devoted to the mystic mantras of Vaishṇavite divinities; the fourth to the mantras of Śivaite divinities and their attendants; and the fifth to minor divinities.

**Beginning.** नत्वेश्वरं मया पञ्चकल्पतरुरिव।
चतुर्वर्गफलावाप्त्यै क्रियते राघवः क्वती॥
नारदमादिमुनान्तः सन्तानक इति स्मृतः।

दीक्षामन्त्रसिद्धिलक्ष्मा कल्पद्रुम इति स्मृतः ॥
विष्णुशक्तिपूजाभ्यो हरिचन्दनकः स्मृतः ।
शिवशक्तिपूजाभ्यः पारिजात इति स्मृतः ॥
गणेशादिविधिर्योवान् मन्दारक इति स्मृतः । इत्यादि ।

End. शक्तिः प्रथमावरणं, अनन्तवासुकितक्षककर्कटपद्ममहापद्मशङ्खकुलिराः । + + + + + + ।

Colophon. इति महामहोपाध्यायश्रीरामामन्दतर्कपञ्चाननपुत्रश्रीराघवदेवशर्म्मणा विरचितोऽयं मन्दारकद्रुमः समाप्तश्चायं पञ्चमः कल्पः ।

विषयः । प्रथमे मन्त्रामके,—तारचक्रनिरूपणं । राशिचक्रकथनं । कोष्ठचक्रकथनं । गणचक्रकथनं । ऋणिधनिचक्रकथनं । नाड़ीचक्रकथनं । अकड़मचक्रकथनं । वर्णचक्रकथनं । एतेषामपवादकथनञ्च । महाविद्यानिरूपणं । सिद्धविद्याकथनं । कूर्म्मचक्रनिर्णयः । प्रातःकृत्यविधानं । दर्भनिरूपणं । द्विविधस्नानविधानं । षष्टिवतिलकनिरूपणं । सन्ध्याविधिः । तर्पणविधिः । भस्मस्नानादिविधिः । एकपुण्ड्रादिलक्षणं । सर्व्वेषां देवानां गायत्रीकथनं । यथेन विधिः । स्थाननिरूपणं । वास्तुयागादिप्रकारकीर्त्तनं । चतुर्म्मण्डलघटहनिर्णयः । द्वारदेवतादिपूजाविधिः । आसननिरूपणं । तत्र स्वस्तिकपद्मासनादीनां लक्षणकथनं । उपवेशनप्रकारकथनं । भूतशुद्धिप्रकारः । मातृकान्यासकथनं । अन्तर्मातृकाकथनादिकं । कराङ्गन्यासः । पीठमन्त्रन्यासः । पीठदेवताध्यानकथनं । प्राणायामप्रकारकथनं । भूतलिपिकथनं । अर्घ्यस्थापनविधिः । देवतावुद्धा स्वदेहे देवतापूजनविधिः । पीठपूजनविधिः । षोड़शोपचारादिकथनं । तत्र तत्र मन्त्रकथनञ्च । पुष्पविचारः । नैवेद्यादिविधानं । उपचारद्रव्यप्रतिपादनादिप्रकारः । पादोदकस्वीकारणविधिः । अपराधनिरूपणं । काम्यषोड़शोपचारमन्त्रकथनं । अष्टत्रिंशदुपचारविधिः । चतुःषष्ट्युपचारविधानं । मन्त्रनिरूपणं । प्रतिष्ठाविधिः । मुद्रानिरूपणं ।

द्वितीये कल्पद्रुमे,—दीक्षाकालनिरूपणं । तत्र तिथिनक्षत्रवारादिकथनं । देवपर्व्वकीर्त्तनं । गयाकाशीप्रभृतितीर्थेषु दीक्षाग्रहणनिषेधः । मन्त्रदोषकथनं । मन्त्राणां दशविधसंस्कारकथनं । शैववैष्णवादौ तत्तद्भेदकीर्त्तनं । दीक्षापद्धतिः । अध्वशोधनकथनं । कलावत्यादिदीक्षानिरूपणं । क्रियावतीदीक्षा । संक्षेपदीक्षा । होमविषये मन्त्रोक्तमन्त्रविधानं । अग्न्यन्तुष्टयदेवताकथनं । दीक्षापदेशयोः भेदकथनं । पञ्चायतनपूजाकथनं । दीक्षाशब्दनिर्व्वचनं । उपदेशलक्षणं । नित्यकाम्यभेदेन दीक्षायाः द्वैविध्यकथनं । क्रियावत्यादियोग्यगुरुशिष्यनिरूपणं । मन्त्राधिकारनिरूपणं । अदेयमन्त्रकथनं । गुरुशिष्ययोः लक्षणं । पित्रादिभ्यो मन्त्रग्रहणे दोषकथनं । निषिद्धदीक्षाग्रहणे प्रायश्चित्तानन्तरं पुनर्दीक्षाविधानं । अङ्कुरार्पणविधिः । अग्निसंस्कारकथनं । कुण्डनिर्म्माणादिप्रकारः । तदभावे स्थण्डिलविधानं । श्रुक्स्रुवलक्षणं । वेदिनिर्म्माणप्रकारादिकथनं । कुण्डस्य अष्टादशसंस्कारक-

थनं। अग्न्याधरणादिविधानं। चौमद्रव्यप्रमाणादिकथनं। चिह्नविशेषेण अग्नेः शुभाशुभजनककल-कथनं। करमालाविधानं। रुद्राक्षादिमालानिरूपणं। मालाविशेषे फलाधिक्यं। मालासंस्कारः। वैष्णव-गाणपत्यादौ क्रमेण तुलसी-गजदन्तादिमालाविधानं। सूत्रनिरूपणं। सूत्रसंस्कारादिकथनं। पुरश्चरणविधानं। तत्र भक्ष्यादिनियमकथनं। तद्दिनादिवसकर्त्तव्यता। चिताासाधनविधिः। शव-साधनविधानं। तत्र शवलक्षणादिकथनं। प्रश्नपुरश्चरणादौ विशेषनियमकथनं। मन्त्रसिद्ध्युपाय-कीर्त्तनं। सिद्धिलक्षणकथनञ्च।

तृतीये हरिचन्दने,—कृष्णमन्त्रनिरूपणं। तत्पूजाविधानं। तत् प्रयोगः। किशोरादिमूर्त्ति-भेदेन पूजाभेदकथनं। विभूतिपञ्जरन्यासः। केशवकीर्त्त्यादिन्यासकथनञ्च। हयग्रीवमन्त्रकथनं। वराहमन्त्रकथनं। नृसिंहमन्त्रकथनं। राममन्त्रकथनं। लक्ष्मणमन्त्रकथनं। लक्ष्मीमन्त्रकथनं। सरस्वतीमन्त्रकथनं। तुलसीमन्त्रकथनं। पृथिवीमन्त्रकथनं। सीतामन्त्रकथनं। वनमालाह-कथनं।

चतुर्थे पारिजाते,—शिवप्रकरणं। तत्र शिवमन्त्रादिकथनं। तत्पूजाविधानं। तत्र श्रीकण्ठ-श्रीपूर्णोदर्य्यादिन्यासकथनं। रुद्र-प्रमथ-योगिनीनां नामादिकीर्त्तनं। मृत्युञ्जयमन्त्रविधानं। दक्षि-णामूर्त्तिमन्त्रविधानं। अर्द्धनारीश्वरमन्त्रविधानं। तुम्बुरमन्त्रविधानं। घण्टाकर्णादिमन्त्रविधिः। भुवनेश्वरी-त्वरिता-त्रिपुटा-अन्नपूर्णा-दुर्गा-बाला-भैरवी-श्रीविद्याप्रभृतीनां मन्त्रादिविधानं।

पञ्चमे मन्दारके,—गणेशप्रकरणं। तत्र हरिद्रागणेश-उच्छिष्टगणेशादीनां मन्त्रादिविधानं। चन्द्रमन्त्रादिविधानं। सूर्य्यमन्त्रादिकथनं। अग्निमन्त्रकथनादिकं। विषहरमानाविषमन्त्रकथनं। इन्द्रमन्त्रकथनादिकं। गरुड़मन्त्रकथनादिकं। हनूमन्मन्त्रादिकथनं। तत्साधनकथनञ्च। धनदा-साधनप्रकारकीर्त्तनं। एवं नायिकासाधनं। पिशाचसाधनं। वेतालसाधनकथनञ्च। निगड़भञ्जनो-पायकीर्त्तनं।

---

**No. 3312.** ताराभक्तिसुधार्णवः। Substance, country-made paper, 19 × 3 inches. Folia, 395 Lines, 7 on a page. Extent, 11,204 ślokas. Character, Bengali. Date, ? Place of deposit, Simuliyá, Post Málipotá, Zilá Nadiya, Kálikṛishṇa Gośvámá; also another copy at Naduyárá, Post Madhuvaní, Darbhángá, Paṇdit Kanṭu Jhá. Appearance, old. Verse. Correct.

**Tárábhakti-sudhárṇava.** On devotion to the goddess Tárá, giving details of Śákta worship taken from the leading Tantras.

**Beginning.** सीमासीमविप्रवीजदयामाभिरामच्छविं
चत्यगौरपदद्वयी + कपटप्रांशुत्तरामाश्रये।

वंशीवाद्यनकेतनप्रविलसद्गम्भीरघोरध्वनिं
वन्दे कञ्चिदहं मुदा मधुरिपुं वृन्दावनमध्ये स्थितं ॥
वासवनीलविराजमानकुसुमां वक्षोजराजत्फला-
मुद्यत्कुम्भकेतनप्रविलसन्मन्दानिलमालाकुलां । (
सम्बुद्धां रमणीयनूपुरलतां वामामपर्णामहं
काञ्चित्कल्पलतां नमामि ललितां शैलाधिराजोद्भवां ॥
क्षणात्क्षणैरशुभानि भवति बालचन्द्रात्मनां
शिरोरुहनिवेशमात्रभवति जाह्नवीरूपधृक् ।
विभाति हृदि कौस्तुभात्मकतया सतां यस्सदा
गुरोश्चरणरेणवे शिवपदाय तस्मै नमः ॥
नानातन्त्राणि विज्ञाय महाधरगुरोर्मुखात्
करोति नरसिंहोऽयं ताराभक्तिसुधार्णवं ॥

**End.** कनत्कनकनूपुरद्वितय + + + प्रोल्लसत्
+ धामनिपुणा + + नरसि + स्फुरत् केसरं ।
महेन्द्रमणिमुद्रिकामधुकरीपरीतोदरं
नमस्त्रिपुरसुन्दरीचरणपुण्डरीकद्वयं ॥
आसीत्कौर्मिकरस्ततो हरिहरस्तस्मादभूत्सत्कविः
श्रीमान् पण्डितपुङ्गवो हरिकरः श्रीकृष्णशर्मा ततः ।
तस्मादेव महाधरः समभवत्तन्त्राम्बुधेः पारगः
ताराभक्तिसुधार्णवं समतनोत्तत्सूनुरेषः कौतुकात् ।

**Colophon.** इति महामहोपाध्याय + + + श्रीनरसिंहविरचिते ताराभक्तिसुधार्णवे विंशतितमः तरङ्गः समाप्तः ।

विषयः। शिवाशिवयोः संवादेन मन्त्रमाहात्म्यकीर्त्तनं । मन्त्रोद्धारप्रकारादिकथनं । गुरुलक्षणं । शिष्यलक्षणं । दीक्षाविधानं । तत्कालनिरूपणं । पक्षनिर्णयः । वारनिर्णयः । योगनिर्णयः । देशनिरूपणं । दीक्षामाहात्म्यकीर्त्तनं । मण्डपभूमिपरीक्षा । वास्तुयागविधिः । पूर्व्वादिदिग्ज्ञानोपायकथनं । मण्डपलक्षणं । कुण्डलक्षणं । सुवलक्षणं । अङ्कुरार्पणविधानं । दीक्षाप्रयोगः । सर्व्वतोभद्रमण्डलकथनं । शुभलग्ननिरूपणं । चक्राभलप्रकथनं । अग्निसंस्कारकथनं । गुर्व्वादिधारणप्रकारः । दीक्षादिमहत्वं । तारादीक्षा । कलावतीदीक्षा । वेधमयीदीक्षा । पूर्णाभिषेकविधिः । चरितमन्त्रत्यागविधिः । गुरुभक्तिनिरूपणं । समयाचारकीर्त्तनं । यन्त्रादिकथनं । दिव्यवीरपश्वाभावादिनिरूपणं । नित्यक्रियाविधानं । तत्र स्नानकथनं । मन्त्रस्नानादिनिरूपणं । सन्ध्याविधिः ।

तर्पणविधानं । पूजाविधिः । आसनादिनिरूपणं । प्राणायामनिरूपणं । करशुद्धिकथनं । भूतशुद्धिप्रकारकीर्त्तनं । मातृकान्यासः । षोढान्यासः । शिवशक्तिन्यासः । तारादिन्यासः । पीठन्यासः । कराङ्गन्यासः । मन्त्रशुद्धिकथनं । विशेषशुद्धिः । द्रव्यशुद्धिः । अनुकल्पनिरूपणं । द्रव्यशोधनकीर्त्तनं । कलसस्थापनविधिः । शापमोचनप्रकारकथनं । तारागुणनिरूपणं । मत्स्यशुद्धिप्रकारः । बटुकादिबलिदानविधिः । आवाहनप्रकारः । ताराध्यानकथनं । उपचारविधिः । पञ्चविधमहामुद्रानिरूपणं । नानामुद्राः । देवताशुद्धिः । उपचारमुद्राकथनं । आवरणपूजाकथनं । आवरणदेवताध्यानादिकथनं । बलिदानविधिः । संस्कारकालनिरूपणं । रुद्राक्षादिमालासंस्कारविधिः । रत्नमालासंस्कारः । ताराशतनामस्तोत्रं । नित्यहोमविधिः । नमस्कारविधिः । पञ्चमयागविधिः । तृतीयामविधानं । तदधिकार्य्यादिनिरूपणं । विरुद्धवचनानां समन्वयपूर्व्वकमागमशास्त्रप्रामाण्यसंस्थापनं । नैमित्तिकपूजाविधिः । कुलवारकथनं । कुलतिथ्यादिकीर्त्तनञ्च । द्वादशमासिकपूजाविधानं । अधिवासकृत्यविधानं । पूजादिनकृत्यं । कुमारीपूजाविधानं । शिवाबलिविधानं । तान्त्रिकप्रायश्चित्तविधिः । अन्त्येष्टिविधानं । पुरश्चरणविधानं । तत्र देशादिनिरूपणं । वीरपुरश्चरणविशेषकथनं । सिद्धचक्रनिरूपणं । वीरसाधनविधिः । चितासाधनविधानं । शवसाधनविधिः । मन्त्रपरीक्षार्थं राशिचक्रादिनिरूपणं । फणिचक्रकथनं । अकडमचक्रं । कुलाकुलचक्रं । मन्त्रषट्पदचक्रं । गणागणचक्रं । अष्टवर्गचक्रं । ऋणिधनिचक्रं । हरचक्रं । मारणस्तम्भनादौ कालादिनिरूपणं । तत्र तत्र विधानकथनं । विशेषप्रयोगकथनञ्च । काम्यकर्म्मविधानं । ताराभेदेन मन्त्रादिनिरूपणं । मूलमन्त्रकथनं । न्यासकथनं । तारिणीकल्पः । नित्यार्चनक्रमकीर्त्तनं । तत्त्वन्यासकथनं । वर्णन्यासकथनं । अन्तर्मातृकान्यासः । उत्तरषडङ्गन्यासः । पीठपूजाविधिः । दक्षिणकालिकापूजाविधिः । कर्पूरस्तोत्रकीर्त्तनं । ध्यानाकथनं । कालीशतनामस्तोत्रं । कालीमन्त्रकथनं । पुरश्चरणविधानं । नैमित्तिककाम्यकालिकापूजाविधानं । तर्पणविधिः । कालीकवचकथनं । कालिकाभेदकथनं । भुवनेश्वरीमन्त्रादिकथनं । गुह्यकालीमन्त्रादिनिरूपणं । षडक्षरीविद्यानिरूपणं । षोडशीविद्यानिरूपणं । त्रयोदशीविद्याकथनं । चतुर्दशीविद्या । पञ्चदशीविद्या । विद्यामाहात्म्यकथनं । षोढान्यासकथनं । भैरवोक्तदेवीध्यानस्तवकवचकथनादिकं । परदेवताकवचकथनं । वैरोचनीशतनामस्तोत्रं । प्रचण्डचण्डिकासहस्रनामस्तोत्रं । छिन्नमस्तासहस्रनामस्तोत्रं । दीक्षाविशेषे पुरश्चरणविशेषकथनं । वीरसाध्यकाम्यकर्म्मनिरूपणं । योगविधानकीर्त्तनं । तत्प्रकारकथनं । आसनादीनां लक्षणं । प्रत्याहारादीनां लक्षणं । मानसपूजनप्रकारकथनं । योगिनीगणध्यानविधिः । तर्पणविधिः । सन्ध्याविधिः । ध्यानादिकथनं । होमकुण्डलक्षणादिकीर्त्तनञ्च ।

**No. 3313.** श्लेषविरोधिनी । Substance, country-made paper, 14 × 2½ inches. Folia, 131. Lines, 8 on a page. Extent, 6,240 ślokas. Character, Bengali. Date, ? Place of deposit. Post Málipotá, Zilá Nadíyá. Kásínátha Bhaṭṭáchárya. Appearance, old. Prose. Correct.

**Slesha-virodhiní.** A commentary on the Rághava-Páṇḍavíya of Kavirája. By Rámabhadra.

**Beginning.** चन्द्रोपेन्द्रमहेन्द्रवह्निवरुणब्रह्मादिभिः सेवितं
षड्वर्गोज्झितकर्मसु मुनिभिर्ध्यासादिभिः पूजितं ।
आधायेश्वरपादपद्मयुगलं वक्षाम्बुजे मस्तके-
ष्वाभिः श्रीकविराजकोविदकृतेर्व्याख्यानमातन्यते ॥
समीक्ष्य सत्प्रासमजात + + भिः शेषरामायणभारतञ्च ।
सं + + भावार्थवमत्युद्यं वितन्यते राघवपाण्डवीया ॥
नत्वा श्रीमत्तर्कवागीशभट्टाचार्यपादकं ।
रामभद्रेण कविना श्लेषग्रामविरोधिनी ॥ युग्मं ।
न्यस्तमस्तकपुटाञ्जलिर्दृशे दोषदर्शिनिवहांस्तु + + काम् ।
अर्थदर्शनजुषा ब्रह्मभिर्दूष्यमेतदमलन्तु नो वचः ॥
कुमा + + सम्बव्याख्या कुमारकौमुदी तथा ।
यत्नोऽत्नक्रमेण वा येन तेने तमेयमुत्तमा ॥
तत्रादौ महाकाव्यस्य आशीर्नमस्क्रिया वस्तुनिर्देशो वा क्रियते,—इति सम्प्रदायः । उच्यते सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणं । आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखं ॥

**End.** तं कीदृशं मणीनां सूर्य्यकान्तादीनां प्रभाभिर्भासुरं, कार्म्मणं मन्त्रतन्त्रादियो जने कर्म्मठेऽपि च । इति मेदिनी । भारतेऽप्येवं ॥

**Colophon.** इतः परं छिन्नभावात् परिसमाप्तिसूचकवाक्यं नास्ति ॥

विषयः । कविराजकृतराघवपाण्डवीयकाव्यस्य व्याख्यानं (अत्र प्रायः समाप्तिपर्य्यन्तं व्याख्यानमस्ति । केवलं त्रयोदशसर्गीयशेषश्लोकाष्टकानां व्याख्याया अभावः ।)

---

**No. 3314.** दत्तकदीधितिः । Substance, country-made yellow paper, 16 × 4 inches. Folia, 9. Lines, 9 on a page. Extent, 362 ślokas. Character, Bengali. Date, Sk. 1740. Place of deposit, S'ántipura; Kálidása Vidyávágísa. Appearance, old. Prose and verse. Generally correct.

**Dattaka-dídhití.** A digest of the laws regarding adoption. By Mahámahopádhyáya Ananta Bhaṭṭa.

**Beginning.** श्रुतिस्मृतिपुराणादिमीमांसान्यायविस्तरं ।
विचार्यानन्तभट्टेन क्रियते दत्तदीधितिः ॥
तत्रादौ दत्तके ग्राह्याग्राह्यविवेचनं तत्र शौनकः ।
ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डेषु अन्यत्र तु न कारयेत् ॥

**End.** इतिहासपुराणेषु कुन्त्या दत्तोऽस्य, पत्न्यभावे सा रिक्थं लभते दुहितृवदिति शिवं ।
सतां सन्तोषसिद्ध्यर्थमिति दत्तकदीधितिः ।
अकार्यनन्तभट्टेन तेन तस्य मुदेऽस्तु सा ॥

**Colophon.** इति महामहोपाध्यायश्रीमदनन्तभट्टविरचिता दत्तकदीधितिः सम्पूर्णा । शकाब्दाः १७४० ॥

विषयः । दत्तके ग्राह्याग्राह्यविवेचनं । दत्तकग्रहणे आवश्यकताकथनं । अनुकीर्त्तनञ्च । दत्तग्रहणस्य अधिकारनिरूपणं । स्वामिनोऽनुमत्या स्त्रीणां दत्तग्रहण । ग्रहणनिषेधः । पुत्रं दातुं कः समर्थ इति निरूपणं । वर्त्तमानयुगे किंविधः पुत्रो ग्राह्य इति निर्णयः । विजातीयपुत्रग्रहणं कर्त्तव्यं न वा इति निरूपणं । द्व्यामुष्यायणपुत्रग्रहणविधिः । पौनर्भवो दासपुत्रश्च ग्राह्यो न वा इति विवेचनं । कस्मिन् समये दत्तकपुत्रग्रहणं कर्त्तव्यमिति कथनं । दत्तकग्रहणस्य विधिकीर्त्तनं । विधिना विना दत्तकग्रहणस्य फलकथनं । अथ ग्रहणप्रयोगकथनं । दत्तकस्य विवाहाद्युपयोगिगोत्रादिनिर्णयः । सापिण्ड्यनिरूपणं । अशौचनिर्णयः । दायादनिरूपणं । दत्तककन्याग्रहणविधानञ्च ।

---

**No. 3315.** दत्तकदर्पणः । Substance, country-made yellow paper, 16 × 4 inches. Folia, 5. Lines, 10 on a page. Extent, 277 ślokas. Character, Bengali. Date, Sk. 1739. Place of deposit, Śántipura. Kálidása Vidyávágíśa. Appearance, old. Prose and verse. Generally correct.

**Daṭṭaka-darpaṇa.** On certain details regarding adoption.

**Beginning.** ॐ नमो गणेशाय ।
अथ दत्तके ग्राह्याग्राह्यनिर्णयः । तत्रादिः ।

अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च ॥

इति । अपुत्रेणैव इत्येवकारेण पुत्रवतो नाधिकारः ।

**End.** दत्तकपुत्रस्यानन्तरमौरसे तु उत्पन्ने रिक्थे तयोर्विभागा औरसस्य, दत्तकस्य चतुर्थभागभाक्त्वमित्युक्तं पल्लवितेन ॥

द्वैपायनेन विदुषा संख्या दत्तकदर्पणः ।
निर्म्मितो हरिप्रीत्यै सद्भिराराध्यतां मुदः ॥

**Colophon.** इति दत्तकदर्पणः समाप्तः । शकाब्दाः १७१९ ।

विषयः । अपुत्रस्य दत्तकपुत्रग्रहणावश्यकता । तत्र अधिकारकथनं । पुत्रदानसामर्थ्यकथनं । ग्राह्याग्राह्यविवेचनं । दत्तकग्रहणकालनिरूपणं । तद्ग्रहणविधिकीर्त्तनं । स्त्रीणां दत्तग्रहणाधिकारकथनं । दत्तकस्तु होमादिविधिनैव ग्राह्य इति कथनं । अशौचादिनिरूपणं । दायविभागकथनञ्च ।

---

**No 3316.** भगवत्तत्त्वचन्द्रिका । Substance, country-made paper, 12 × 4 inches. Folia, 112. Lines, 7 on a page. Extent, 3,087 slokas. Character, Nágara. Date, ? Place of deposit, Sántipura, Pandít S'rínátha Bhaṭṭáchárya. Appearance, old. Prose and verse. Incorrect.

**Bhagavattattva-chandriká.** On devotion to Krishṇa who is described as the supreme divinity. By Mahámahopádhyá Ráma Ácharya.

**Beginning.** वासुदेवं नमस्कृत्य रामाचार्य्येण धीमता ।
क्रियते भगवत्प्रीत्यै भगवत्तत्त्वचन्द्रिका ॥

अथ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्येति तथा । प्रत्यगात्मा हरिर्भक्त्या निदिध्यासनरूपया । अविद्यां कर्म्मसंघातरूपां यतो निवर्त्तयेदित्यतः तापत्रयातुरैरवश्यतया वासुदेवादिपदवेदनीयं ब्रह्म जिज्ञासितव्यमिति । इत्यादि ।

**End.** तत्रात्मात्मनिति प्रोक्तं परमो हरिरेव तु ।
तस्मान्मुमुक्षुतः सर्व्वस्मादुत्कर्षे एव तात्पर्य्यं सर्व्वागमानामिति शं ।

**Colophon.** इति महोपाध्यायश्रीरामाचार्य्यकृतेयं भगवत्तत्त्वचन्द्रिका समाप्ता ।

विषयः। निरुपाधिमहाविभूतिरानन्दाकारो भगवान् श्रीकृष्ण एव सकलवेदवेदान्तप्रतिपाद्य इति निरूपणं। ब्रह्मणः साकारत्वव्यवस्थापनं। भगवच्छरीरस्य अमायिकत्वनिरूपणञ्च। श्रीमद्भागवतस्य सर्व्ववेदान्तार्थनिष्कर्षरूपत्वकीर्त्तनं। भगवन्मूर्त्तिनिरूपणं। चतुर्व्यूहनिरूपणं। प्रकाशाश्रयन्यायेन भगवति धर्म्मधर्म्मिभावोपपत्तिकथनं। चन्द्रचन्द्रिकान्यायेन जगतो भगवच्छक्तित्वकथनं। भगवदादिशब्दनिर्व्वचनं। भक्तिरेव भगवत्प्राप्त्युपाय इति सपरिकरनिरूपणं। निर्व्विशेषत्ववादखण्डनं। प्रणवस्वरूपनिरूपणं। वासुदेव एव परब्रह्मादिशब्दवाच्य इति निर्णयः। भगवदवतारकथनं। नारायणादिशब्दनिर्व्वचनं। भगवन्नामस्मरणादिकीर्त्तनं। भगवद्भजनाकरणे दोषकथनं। सात्वतशास्त्रमाहात्म्यकथनमुखेन पाञ्चरात्रपाशुपतादीनां मोक्षशास्त्रत्वकथनं। तामसराजससात्त्विकपुराणेषु क्रमेण शिवब्रह्मविष्णूनां माहात्म्याधिक्यवर्णनं। मोक्षस्वरूपकथनं। तद्भेदकथनञ्च। रुद्रादीनां भगवद्विभूतित्वकथनं। विशेषेण भगवन्माहात्म्यनिरूपणञ्च।

---

**No. 3317.** सत्तसयाकाव्यम्, वा सप्तशतीकाव्यम्। Substance, country-made paper, $8\frac{1}{4} \times 4$ inches. Folia, 113. Lines, 5 on a page. Extent, 980 ślokas. Character, Nágara. Date, Sm. 1749. Place of deposit, Sántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Verse. Generally correct.

**Saptaśatí-kávya,** ALIAS **Sattasayá-kávya.** On erotics. By Sáliváhana. See No. 2338, Vol. VII, page 111.

श्रीकृष्णाय नमः।

**Beginning.** पसुवइणो रोसारुण पडिमासंकं तगोरिमुहचन्दं।
गहिअग्घपंकअं विअ संझासलिलंजलिं णमह॥ १॥
अमिअं पाउअकव्वं पढिउं सोउं अ जे ण आणंति।
कामस्स तत्ततत्तिं कुणंति ते कहं ण लज्जंति॥ २॥
सत्त सआइं कइवच्छलेण कोडीअ मज्झआरम्मि।
हालेण विरइआइं सालंकाराणं गाहाणं॥ ३॥ इत्यादि।

**End.** पसरइ जेण तमोहो जाइ चंदस्स चंदिमा जेण।
तं सिद्धिसत्तरत्थिर पच्चुहाउअवअ अहिअं किं पि॥ ८०९॥
एसो कइणा मंकिअ गओ पडिवइविरअ विअसो।
सत्त सआइ समत्तो सआइवण विरइओ कोसो॥ ८०७॥

**Colophon.** इति सत्तसयाकाव्यं सम्पूर्णं। संवत्। १७४९॥ श्रावणमासे।

विषयः। सम्भोगविप्रलम्भयोः नायकादीनां चेष्टितवर्णनं। ग्रन्थस्यास्य सप्तशतीनामकत्वेऽपि सप्तोत्तराष्टशतसंख्यामिता गाथा वर्त्तन्ते॥

**No. 3318. गीतामाहात्म्यं ।** Substance, country-made paper, 15 × 3 inches. Folia, 4. Lines, 6 on a page. Extent, 109 ślokas. Character, Bengali. Date ? Place of deposit, Guptipáḍá, Telipáḍá; Dínanátha Gaṅgopádhyáya. Appearance, old. Verse. Correct.

**Gítámáhátmya.** An eulogium on the Bhágavatgítá. Anonymous.

**Beginning.** श्रीकृष्णार्जुनसंवादो गीतायाः प्रथमे स्मृतः ।
द्वितीये सांख्ययोगो हि तृतीये कर्म्मसंज्ञितः ॥ इत्यादि ।

**End.** पितृमातृरतः पुत्रो गीताध्यायी तथा नरः ।
यथा समस्तदेवानां निर्म्मलं जाह्नवीजलं ॥

**Colophon.** इति गीतामाहात्म्यं समाप्तं ।

विषयः । अध्यायार्थसङ्कलनपुरःसरं भगवद्गीताया माहात्म्यनिरूपणं ।

---

**No. 3319. देवीमाहात्म्यचन्द्रिका ।** Substance, country-made yellow paper, 15 × 3 inches. Folia, 53. Lines, 10 on a page. Extent, 2,252 ślokas. Character, Bengali. Date Sk. 1664. Place of deposit, Guptipáḍá, Telipáḍá; Dínanátha Gaṅgopádhyáya. Appearance, old. Prose. Correct.

**Devímáhátmya-chandriká.** An eulogistic desertation on the Deví. By S'íva A'chárya.

**Beginning.** प्रणम्य परमां वाणीं कुमतिध्वंसकारिणीं ।
वितनोति शिवाचार्य्यो देवीमाहात्म्यचन्द्रिकां ॥
यच्चतुर्भुजमिश्रेण धृतिदासादिनापि यत् ।
लिखितं तत् समालोक्य रच्यतेऽत्र समासतः ॥
प्राक् किल जैमिनिः महाभारतकथां श्रोतुमिच्छन् मार्कण्डेयमुपस्थितवान् । इत्यादि ।

**End.** श्लोकस्यापि पुनः पुनरावृत्तिः समाप्तिं द्योतयतीति सम्प्रदायः ॥

**Colophon.** इति शिवाचार्य्यविरचितायां देवीमाहात्म्यचन्द्रिकायां देवीमाहात्म्यं समाप्तं ।

शाके कालसमन्विते विधुमुखे तस्मात्सेव्वत्सरे चाष्टम्यामसिते तिथौ विधुतिथौ यामे च सार्द्धद्वये ।
श्रीचण्डीचरणाम्बुजे निजमनः संस्थाप्य सि+चवे, पुस्तीयं लिखिता मया निजमटे मासे च शुभावहे । शुभमस्तु शकाब्दाः ॥ १६६४ ॥

विषयः । देवीमाहात्म्यव्याख्यानं ॥

**No. 3320.** निगोदविचारगाथाषट्त्रिंशिकासूत्रम् । Substance, country made paper, 10×4 inches. Folia, 3. Lines, 8 on a page. Extent, 60 ślokas. Character, Nágara. Date ? Place of deposit, Káśirámaghâṭa, Jaina Maṭha. Appearance, fresh. Verse. Correct.

**Nigodavichára-gáthá-shaṭtriñ-śiká-sútra.** A desertation on the identity of the soul. By Bhadravápasvámí.

**Beginning.** लोगस्स एग पसे जावगय एवं मिजियण एमुखं । इत्यादि ।

**End.** सम्रावनु यश्राणि भाग भवंता भवंता वा । चय ।

**Colophon.** इति निगोदविचारगाथाषट्त्रिंशिकासूत्रं समाप्तं ।

विषयः । सूक्ष्मजीवानां स्वरूपकथनादि ।

---

**No 3321.** निगोदषट्त्रिंशिकाविवृतिः । Substance, country-made paper, 10×4 inches. Folia, 4. Lines, 17 on a page. Extent, 359 ślokas. Character, Nágara. Date ? Place of deposit, Káśirámaghâṭa. Jaina Maṭha. Appearance, fresh. Prose. Correct.

**Nigodashaṭtatriñ-śiká-vivṛiti.** A commentary on the work described in the last preceding number. By Ratnasiñha Súri, disciple of Munichandra Súri.

**Beginning.** अथ पञ्चमाङ्गे एव एकादशशते दशमोद्देशके निगोदविचारः । इत्यादि ।

**End.** इति विवाहप्रज्ञप्तौ पञ्चमाङ्गे एकादशशते दशमः ।

**Colophon.** इति श्रीमन्मुनिचन्द्रसूरिशिष्यश्रीरत्नसिंहसूरिविरचिता निगोदषट्त्रिंशिका-विवृतिः समाप्ता ।

विषयः । निगोदषट्त्रिंशिकासूत्रस्य व्याख्यानं ।

---

**No. 3322.** आनन्दवृन्दावनचम्पूः । Substance, country-made paper. 15×6 inches. Folia, 358. Lines, 7—8 on a page. Extent, 8,938 ślokas. Character, Bengali. Date ? Place of deposit, Sántipura, Kṛishṇamaya Gośvámí; another copy at Ḍháká, Kṛishṇakamala Gośvámí. Appearance, fresh. Prose and verse. Correct.

**Ánandavṛindávana-champu.** An elaborate description on the life of Kṛishṇa in Vṛindávana. By Kavikarṇapura.

Beginning. वन्दे कृष्णपदारविन्दयुगलं यस्मिन् कुरङ्गीदृशां
वक्षोजप्रणयीकृते विलसति स्निग्धोऽङ्गरागः स्वतः ।
काश्मीरं तलशोणिमोपरितनः कस्तूरिका नीलिमा
श्रीखण्डं नखचन्द्रकान्तिलहरी निर्व्याजमातन्वते ॥ १ ॥
शोणस्निग्धाङ्गुलिदलकुलं जातरागं परागैः
श्रीराधायाः स्तनमुकुलयोः कुङ्कुमक्षोदरूपैः ।
भक्तश्रद्धामधुनखमहःपुञ्जकिञ्जल्कजालं
जङ्घानालं चरणकमलं पातु नः पूतनारेः ॥ २ ॥
माधुर्य्यैर्मधुभिः सुगन्धि भजनस्वर्णाम्बुजानां वनं
कारुण्यामृतनिर्झरैरुपचितः सत्प्रेमहेमाचलः ।
भक्ताम्भोधरधोरणीविजयिनी निष्कम्पसम्पावलि-
र्देवो नः कुलदैवतं विजयतां चैतन्यकृष्णो हरिः ॥ ३ ॥
नमस्यामोऽस्यैव प्रियपरिजनाम् वत्सलहृदः
प्रभोरद्वैतादीनपि जगदघौघक्षयकृतः ।
समानप्रेमाणः समगुणगणास्तुल्यकरुणाः
स्वरूपाद्या येऽमी सरसमधुरास्तानपि नुमः ॥ ४ ॥
गुरुर्नः श्रीनाथाभिधमवनिदेवान्वयविधुं
नुमो भूषारत्नं भुव इव विभोरस्य दयितं ।
———ल्लसिरवकरवृन्दावनसरः
कथास्वादं लब्ध्वा जगति न जनः क्वापि रमते ॥ ५ ॥
गते स्वस्याभीष्टं पदमहह चैतन्यभगवत्-
परीवारे पश्चाद्गतवति च तस्मिन् निजपदं ।
विलुप्ता वैदग्धी प्रणयरसरीतिर्विगलिता
निरालम्बो जातः सुकविकवितायाः परिमलः ॥ ६ ॥
नव स्तवं किं करवाणि वाणि प्राणी न वक्तुं क्षमते त्वदीयां
यतः सुवर्णैव तनोषि मानं त्वमन्यथा क्षणमपि क्षिणोषि ॥ ७ ॥
आत्मनः प्रियतया तनुभाजां नात्मनः क्षतिषु दूषणदृष्टिः ।
सर्व्वतस्तिमिरमस्यति दीपो नात्मनस्तलतिमिरं विनिहन्ति ॥ ७ ॥
निर्म्मलेऽपि सुजनाः स्वचित्ते दोषमेव पुरतः प्रथयन्ते ।
उज्ज्वलेऽपि सति धाम्नि पुरस्तात् धूममेव वमति स्फुटमग्निः ॥ ९ ॥

वर्णादिपर्य्यालकनं विनापि प्रज्ञाद्दयन्ते सुकवेर्वचांसि ।
विनावगाढादपि हस्तिमावान्मनः पुनर्न्येव हि पुष्पनस्यः ॥ १० ॥
तावत्पदानि जायन्ते निर्द्दोषाणि पृथक् पृथक् ।
यावत् स्वरसमासृष्या तानि पश्चाति नो कविः ॥ ११ ॥
निर्म्मलयसि भुवनतलं सततास्विस्रेन परमलेन ।
खलरसने सम्मार्ज्जनि तदपि च भीतिर्भवत्स्पर्शे ॥ १२ ॥
न लवोऽपि लवेन च व्यथायाः परिहृतो विदुर्नोति यस्य जनः ।
न खलो न खलो मतोऽन्यसमवशाः किल केन संत्यजेगुः ॥ १३ ॥
आनन्दवृन्दावननामधेयां चम्पूमिमां कृष्णचरित्रचित्रां ।
मनोविनोदाय रसप्रवाणां चक्रे समोदाय च कर्णपूरः ॥ १४ ॥ इत्यादि ।

End. स्थितो वृन्दारण्ये सततमपि तामिर्मधुपुरीं
गतश्चासां तद्वद्विरहवज्रमप्याचरितवान् ।
अतोऽतर्कैश्वर्य्ये पुनरचिमनि श्रीभगवति
व्रजेश्वर्य्याः सूनौ न किमपि विचित्रं विलसति ॥
चैतन्यकृष्णकरुणोदितवाग्विभूति—
सम्मावजीवनधनस्य जनस्य पुत्रः ।
श्रीनाथपादकमलस्मृतिशुद्धबुद्धि-
चम्पूमिमां रचितवान् कविकर्णपूरः ॥

Colophon. इत्यानन्दवृन्दावने कैशोरलीलालतावितारे द्वाविंशतितमः स्तवकः ॥ समाप्तश्चायमानन्दवृन्दावनाभिधो ग्रन्थः ॥

विषयः । भगवल्लीलावर्णनात्मको द्वाविंशतिभिः स्तवकैर्गुम्फितोऽयं ग्रन्थः । तत्र १ प्रथमस्तवके, वृन्दावनवर्णनं । २ये, श्रीकृष्णजन्मोत्सवादिवर्णनं । ३ये, पूतनावधः । यशोदारोदनं । मथुरातो नन्दस्यागमनवर्णनञ्च । ४र्थे, शकटतृणावर्त्तविवर्त्तनं । ५मे, जृम्भण-रिङ्गण-नामकरण नवनीतापहरण-मृद्भक्षणविश्वरूपदर्शनकथनानि । ६ष्ठे, भाण्डस्फोटन दामबन्धन-यमलार्ज्जुनमोचन-फलक्रमणकीर्त्तनानि । ७मे, वत्सासुरवधन पुलिनभोजन-ब्रह्ममोहनविवरणं । ८मे, युगपत् पौगण्डकैशोरलीलावर्णनं । तत्र व्रजसुन्दरीणां पूर्व्वरागवर्णनं । कन्दुकक्रीड़ा । धेनुकासुरनिपातनञ्च । ९मे, गोकुलव्याकुलता, श्रीकृष्णस्य कालियनागशिरसि नर्त्तनादिकञ्च । १०मे, श्रीकृष्णस्य राधामन्दिरे निमन्त्रणस्वीकारकौतुकवर्णनं । ११शे, चौर्य्यवर्णनं । प्रलम्बासुरवधः । शरद्वर्णनं । गोपीनां वेणुगानाकर्णनं । श्रीकृष्णेन समं राधायाः विलासवर्णनादिकञ्च । १२शे, वस्त्रहरणं । १३शे, यज्ञपत्नीअन्नानुग्रहकीर्त्तनादि । १४शे, वसन्तोत्सववर्णनं । १५शे, गोवर्द्धनधारणादिकं । १६शे, ब्रह्मलो-

कदम्बमवर्णनं । १७,१८,१९,२०, स्तवके, रासविलासवर्णनं । २१ स्तवके, सुरलीचौर्य्यविला-सकीर्त्तनं । २२स्तवके, दोलोत्सववर्णनं ॥

---

**No. 3323.** मुखवर्त्तनी । Substance, country-made paper, 15×6 inches. Folia, 358. Lines, 7 on a page. Extent, 13,000 ślokas. Character, Bengali. Date ? Place of deposit, Sántipura. Krishṇamaya Gosvámí. Appearance, fresh. Prose. Correct.

**Mukhavartaní.** A commentary on the Ánandavrindávana Champu of Kavikarṇapura. By Vrindávana Chakravarttí.

**Beginning.** वत्सास्वाद्य मुङ्कः स्वया रसनया प्रापय्य सत्काव्यतां
देयं भक्तजनेषु भाविषु सुरैर्दुस्प्रापमेतत्त्वया ।
इत्याज्ञापयतेव येन निदधे श्रीकर्णपूराानने
बाल्ये स्वाङ्घ्रिदलाग्रतं गतिरसौ चैतन्यचन्द्रोऽस्तु नः ॥
निसान्तनैसर्गिककृष्णसारलीलायमुखैः पद्मसमास्तीनं ।
श्रीरूपसम्मत्यनुकूलमेव पूर्व्वैः श्रितं संश्रयते सुमेधाः ॥
नन्दोत्सवादिरासान्तां चोलादोलादिकाधिकां ।
श्रीकृष्णलीलां जगन्य कर्णपूरो महाकविः ॥ इत्यादि ।

**End.** परमपूर्णतमप्रकाशे मङ्गेश्वर्य्याः खलौ तव किमद्भुतमिति भावः । तस्याच-जीवमधनस्य श्रीशिवानन्दसेनस्य । इत्यानन्दवृन्दावनटीकायां मुखवर्त्तन्यां द्वाविंशतिस्तवकसङ्गमनं ।

**Colophon.** राधासरस्वीरकुटीरवर्त्तिनः प्रा—वृन्दावनचक्रवर्त्तिनः ।
आनन्दचम्पूविवृतिप्रवर्त्तिनः सन्तो गतिर्मे सुमहानिवर्त्तिनः ॥
समाप्तेयं टीका ।

विषयः । कर्णपूरकृतानन्दवृन्दावनचम्पूकाव्यस्य व्याख्यानं ।

---

**No. 3324.** पिङ्गलटीका । Substance, country-made paper, 16 × 4 inches. Folia, 24. Lines, 8 on a page. Extent, 992 ślokas. Character, Bengali. Date, ? Place of deposit, Rámanagar, Post, Sántipura, Rámatáraṇa Bhaṭṭáchárya. Appearance, decayed. Verse. Incorrect.

**Pingala-ṭíká.** An exegecís on Pingala's aphorisms on versification in the Prakrit language. By Váninátha. The text is noticed under No. 191, Vol. I, page 103 and commentaries, by different authors under No. 1608, Vol. IV, page 172 and No. 2464, Vol. VII, page 220.

**Beginning.** प्रणिपत्य गिरां देवीं मन्दकुन्देन्दुसन्निभां ।
वाणीनाथचकारेमां टीकां प्राकृतपिङ्गले ॥

अथादौ वस्तुनिर्देशं कुर्व्वन् आत्मानं स्तवयति । पिङ्गलनागो जयति उत्कर्षेण वर्त्तते । स कः, यो विविधमात्रैव लघ्वादिमात्रैव सागरस्य पारं प्राप्तोऽपि विमलमतिः सर्वेलं यथा स्यात् तथा । एवं शब्दानां प्रायो लोप इति लोपे सर्व्वलमित्यत्र सकारलोपः । यद्वा विमलमतिर्व्वेलं । किम्भूतः । प्रथमं भाषातरण्डः । इत्यादि ।

**End.** ये मनोहरे रजनीप्रमुखि चन्द्रमुखि कमलनयने द्वात्रिंशमात्रा भवन्ति । तेषां मध्ये एकः करतलगणः प्रकाश्यते मात्रावर्णसुलक्षितं मध्ये षट्चतुःकलगणा कुर्व्वित्यर्थः । शेषं सुगमं ।

**Colophon.** इति मिश्रश्रीवाणीनाथकृतौ पिङ्गलटीकायां द्वितीयो वर्णपरिच्छेदः समाप्तः । समाप्तोऽयं ग्रन्थः ।

विषयः । पिङ्गलनागकृतप्राकृतच्छन्दोग्रन्थस्य व्याख्यानम् ।

---

**No. 3325.** वैराग्यशतकटीका । Substance, country-made paper, 16 × 5 inches. Folia, 19. Lines, 10 on a page. Extent, 558 ślokas. Character, Bengali. Date, ? Place of deposit, Rámanagara, Post S'ántipura, Rámatárana Bhaṭṭáchárya. Appearance, old. Prose. Incorrect.

**Vairágya-śataka-ṭiká.** Exegecis on the Vairágya-śataka of Bhaṭṭrihari. By Mınanátha. Vide No. 2738, Vol. VIII, page 186 for another commentary.

**Beginning.** वाचां देवीं नमस्कृत्य विमकुन्देन्दुसन्निभां ।
वैराग्यशतकव्याख्या मीननाथेन तन्यते ॥

तदादौ ग्रन्थारम्भे शिष्टाचारप्रतिपालनाय कविः स्वीयमभीष्टदेवमभिष्टौति चूडोत्तंसितेति । योगिनां चेतःसद्मनि—इत्यादि ।

**End.** वारितरङ्गचञ्चलतरे वारिणः समुद्रस्य तरङ्गावद्चञ्चलतरे ॥

**Colophon.** इति श्रीमीननाथकृता वैराग्यशतकटीका सम्पूर्णा ।

विषयः । भर्तृहरिकृतवैराग्यशतकस्य व्याख्यानम् ।

---

**No. 3326.** व्यवहारमाधवः । Substance, country-made paper, 17 × 5 inches. Folia, 183. Lines, 8 on a page. Extent, 4,380 ślokas. Character, Nágara. Date, Sм. 1866. Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, fresh. Prose and verse. Correct.

**Vyavahára-mádhava.** On Judicature. By Mádhava Áchárya. The text is being published in the Bibliotheca Indica.

**Beginning.** वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे
यं नत्वा क्रतक्रत्याः स्युस्तं नमामि गजाननम् ।
सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं
मज्जन् सज्जनसङ्गतीर्थनिपुणः सद्वृत्तितीर्थं श्रयन् ।
लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥
सत्यैकव्रतपालको द्विगुणधीसम्पन्नो चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्व्वं सहः ।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दिगन्तप्रत्ययः
स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणक्ष्मापतिः ॥
इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैव्यस्य मेधातिथि-
र्धौम्यो धर्म्मसुतस्य वैण्यन्वपतेः स्वौजानिधेर्गौतमः ।
प्रत्यग्दृष्टिरवन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥
— — — — — ।
श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजकुलं यस्य सर्व्वज्ञः स हि माधवः ॥
— — — — — व्याख्याते आचारप्रायश्चित्ते । अथ व्यवहारः प्रस्तूयते । यद्यप्यृणादानादीनामष्टादशपदानां व्यवहाराणां मध्ये कमपि व्यवहारं पराशरो न व्युत्पादितवान् । इत्यादि ।

**End.** मनुरपि ।
एवं सर्व्वानिमान् राजा व्यवहारान् समापयन् ।
व्यपोह्य किल्बिषं सर्व्वं प्राप्नोति परमां गतिं ॥

**Colophon.** इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां व्यवहारमाधवः समाप्तः । संवत् १८९९ ।

**विषयः ।** पराशरस्मृतिव्याख्यायाः प्रतिश्लिष्टरूपोऽयं सन्दर्भः । तत्र व्यवहारस्वरूपनिरूपणम् । सभानिरूपणम् । सभाप्रवेशविधिकथनं । तत्र सभ्यादिनिरूपणम् । दर्शनाहनिरूपणम् । सभ्यनि-

रूपणम् । राजप्रतिनिधिनिरूपणम् । व्यवहारदर्शनविधिनिरूपणम् । चतुष्पाद्व्यवहारनिरूपणम् । साक्षिनिरूपणम् । तत्संख्यादिकथनम् । साक्षिभेदनिरूपणम् । तत्र द्वैधोत्थापनविधिकथनं । सत्यप्रतिज्ञाविधिकथनम् । तदनुयोजनतत्प्रश्नप्रकारादिकथनम् । लिखितविधानम् । लेख्यविभागादिकथनम् । भुक्तिनिरूपणम् । दिव्यविधिकथनम् । तत्र घटाग्निजलविषकोषादिविधिकथनम् । ऋणादानपदकथनम् । ऋणादानादिविधिकथनम् । वृद्धिनिरूपणम् । तत्परिमाणादिकथनम् । आधिनिरूपणम् । प्रतिभूविधिकथनम् । निक्षेपविधिकथनम् । अस्वामिकविक्रयविधिकथनम् । सम्भूयसमुत्थानविधिकथनम् । अदेयविधिकथनम् । दत्तादत्तविधिकथनम् । वेतनापाकर्मनिरूपणम् । अभ्युपेत्य शुश्रूषाविधिकथनम् । संविद्व्यतिक्रमविधिकथनम् । क्रीतानुशयविधिकथनम् । विक्रीयासम्प्रदानविधिकथनम् । स्वामिपालविवादविधिकथनम् । वाक्पारुष्यादिविधिकथनम् । सीमाविवादविधिकथनम् । स्तेयादिनिरूपणम् । दण्डपारुष्यविधिकथनम् । वाक्पारुष्यविधानम् । स्तेयविधिकथनम् । साहसविधिनिरूपणम् । स्त्रीसङ्ग्रहणविधिकथनम् । दायभागनिरूपणम् । द्यूतसमाह्वयविधिकथनम् । प्रकीर्णकविधिकथनञ्च ।

---

**No. 3327.** अमरुशतकव्याख्या । Substance, country-made paper, 16 × 5 inches. Folia, 115. Lines, 9 on a page. Extent, 2,052 ślokas. Character, Nágara. Date, ? Place of deposit, Rámanagara, Post S'antipura, Rámatárana Bhaṭṭácharya. Appearance, new. Prose: Incorrect.

**Amaruśataka-vyákhyá.** A gloss on Amaru's century of verses. By Bhaṭṭa Devasaṅkara. Vide No. 557 of Vol. II, page 22, and Vol. XVII, page 135, No. 2367.

**Beginning.** चन्द्रविभूषितभालं गौरीवालं गले मणिमालं ।
विघ्नविघातायालं स्मरामि सततेवरिपुजालं ॥
सीताम्बु च कुतूहलं हनुमतो वीर्यं चमत्कारिणं
+ + द्वारचेष्टितेऽखिलसदृशं धैर्याग्निनं रावणे ।
श्रान्तं पापतमच्छलेऽपवचनेऽस्खलं चारं दूषणे
तीव्रं शूर्पणखामुखे नतमुखं श्रीरामचन्द्रं भजे ॥
क्व मन्दा मे बुद्धिः क्व च रसमयं शङ्करवच-
स्तथापि व्याख्यातुं तरलमनसः शङ्करहतिं ।
सहायो मे श्रीमद्गुरुचरणपाथोजयुगलं
तथा ताराम्बायाः पदकमलयोर्धूलिपटलं ॥

रामेश्वरपुरनिवासी पुरोहितो देवशङ्करः सङ्क्षद्दां ।
अमरुकशतकस्य टीकां करोति विदुषां प्रमोदाय ॥

अथ यद्यपि ग्रन्थारम्भकर्णुरिष्टदेवतायाः शृङ्गारमूर्त्तेः स्मरणमपेक्षितः । स च कटाक्षः आर्द्रतामुष्ण इत्यादि ।

**End.** विप्रलम्भे उन्मादावस्थेयं ।
ग्रन्थो ह्ययं शङ्करपादपद्मव्याख्यानरूपः कुतुकान्मया कृतः ।
कृताञ्जलिप्रार्थितपण्डितौघैर्विलोकनीयोऽथ विशोधनीयः ॥
निर्म्मलमपि पानीयं निर्म्मल्यं निपीयते निपुणैः ।
मद्ग्रन्थेऽपि च बुधैर्निपुणं विभाव्य तथैव यतितव्यं ॥
— — — — — — ।

**Colophon.** इति श्रीराजनपुरस्थान + + + + कृतनिवासपुरोहितोपनामकभट्टदेवशङ्करनाम्नां नाभाथि(?)कृतेयममरुशतकव्याख्या समाप्ता ।

विषयः । अमरुशतकस्य व्याख्यानम् ।

---

**No. 3328. काव्यालङ्कारः** । Substance, country-made paper, 17 × 4 inches. Folia, 68. Lines, 6 on a page. Extent, 1,198 ślokas. Character, Bengali. Date, Śm. 1719. Place of deposit, Káugáchhi, Post S'ántipura, Nílamaṇi Bhaṭṭachárya. Appearance, decayed. Verse. Correct.

**Kávyálaṅkára.** A treatise on rhetoric. By Rudraṭa.

**Beginning.** अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः ।
उद्भिन्नवश्मश्रुश्रेणिरिव गणाधिपो जयति ॥
सकलजगदेकशरणं प्रणम्य चरणाम्बुजद्वयं गौर्य्याः ।
काव्यालङ्कारोऽयं ग्रन्थः क्रियते यथायुक्ति ॥
अस्य हि पौर्व्वापर्य्यं पर्य्यालोच्याचिरेण निपुणस्य ।
काव्यमलङ्कर्णुमलंकर्णुवदारा मतिर्भवति ॥ इत्यादि ।

**End.** जयति जननमिष्टाद्दुरन्तो भवानी
जयति निजविभूतिव्याप्तविश्वो मुरारिः ।
जयति गजवक्त्रः सोऽप यस्य प्रसादा
दुपशमति समस्तो विघ्नवर्गोपसर्गः ॥

**Colophon.** इति श्रीरुद्रटकृते काव्यालङ्कारे षोडशोऽध्यायः ।

विषयः। काव्यप्रयोजनादिकथनं। काव्यकारणनिदानकथनं। शक्तिस्वरूपादिकथनं। गुण निरूपणादिनिरूपणं। काव्यस्वरूपादिकथनं। पाञ्चाल्यादिरीतिकथनं। वाक्यलक्षणादिकथनं। भाषाभेदनिरूपणं। गुणदोषनिरूपणं। शब्दालङ्कारकथनं। तत्र वक्रोक्तिलक्षणं। अनुप्रासलक्षणादिकथनं। मधुरादिवृत्तिपञ्चकनिरूपणं। यमकलक्षणादिकथनं। श्लेषलक्षणादिकथनं। चित्रालङ्कारनिरूपणं। तत्र मुषल-शर-शूल-शक्ति-हल-रथपद-तुरगपद-गजपद-मुरजबन्धादिकथनञ्च। शब्दालङ्कारदोषनिरूपणं। अथ अर्थालङ्कारनिरूपणं। तत्र वास्तव-औपम्य-अतिशय-श्लेषरूपाश्चतुर्विधा एव अर्थालङ्काराः। अन्ये तु तत्तद्वाक्यभेदा एवेतिनिरूपणं। तत्र सहोक्तिकथनं। समुच्चयकथनं। जातिकथनं। यथासंख्यकथनं। भावकथनं। पर्य्यायकथनं। विषमकथनं। अनुमानकथनं। दीपककथनं। परिकरकथनं। परिवृत्तिकथनं। परिसंख्याकथनं। हेतुकथनं। कारणमालाकथनं। व्यतिरेककथनं। अन्योन्यकथनं। उत्तरकथनं। सारकथनं। सूक्ष्मकथनं। लेशकथनं। अवसरकथनं। मीलितकथनं। एकावलीकथनं। उपमाकथनं। उत्प्रेक्षाकथनं। रूपककथनं। अपह्नुतिकथनं। संशयकथनं। समासोक्तिकथनं। मतकथनं। उत्तरकथनं। अन्योक्तिकथनं। प्रतीपकथनं। अर्थान्तरन्यासकथनं। उभयन्यासकथनं। भ्रान्तिमत्कथनं। आक्षेपकथनं। प्रत्यनीककथनं। दृष्टान्तकथनं। पूर्व्वकथनं। सहोक्तिकथनं। समुच्चयकथनं। साम्यकथनं। स्मरणकथनं। अन्यविधपूर्व्वकथनं। विशेषकथनं। उत्प्रेक्षाकथनं। विभावनाकथनं। तद्गुणकथनं। अधिककथनं। विरोधकथनं। विषमकथनं। असङ्गतिकथनं। पिहितकथनं। व्याघातकथनं। अहेतुकथनं। अविशेषविरोधाधिकादिरूपश्लेषकथनं। सङ्करनिरूपणं। अथ अर्थालङ्कारदोषनिरूपणं। काव्यश्रवणफलकथनं। रसनिरूपणं। तत्र शृङ्गाररसनिरूपणं। वीरनिरूपणं। करुणनिरूपणं। वीभत्सनिरूपणं। भयानकनिरूपणं। अद्भुतनिरूपणं। हास्यनिरूपणं। रौद्रनिरूपणं। शान्तनिरूपणं। प्रेयोनिरूपणञ्च। वीरादिरसेषु रीतिनियमनं। अथ काव्यकथाख्यायिकादिलक्षणञ्च।

---

**No. 3329.** काव्यालङ्कारटिप्पणम्। Substance, country-made paper, 16 × 5 inches. Folia, 88. Lines, 8—10 on a page. Extent, 3,2?6 S'lokas. Character, Bengali. Date, ? Place of deposit, Káugáchhi, Post S'ántipura, Nílmaṇi Bhaṭṭácharya. Appearance, decayed. Prose. Correct.

**Kávyálaṅkára-ṭippana.** A gloss on the last preceding work. By Rudraṭa.

**Beginning.** निःशेषापि त्रिलोकी विमयपरतया मन्नमन्तो पुरस्ता-
द्यस्याकम्प्रिद्वन्द्वसक्ताङ्गुलिविमलनखादर्शसंक्रान्तदेहा।
निर्भीतिस्थानिलीना भयदभवमहारातिभीत्येव भाति
श्रीमान् नाभयदेवः स भवतु भवतां शर्म्मणे कर्म्मसक्तः॥

पूर्व्वमहामतिविरचितमहत्स्वमुसादेण किमपि रचयामि ।
संचिप्ततरं रुद्रकाव्यालङ्कारटिप्पणकं ॥

इह शास्त्रकारः शिष्टस्थितिपालनार्थं अविघ्नेन शास्त्रसमाप्त्यर्थञ्च प्रथममेव तावद्‌गणनायकस्य स्तुतिमाह । अविरलेति । गणाधिपो विनायकः जयति सर्व्वोत्कर्षेण वर्त्ततां । इत्यादि ।

**End.** जयतीति सुगमं ।

एवं रुद्रटकाव्यालङ्कृतिटिप्पणकविरचनात् पुण्यं ।
यदवापि मया तस्मात्मनः परोपकृतिरतिभूयात् ॥
थारापद्रपुरीयगच्छतिलकः पाण्डित्यसीमाभवत्
सूरिर्भूरिगुणैकमन्दिरमिह श्रीशालिभद्राभिधः ।
तत्पादाम्बुजषट्पदेन नमिना संक्षेपसंप्रेक्षिणः
पुंसो मुग्धधियोऽधिकृत्य रचितं सट्टिप्पणं लघ्वदः ॥
अज्ञानाद्यदिहतथं विहितं किमपीह तन्महामतिभिः ।
संशोधनीयमखिलं रचिताञ्जलिरेष याचेऽहं ॥
सप्तशतयमन्यूनं ग्रन्थोऽयं पिण्डितोऽखिलः ।
द्वाविंशत्यक्षरश्लोकप्रमाणेन सुनिश्चितं ॥
पञ्चविंशतिसंयुक्तैरेकादशशतैः ।
विक्रमात् समतिक्रान्तैः प्राहषीदं समर्थितं ॥

**Colophon.** इति श्रीरुद्रटकृतकाव्यालङ्कारटिप्पणं नमिसाधुविरचितं समाप्तं । समाप्तश्च षोडशोऽध्यायः समाप्तोऽयं ग्रन्थः ।

**विषयः ।** रुद्रटकृतकाव्यालाङ्काराभिधानालङ्कारसन्दर्भस्य व्याख्यानम् ।

---

**No. 3330.** **व्यवस्थादीपिका, अशौचप्रकरणम् ।** Substance, country-made paper, 16 × 4 inches. Folia, 7. Lines, 6 on a page. Extent, 126 ślokas. Character, Bengali. Date, ? Place of deposit, Rámanagara, Post S'ántipura, Rámatárana Bhattáchárya. Appearance, fresh. Verse. Incorrect.

**Vyávasthá-dípiká.** A digest of Smriti rules. The manuscript is confined to the rules regarding mournings. By Rádhánátha S'armá.

**Beginning.** श्रीगोपालं नमस्कृत्य श्रीराधानाथभूसुरः ।
व्यवस्थादीपिकाग्रन्थे वक्ष्यशौचव्यवस्थितिं ॥

तथाद्यौ रजस्वलाशौचं । रजस्वला चतुर्थेऽह्नि शुद्धा स्नानेन लौकिके । दैवं पैत्रञ्च पञ्चम तच शुद्धा तु पञ्चमे । पुनर्यदि रजोयोगः सप्तदशदिनाबधेः । इत्यादि ।

**End.** निमित्तात्तान्निमित्तोऽशौचं न स्यात् तदपरो यदि ।
स्नात्वा तदन्नं भुञ्जीत तदा पूर्व्वोक्तमाचरेत् ॥

**Colophon.** इति व्यवस्थादीपिकायामशौचप्रकरणम् ।
इत्यशौचव्यवस्थोक्ता श्रीराधानाथशर्म्मणा ।
निविष्टा बुद्धिबोध्यार्थे शोध्या सद्भिर्महत्तमैः ॥

**विषयः ।** अशौचव्यवस्थानिरूपणम् ।

---

**No 3331.** विवेकधैर्य्याश्रयः । Substance, country-made paper, 12 × 3 inches. Folia, 3. Lines, 7 on a page. Extent, 24 ślokas. Character, Nágara. Date, ? Place of deposit, Rámanagara, Post S'ántipura, Rámatárana Bhattáchárya. Appearance, fresh. Verse. Incorrect.

**Viveka-dhaiyyáśraya.** A treatise on dispassion and patience as ancilatory to devotion. By Valáváchárya.

**Beginning.** विवेकधैर्य्ये सततं रक्षणीये तथाश्रयः ।
विवेकस्तु हरिः सर्व्वं निजेच्छातः करिष्यति ॥
प्रार्थिते वा ततः किं स्यात् स्वाम्यभिप्रायसंशयात् ।
सर्व्वत्र तस्य सर्व्वं हि सर्व्वसामर्थ्यमेव च ॥ इत्यादि ।

**End.** एवमाश्रयणं प्रोक्तं सर्व्वेषां सर्व्वदा हितं ।
कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिः ॥

**Colophon.** इति श्रीवल्लभाचार्य्यविरचितो विवेकधैर्य्याश्रयः सम्पूर्णः ।

**विषयः ।** भगवद्विषयकविवेकधैर्य्याश्रयणेनैव भक्तिर्लभ्यते इति निरूपणम् ।

---

**No. 3332.** मनोरमा । Substance, country-made paper, 14 × 4 inches. Folia, 70. Lines, 10 on a page. Extent, 1,552 ślokas. Character, Bengali. Date, ? Place of deposit, Rámanagara, Post S'ántipura, Rámatárana Bhattáchárya. Appearance, fresh. Prose. Incorrect.

**Manoramá.** A gloss on the Vidagdhamukhamandana of Dharma Dása. By Tárachandra.

**Beginning.** श्रीगोकुलेशपदपद्ममधुव्रतेन ।
नाराभिधेन कविना शिवराजधान्याम् ।
विद्वत्कुलोपकृतये क्रियते स्फुटार्था
टीका विदग्धमुखमण्डनसंज्ञकस्य ॥
विमत्सराणां विदुषां चिरं टीका मया कृता ।
मुदं वितनुतां नित्यमेषा विद्वन्मनोरमा ॥
जैनकृतेऽस्मिन् ग्रन्थे सम्यग्ज्ञातुं मनो यदा विज्ञाः ।
विद्वन्मनोरमां मे द्रष्टुं यत्नं तदा कुरुत ॥

इह ग्रन्थस्य कर्त्ता निर्विघ्नपरिसमाप्त्यर्थं कायिकवाचिकमानसिकपापापहारिरूपं स्वेष्टदेवतास्मरणात्मकं मङ्गलमाचरति सिद्धौषधानीति । इत्यादि ।

**End.** सा रम्या रमणीया रन्तुं योग्या वा ।
नाराचन्द्रेण कविना कृता चैषा मनोरमा ।
टीके + + स्यां पूर्णोऽयं परिच्छेदश्चतुर्थकः ॥
कोषाननेकानवलोक्य टीका कायस्थकूजामणिना कृतैषा ।
नाराभिधेयेन सतां कवीनामाचन्द्रतारं रमतां मनःसु ॥

**Colophon.** इति श्रीनाराचन्द्रेण विरचिता विदग्धमुखमण्डनटीका मनोरमा समाप्ता ।

विषयः । धर्मदासकृतविदग्धमुखमण्डनस्य व्याख्यानम् ।

---

**No. 3333.** रसवती । Substance, country-made paper, 16 × 5 inches. Folia, 82 Lines, 7 on a page. Extent, 1,363 ślokas. Character, Bengali. Date, ? Place of deposit, Zilá Nadiyá, Gráma-Dhuvulíyá, Gaṅgágovinda V.dyáratṇa. Appearance, fresh. Prose. Incorrect.

**Rasavatí.** A gloss on the author's work entitled Gopála Champu. By Jívarája Díkshita. The text has been noticed in Vol. I, page 40, No. 72.

**Beginning.** चक्षुःश्रव मत्यमल्पकरकाष्ठरावलीमेकतः
पश्चैषोः शरमन्यतोऽर्धशशिनं सूते नवं पल्लवं ।
चित्रं चुम्बति चक्रवाकमिथुनं प्रोद्दाममाराभवं
ज्योत्स्ना कापि विधौ मता वितनुतां गङ्गातरङ्गान् विधेः ॥
कविजीवराजनामा तामाननुतेऽभिनम्य गौर्य्यङ्घ्री ।
गोपालभूपचम्प्वाख्यां ख़लु रसवत्याख्यां ॥

ग्रन्थनिर्म्मिन्नतासिद्धार्थमादौ मङ्गलमाचरयति । अद्रिति ॥ अथ मङ्गलं प्रतिपाद्यविषयकं । इत्यादि ।

**End.** रसालाख्यः पाकः । मिश्रमाखाद्यं माधिमीमामकं बन्धः ॥
मद्युति माला मदीयं तनूजघनभारतीरसविलासः ।
— — — — — — ॥

**Colophon.** इति श्रीमद्द्विजकदम्बचरणसकलविपुलकविकुलतिलकमखाराष्ट्रदेशवासिधिसुधानिधिभारद्वाजकुलकाव्यारराजवंशकाशीरवजगद्गुरुश्रीमद्दीक्षितकविसामराजसूरिवरसूनुदीक्षितकामराजसूरितनयदीक्षितव्रजराजकविराजात्मजबालकविदीक्षितजीवराजविरचितायांरसवत्याख्यायां गोपालचम्पूव्याख्यायां पूर्व्वार्द्धं समाप्तं ।

विषयः । निजनिर्म्मितगोपालचम्पूकाव्यस्य व्याख्यानम् ।

---

**No. 3334 अमृतलहरी ।** Substance, country-made paper, 15 × 6 inches. Folia, 5. Lines, 12 on a page. Extent, 172 ślokas. Character, Bengali. Date, ? Place of deposit, Dhuvuliya Gráma, Zilá Nadiyá, Gaṅgágovinda Vidyáratṇa. Appearance, fresh. Prose. Incorrect.

**Amṛita-laharí.** A gloss on Válmiki's hymn to the Ganges. By Harinátha Gosvámí, son of Manohara Gosvámí.

**Beginning.** श्रीमन्नाथाभिधो नत्वा श्वशुरः पादपङ्कजं ।
वाल्मीकिकृतगङ्गाष्टटीकां वितनुतेऽमलां ॥

तत्र वाल्मीकिनामा ऋषिवर्य्यः श्रीगङ्गास्तोत्राष्टकेन स्तोतुं सङ्कल्पं प्रार्थयन्नाह । मातरिति । हे मातः भवतीं त्वां प्रार्थये याचे । इत्यादि ।

**End.** यद्यदर्थपठितं तत्तदेवार्थप्रदमित्यर्थः ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्गोवर्द्धनधरानन्दपुरीपादपद्मपरागरञ्जितभालस्थलश्रीगोस्वामिहरिनाथेन श्रीगोस्वामिमनोहरसूनुना विरचिताऽमृतलहरी नाम गङ्गाष्टकटीका समाप्ता ॥

गङ्गाष्टकस्य टीकेयं हरिनाथेन कल्पिता ।
कृपाकटाक्षैः सत्कुर्व्वन्त्वेनां सन्तो दयालवः ॥
वर्षे विक्रमभूपतेः परिमिते सिन्ध्वाब्धमुन्यब्जके
मासे भाद्रपदेऽसितेऽष्टमितिथौ वारे बुधे भूसुरः ।

चैतन्यं तदमाश्रिते कुशपुरे श्रीनाथनामाख्यया-

ष्टीकां अङ्कुसुतोऽष्टकस्य सुधियां कण्ठेषु सा सज्जतां ॥ इति शम् ॥

विषयः । वाल्मीकिकृतगङ्गाष्टकस्य व्याख्यानम् ।

---

**No. 3335.** साम्बपञ्चाशिका । Substance, country-made paper, 13 × 4 inches. Folia, 8. Lines, 6 on a page. Extent, 107 ślokas. Character, Bengali. Date, ? Place of deposit, Dogechhe Gráma, Zilá Nadiyá, Kálikiṅkara Gosvámí. Appearance, decayed. Verse. Correct.

**Sámba-pañchásiká.** A hymn to the Sun-god in 50 stanzas. By Sámba.

**Beginning.** शब्दार्थत्वविवर्त्तमानपरमज्योतीरवो(?)गोपते-

यन्नीथोऽभ्युदितः पुरोऽवगततया यस्य त्रयी मण्डलं ।

भाव्यद्दर्पणपदक्रमेरिततमःसप्तस्वराश्वेर्वियद्-

विद्यास्यन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे ॥

योमित्यन्तर्नदति नियतं यः प्रतिप्राणिशब्दो

वाणी यस्मात् प्रसरति परा शब्दतन्मात्रगर्भा ।

प्राणापानौ वहति च समौ यो मिथोग्रासपक्षौ

देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ इत्यादि ।

**End.** इति परमरहस्यश्लोकपञ्चाशदेषा

नपनपवनपुण्या सागमब्रह्मचर्चा ।

हरतु दुरितमस्मद्दर्शिताकर्णिता वो

दिशतु च शुभसिद्धिं माहवन्नक्तिभाजां ।

**Colophon.** इति साम्बपञ्चाशिका सम्पूर्णा ।

विषयः । सूर्यस्य माहात्म्यादिकीर्त्तनं ।

---

**No. 3336.** साम्बपञ्चाशिकाविवृतिः । Substance, country-made paper, 13 × 5 inches. Folia, 18. Lines, 8 on a page. Extent, 351 ślokas. Character, Bengali. Date, ? Place of deposit, Dogeckhe Gráma, Zilá Nadiyá, Kálikiṅkara Gosvámí. Appearance, decayed. Prose. Incorrect.

**Sámba-pañchásiká-vivṛiti.** A gloss on the next preceding work. By Kshemaja.

Beginning. पुष्यान् देवाबद्धतविसरे(?) मिन्दुमाबाद्य सम्यग्-
भाभिः स्वाभीरसयति रसं यः परं नित्यमेव ।
क्षीणं क्षीणं पुनरपि च तं पूरयत्येवमीदृग्-
दोलालीलोल्लसितहृदयं नौमि चिद्वानुमेकम् ॥
एतदादेशवैवश्यप्रोन्मिषद्धिषणा वयं ।
वितन्महे मनाक् श्रीमत्साम्बपञ्चाशिकास्तुतिं ॥
सोऽयं परामृतरसो रसज्ञैरिह रस्यतां ।
आगूण्याव्याहृतस्पर्शः शतपद्या हि शाम्यते ॥

समस्तागममन्त्र + यरहस्यविस्तारयोगिसहस्रसम्प्रदायसम्पूर्णः श्रीवासुदेवस्य भगवतः पुत्रः साम्बः स्वात्मविमृष्टस्तुतिं जगतोऽनुग्रहाय वक्तुमुपक्रमते शब्दार्थलेति । इत्यादि ।

End. अभीष्टां मोक्षलक्ष्मीं घटयतमिति शिवं ।
कश्चिद्देवः परशिवसमावेशगाढानुरागी-
द्रेकस्फूर्जन्नभिनवदशावेशवैवश्यशाली ।
मत्स्तोतेऽस्मिन् विवृतिरचनां क्षेमराजो न्ययुङ्क्त
त्येतन्मैवं झटिति घटितं दर्शनीयं हि सद्भिः ॥

Colophon. इति महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादपद्मोपजीविश्रीक्षेमराजकृतौ साम्बपञ्चाशिकाविवृतिः समाप्ता ।

विषयः । साम्बपञ्चाशिकाया व्याख्यानम् ।

---

No. 3337. योगविवेकद्वात्रिंशिका । Substance, country-made paper. 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 Slokas. Character, Nágara. Date, ? Place of deposit, Válucha a, Panchayatapausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Yogaviveka-dvátriñsiká.** A short summary of the principles of the Yoga meditation as inculcated by Jains. Anonymous.

Beginning. इच्छाशास्त्रसामर्थ्यमाश्रित्य त्रिविधोऽप्ययं ।
गीयते योगः शास्त्रज्ञैर्निर्व्याजं यो विधीयते ॥
चिकीर्षोः श्रुतशास्त्रस्य शानिनोऽपि प्रमादिनः ।
कालादिविकलो योग इच्छायोग उदाहृतः ॥ इत्यादि ।

End. फलावञ्चकयोगस्तु सद्भ्य एव निर्गीयतः ।

सानुबन्धफलसाधाप्रिधर्मसिद्धेः सतां मता ॥
इत्थं योगविवेकस्य विज्ञानाद्वीतकल्मषः ।
यतमानो यथाशक्ति परमानन्दमश्नुते ॥

Colophon. इति योगविवेकद्वात्रिंशिका समाप्ता ।

विषयः । जैनमतेन इच्छायोगादिकथनं ।

---

No. 3338. योगावतारद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Válucbara, Panchâyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Yogávatára-dvátriṅśiká.** On conscious and unconscious Yoga meditation of the Jains. Anonymous.

**Beginning.** सम्प्रज्ञाताऽपरश्चेति द्विधाऽन्यैरयमीरितः ।
सम्यक् प्रज्ञायते येन सम्प्रज्ञातः स उच्यते ॥
विकल्पेन विचारेणानन्देनास्मितयाऽन्वितः ।
भाव्यस्य भावनाभेदात् सम्प्रज्ञातश्चतुर्विधः ॥ इत्यादि ।

**End.** मिथ्यात्वे मन्दतां प्राप्ते मिताद्या अपि दृष्टयः ।
मार्गाभिमुखभावेन कुर्व्वते मोक्षयोजनं ॥
प्रकृत्या भद्रकः शान्तो विनीतो मृदुरुत्तमः ।
अत्र मिथ्यादृगप्युक्तः परमानन्दभागतः ॥

**Colophon.** इति योगावतारद्वात्रिंशिका समाप्ता ।

विषयः । अन्यमतेन सम्प्रज्ञातासम्प्रज्ञातरूपयोगद्वयविवेचनं ।

---

No. 3339. क्लेशहानोपायद्वात्रिंशिका । Substance, country-made paper. 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Kleśa-hánopáya-dvátriṅśiká.** A treatise on the subject of the destruction of mundane pain according to the doctrines of Jaina philosophy.

H. P. S.

**Beginning.** ज्ञानश्च सदनुष्ठानं सम्यक् सिद्धान्तवेदिनः ।
क्लेशानां कर्म्मरूपाणां नाशोपायं प्रचक्षते ॥

नैरात्म्यदर्शनादन्ये निबन्धनवियोगतः ।
क्लेशप्रहाणमिच्छन्ति सर्व्वथा तर्कवादिनः ॥ इत्यादि ।

End. क्लेशाः पापानि कर्म्माणि बहुभेदानि नो मते ।
योगदेव जयस्तेषां +भोगादनवधिभिः ॥
ततो निर्वपनं ख्यानमनन्तसुपतिष्ठते ।
भवप्रपञ्चरहितं परमानन्दमेदुरं ॥

Colophon. इति क्लेशहानोपायद्वात्रिंशिका समाप्ता ।

विषयः । जैनागमोक्तयोगेनैव अविद्यास्मितारागद्वेषाभिनिवेशरूपपञ्चविधक्लेशनिवृत्तिरिति-निरूपणम् ।

---

**No. 3340.** योगमाहात्म्यद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pauśála. Appearance, old. Verse. Incorrect. Sanskrit.

**Yogamáhátmya-dvátriñśiká.** Thirty-two stanzas on the Sanctity and Superiority of *Yoga.*

H. P. S.

Beginning. शास्त्रस्योपनिषद्योगो योगो मोक्षस्य वर्त्तनी ।
अपायशमनो योगो योगः कल्याणकारकं ॥
संसारहविर्धनितां पुत्रदारादिना यथा ।
शास्त्रेणापि तथा योगं विना जन्म विपश्चितां ॥ इत्यादि ।

End. भरतो भरतक्षोर्णीं भुञ्जानोऽपि महामतिः ।
तत्क्षणं योगमाहात्म्याद्बुभुजे केवलश्रियं ॥
पूर्व्वमप्राप्तधर्म्मापि परमानन्दनन्दितः ।
योगप्रभावतः प्राप मरुदेवः परं पदं ॥

Colophon. इति योगमाहात्म्यद्वात्रिंशिका समाप्ता ।

विषयः । जैनागमोक्तयोगमाहात्म्यादिकथनम् ।

---

**No. 3341.** भक्तिद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pauśála. Appearance, old. Verse. Incorrect Sanskrit.

**Bhakti-dvátriñśiká.** On the necessity of erecting and consecrating temples and doing other acts of religious charity by the devoted followers of Jina.

H. P. S.

Beginning. श्रमणानामियं पूर्णा सूत्रोक्ताचारपालनात् ।
द्रव्यस्तवाद्गटहस्थानां वेशनस्फड़ि + + यं ॥
न्यायार्ज्जितधनो धीरः सदाचारः शुभाशयः ।
भवनं कारयेज्जैनं गटही गुर्व्वादिसम्मतः ॥ इत्यादि ।

End. यच धर्म्मार्थ + त्यादि तदपेक्ष्य दशान्तरं ।
शङ्का सा + किल श्रेयस्तूपेत्यापि प्रवृत्तितः ॥
पूजया परमानन्द + पकारं विना कथं ।
ददाति पूज्य इति चेचिन्तामण्यादयो यथा ॥

Colophon. इति भक्तिद्वात्रिंशिका समाप्ता ।

विषयः । जैनभक्तिमतां तन्मन्दिरादिनिर्म्माणावश्यकतादिकथनम् ।

---

No. 3342. साधुसामग्र्यद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas, Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyatapausála. Appearance. old. Verse. Incorrect. Sanskrit.

**Sádhu-sámagrya-dvátriñśiká.** On the purification of the mind.

H. P. S.

Beginning. ज्ञानेन ज्ञानिभावः स्याद्भिक्षुभावश्च भिक्षया ।
वैराग्येण विरक्तत्वं संयतस्य महात्मनः ॥
विषयप्रतिभासाख्यं तथात्मपरिणामवत् ।
तत्त्वसंवेदनञ्चेति त्रिधा ज्ञानं प्रकीर्त्तितं ॥ इत्यादि ।

End. स्वेच्छाचारे च बालानां मालिन्यं मार्ग + रिणः ।
गुणानां तेन सामग्र्यं गुणवत्पारतन्त्र्यतः ॥
इत्थं विज्ञाय मतिमान् यतिगीतार्थसङ्गकृत् ।
+ + श्रद्धा चरन् धर्म्मं परमानन्दमश्नुते ॥

olophon. इति साधुसामग्र्यद्वात्रिंशिका समाप्ता ।

षयः । चित्तशुद्ध्युपायकथनम् ।

**No. 3343.** चैत्यवन्दनसूत्रम् । Substance, country-made paper, 12 × 5 inches. Folia, 20. Lines, 7 on a page. Extent, 235 ślokas Character, Nágara. Date, ? Place of deposit, Válachara, Pancháyata-pausála. Appearance, old. Prose and verse. Incorrect. Mágadhí.

**Chaitya-vandana-sútra.** The merits of worshipping *Chaityas*, the process of worshipping and the qualification of the worshipper.

H. P. S.

**Beginning.** चत्तारि मङ्गलं (?) । अरिहंता मङ्गलं । सिद्धा मङ्गलं । साहू मङ्गलं । केवलिपन्नत्तो धम्मो मङ्गलं । चत्तारि लोगुत्तमा । अरिहंता लोगुत्तमा । सिद्धा लोगुत्तमा । साहू लोगुत्तमा । केवलिपन्नत्तो धम्मो लोगुत्तमा । इत्यादि ।

**End.** श्रीपुंडरीयगणहरपमुहागणहारिणो महामुणिणो ।
तिहुयणपणमियचलणा सरणं मम मोक्खसिद्धयणा ॥

**Colophon.** इति श्रीचैत्यवन्दनसूत्रं समाप्तं ।

विषयः । चैत्यवन्दनस्य प्रकृष्टशुभाध्यवसायनिबन्धनत्वेन ज्ञानावरणादिसकलकर्मक्षयादिफलत्वादवश्यकर्त्तव्यत्वेन तद्विधिकथनमुखेन तदधिकार्य्यादिकथनम् ।

---

**No. 3344.** श्रावकाराधना । Substance, country-made paper, 12 × 5 inches. Folia, 4. Lines, 15 on a page. Extent, 202 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Prose and verse. Incorrect. Sanskrit

**S'rávakárádhaná.** The process of daily worship, &c., of Jaina laymen. By Samaya-sundara Gani, of Uchch. The work was composed in the year 1667 of the S'aka (?) era.

H. P. S.

**Beginning** श्रीमर्द्धमानं प्रणिपत्य दुष्टकष्टप्रणाशनं ।
श्रावकाराधनां वक्ष्ये सुगमां शिष्यहेतवे ॥

अत्र आराधनायां पञ्च अधिकाराः । सम्यक्त्वशुद्धिः । पापस्थानकपरिहारः । सत्त्वजीवक्षामणं । दुष्कृतगर्हा । सुकृतानुमोदना । इत्यादि ।

**End.** आराधनां सुगमसंस्कृतवाक्यिकाभ्यां
चक्रे क्रमात् समयसुन्दर आदरेण ।
उच्चाभिधाननगरे मणिमालमुक्त-
शिष्याग्रहेण मुनिषड्रसचन्द्रवर्षे ॥

**Colophon.** इति श्रावकाराधना समाप्ता ।

विषयः । श्रावकाणां नित्योपासनादिविधिकथनम् ।

No. 3345. चैत्यवन्दनवृत्तिः, वा ललितविस्तरा। Substance, country-made paper, 13 × 5 inches. Folia, 26. Lines, 15 on a page. Extent, 1,196 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, new. Prose. Generally correct. Sanskrit.

**Chaitya-vandaná-vritti or Lalita-vistará.** A commentary on No. 3343. By Haribhadra Áchárya.

H. P. S.

**Beginning.** प्रणम्य भुवनालोकं महावीरं जिनोत्तमं।
चैत्यवन्दनसूत्रस्य व्याख्येयमभिधीयते॥
अनन्तागमपर्य्यायं सर्व्वमेव जिनागमे।
सूत्रं यतोऽस्य कार्त्स्न्येन व्याख्यां कः कर्त्तुमीश्वरः॥
यावत् तथापि विज्ञातमर्थजातं मया गुरोः।
सकाशादल्पमतिना तावदेव प्रवीम्यहं॥
ये सत्वाः कर्म्मवशतो मत्तोऽपि जड़बुद्धयः।
तेषां हिताय गदतः सफलो मे परिश्रमः॥

इत्यादि। अचिन्त्यमत्र साफल्यं। चैत्यवन्दनस्यैव निष्फलत्वात्। इत्यत्र उच्यते। इत्यादि।

**End.** सम्यग्ज्ञाता गुण एव श्रद्धाद्यतिशयभावतः विधिविरहेण महाकल्याणसिद्धेरित्यलं प्रसङ्गेन।

आचार्य्यहरिभद्रेण दृष्टा सन्न्यायसङ्गता।
चैत्यवन्दनसूत्रस्य वृत्तिर्ललितविस्तरा॥
य एनां भावयत्युच्चैर्मध्यस्थो मात्सरात्मना।
सवन्दनां सबीजं वा नियमादधिगच्छति॥
पराभिप्रायमज्ञात्वा तत्कृतस्य न वस्तुनः।
गुणदोषौ सता वाच्यौ प्रश्न एव तु युज्यते॥
— — — — — ।

**Colophon.** इति ललितविस्तरा नाम चैत्यवन्दनवृत्तिः समाप्ता।
विषयः। चैत्यवन्दनसूत्रस्य व्याख्यानम्।

---

No. 3346. विनयद्वात्रिंशिका। Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Vinaya-dvátriñśiká**. On Jaina religious discipline and how it leads to emancipation.

H. P. S.

**Beginning.** कर्म्मणां प्राग्विनयनाद्विनयो विदुषां मतः ।
अपवर्गफलाढ्यस्य मूलं धर्म्मतरोरयं ॥
ज्ञानदर्शनचारित्रतपोभिश्चपचारतः ।
अयञ्च पञ्चधा भिन्नो दर्शितो मुनिपुङ्गवैः ॥ इत्यादि ।

**End.** विद्यते विनयो येषु + + +रि परैरपि ।
नैरर्थ्यप्रसरीभूय मोक्षमार्गे विलुप्यते ॥
निर्गुणो यो यथाख्यातममेनं तस्य तु सन्निभो ।
स्वयंवराः समायान्ति परमानन्दसम्पदः ॥

**Colophon.** इति विनयद्वात्रिंशिका समाप्ता ।

विषयः । जैनागमोक्तज्ञानदर्शनादीनां विनयभेदत्वकथनपूर्व्वकं विनयादेव मोक्षो भवतीति-
कथनम् ।

---

No. 3347. केवलिभुक्तिव्यवस्थाद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pausála. Appearance, old. Verse. Incorrect.

**Kevali-bhukti-vyavasthá-dvátriñśiká**. The mode of eating, &c., among the Jaina monks. It is a work belonging to the Svetámbara sect who appear to rejoice at the discomfiture of their naked rivals, the Digambaras.

H. P. S.

**Beginning.** सर्व्वथा दोषविगमात् कृतकृत्यतया तथा ।
आचारसंज्ञाविरहादनन्त + + सङ्गतेः ॥
दग्ध + + सरत्वाच्च वेदनीयस्य कर्म्मणः ।
अशोद्भवतया देवगतयोः सुखदुःखयोः ॥ इत्यादि ।

**End.** कलहैः कल्पितैर्दुष्टैः खादितो नैव दुष्यति ।
चोरापुत्रविस्फूर्जीभिः स्पृश्यते नैव भानुमान् ॥
परमानन्दितैरित्थं दिगम्बरविनिपातात् ।
प्राप्तं सिताम्बरैः + +जैनं जयति शासनम् ॥

**Colophon.** इति केवलिभुक्तिव्यवस्थाद्वात्रिंशिका समाप्ता ॥
विषयः । जिनसम्मतकेवलिनां भुक्त्यादिकथनम् ।

---

**No 3348.** मुक्तिद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Válucbara, Panch".yata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Mukti-dvátriñśaká.** The establishment of the Jaina theory of emancipation by the refutation of the theories on the same subject of other Schools.

H. P. S.

**Beginning.** दुःखध्वंसः परा मुक्तिर्मानं दुःखत्वमत्र च ।
आत्मकालान्यग + + प्रतियोगिन्यवृत्तिमान् ॥
सत्कार्य्यमात्रवृत्तित्वात् प्रागभावो सुखस्य यः ।
तदनादा + + ध्वंसप्रतियोगिनि वृत्तिमत् ॥ इत्यादि ।

**End.** उपचारोऽत्र ना + + साक्षिणि चात्र दृश्यते ।
नित्यं विज्ञानमानन्दं ब्रह्मेत्यप्यपरा श्रुतिः ॥
परमानन्दलयतां परमानन्दयाचनां । (?) ।
परमानन्दपीताः स्मः परमानन्दचर्य्यया ॥ (?) ॥

**Colophon.** इति मुक्तिद्वात्रिंशिका समाप्ता ।
विषयः । अन्याभिमतमुक्तिलक्षणनिन्दाकथनपूर्व्वकं जैनोक्तमुक्तिकथनम् ।

---

**No. 3349.** सज्जनस्तुतिद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 4. Lines, 6—7 on a page. Extent, 68 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchyáata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Sajjana-stuti-dvátriñśiká.** In praise of religious men known for their acts of charity according to the Jaina doctrine.

H. P. S.

**Beginning** नाम सज्जन इति निवर्णकं कर्णकोटरकुटुम्बि + भवेत् ।
मोक्षसन्ति विषसक्तयस्तदा दिव्यमन्त्रनिहताः खलोक्तयः ॥
स्याद्बलौ बलमिव प्रदर्शयेत् सज्जनेषु यदि सत्सु दुर्ज्जनः ।
किं बलम्भु तमसोऽपि वर्ण्यते यद्भवेद्दृषति भानुमालिनि ॥ इत्यादि ।

**End.** यत्र स्याद्वादविद्यापरिमितनिमिरध्वान्तसूर्यांशुधारा-
निस्तारा जन्मसिन्धोः शिवपुरपदवीं प्राणिनो यान्ति यस्मात् ।
अस्माकं किञ्च यस्माद्भवति शमरसैर्नित्यमाकर्णकृप्ति-
जैनेन्द्रं शासनमद्विलसति परमानन्दकन्दोऽम्बुवाहः ॥

**Colophon.** इति सज्जनस्तुतिद्वात्रिंशिका समाप्ता ।

विषयः । जैनागमोक्तविधानेन सत्कर्मशालिनां सज्जनानां प्रशंसादिकथनम् ।

---

**No. 3350.** तत्त्वार्थशास्त्रटीका । Substance, country-made paper, 13 × 4½ inches. Folia, 484. Lines, 13 on a page. Extent, 18,344 ślokas. Character, Nágara. Date, Sm. 1687. Place of deposit, Válucbara, Páñcháyata-pausála. Appearance, old. Prose. Generally correct. Sanskrit.

**Tattvártha-śástra-ṭíká.** A commentary on the Jaina work entitled *Tattvártha-sútra.* By Siddhasena Gaṇi, disciple of Bhásvámí, who received his knowledge of Jaina doctrines from Siñha Súra, who was in his turn the disciple of Dina Gaṇi.

**Beginning** ॐ नमः सिद्धेभ्यः ।
\+ + + + + ध्वंस तत्त्वार्थस्य विधीयते ।
टीका संक्षेपतः स्पष्टा मन्दबुद्धिविबोधिनी ॥

सम्यगर्हत्प्रवचनमधिगम्य कालसचनग्रहागुरादेः परित्राणिमवलोक्य सत्त्वानुकम्पया ममामतो मोक्षमार्गमुपदेष्टुकाम आचार्य्य इदमाह । सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोति । अत्र सम्यग्दर्शनशुद्धमिति कतरो विग्रह आश्रीयते । यदि तावत् सम्यग्दर्शनेन शुद्धमिति करोति करणे तृतीया । इत्यादि ।

**End.** सुखलक्षणमनन्तमनुपमं परमार्थं मोक्षमचिरेण प्राप्स्यतीति ॥

**Colophon.** आसीद्देवगणिक्षमाश्रमणतां प्रापत् क्रमेणैव यो
विद्वत्सु प्रतिभागुणेन जयिना प्रख्यातकीर्त्तिर्भुवं ।
बोढा शीलभरस्य सच्छ्रुतनिधिर्मोक्षार्थिनामग्रणी-
र्जम्बालामलमुख्यकैर्निजतपस्तेजोभिरत्यावृतं ॥

— — — — — — ।

तस्याभूत्परतत्त्वादिनिर्जयपटुः शैष्यो दधच्छूरतां
नाम्ना व्यश्रुत सिंहसूर इति च ज्ञाताखिलार्थागमः ।
शिष्यः शिष्टजनप्रियः प्रियचिरत्राचारचेष्टानया-

दृष्यामां शरव्यं भवौघपतनशङ्कीयार्द्दितानां भुवि ॥

— — — — — — ।

शिष्यस्तस्य बभूव राजकशिरोरत्नप्रभाजालक-

व्यासक्तस्फुरितस्फुरन्नखमणिप्रोद्भासिपादद्वयः ।

भास्वामीति विजित्य नाम जगद्वे यशोजसां सम्पदा

मा + + भवनिर्जयोद्यतमतिर्विद्वज्जनाग्रेसरः ॥

— — — — — — ।

तत्पादरजोऽव्ययवः स्वल्पागमशेमुषीकबहुजाड्यः ।

तत्त्वार्थशास्त्रटीकामिमां व्यधात् सिद्धसेनगणिः ॥

अष्टादशसहस्राणि द्वे शते च तथा परे ।

अशीतिरधिका द्वाभ्यां टीकायाः श्लोकसङ्ग्रहः ॥

ग्रन्थाग्रं १८२८० । संवत् १९८७ ॥

विषयः । जैनतत्त्वार्थसूत्रस्य व्याख्यानम् ।

---

**No. 3351.** तत्त्वार्थवृत्तिः, वा सर्व्वार्थसिद्धिः । Substance, country-made paper, 5 × 13 inches. Folia, 120. Lines, 14 on a page. Extent, 4,183 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panch////áyata-pausála. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Tattvártha-vṛitti** ALIAS **Sarvártha-siddhi.** A commentary on the above described work.

**Beginning** मोक्षमार्गस्य नेतारं भेत्तारं कर्म्मभूभृतां ।

ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ॥

कश्चिद्भव्यः प्रत्यासन्ननिष्ठः प्रज्ञावान् स्वहितमुपलिप्सुः विविक्ते परमरम्ये भव्यसत्त्वविश्रामास्पदे क्वचिदाश्रमपदे मुनिपरिषन्मध्ये सन्निषण्णं मूर्त्तमिव मोक्षमार्गं वाग्विसर्गं वपुषा निरूपयन्तं युक्त्यागमकुशलं परहितप्रतिपादनैककार्य्यमार्गनिषेव्यं निर्ग्रन्थाचार्य्यवर्य्यमुपसद्य सविनयं परिपृच्छति स्म । भगवन् किं नु खलु आत्मने हितं स्यादिति । स आह मोक्ष इति ।

**End.** एवं कालादिविभागेऽपि यथागममल्पबहुत्वं वेदितव्यं ॥

स्वर्गापवर्गसुखमाप्तुमनोभिरार्य्यै-

र्जैनेन्द्रशासनवरामृतसारभूता ।

सर्व्वार्थसिद्धिरिति सद्भिरुपात्तनामा

तत्त्वार्थवृत्तिरनिशं मनसा प्रधार्य्या ॥

तत्त्वार्थवृत्तिमुदितां विदितार्थतत्त्वाः
शृण्वन्ति ये परिपठन्ति सुधर्मभक्त्या
हस्ते कृतं परमसिद्धिसुखामृतं तै-
र्मर्त्यामरेश्वरसुखेषु किमस्ति वाच्यं ॥
येनेदमप्रतिहतं सकलार्थतत्त्व-
मुद्योतितं विमलकेवललोचनेन ।
भक्त्या तमद्भुतगुणं प्रणमामि वीर-
मारान्नरामरगणार्चितपादपीठं ॥

Colophon. इति तत्त्वार्थवृत्तौ सर्वार्थसिद्धिसंज्ञिकायां दशमोऽध्यायः समाप्तः । ग्रन्थ-संख्या ४१०० ।

विषयः । जैनतत्त्वार्थसूत्रस्य व्याख्यानम् ।

---

No. 3352. मित्राद्वात्रिंशिका । Substance, country-mode paper, 12 x 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas Character, Nágara. Date, ? Place of deposit, Válucbara, Panchájata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Mitrádvátriñśika.** Thirty-two stanzas on most beneficial Jain obligations.

Beginning. मित्रायां दर्शनं + + योगाङ्ग यमो भवेत् ।
अखेदो देवकार्यादावन्यत्राद्वेष एव च॥
अहिंसासूनृतास्तेयब्रह्माकिञ्चनता यमाः ।
दिक्कालाद्यनवच्छिन्नाः सर्व्वे भौमा महाव्रतं ॥ इत्यादि ।

End. विनैनमतिमूढानां येषां योगोऽनमस्पृहा ।
तेषां हन्त विना नावमुत्तितीर्षा महोदधेः ॥
तन्मित्रायां स्थितो दृष्टो सद्योगेन गरीयसा ।
समाधत्त गुणस्थानं परमानन्दमश्नुते ॥

Colophon. इति मित्राद्वात्रिंशिका समाप्ता ।
विषयः । जैनमतेन मित्रायां योगनिरूपणादिकम् ।

---

No. 3353. ताराद्वियद्वात्रिंशिका । Substance, country-made paper, 2 x 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character,

Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Táráditraya-dvátriñśika.** Thirty-two stanzas on the planets in the Jain system.

**Beginning.** ताराद्यान्तु सनाकं स्पष्टं दर्शनं नियतं शुभं ।
अनुद्वेगो हितारम्भो जिज्ञासा तत्त्वगोचरा ॥
नियमाः शौचसन्तोषौ स्वाध्यायतपसी अपि ।
देवताप्रणिधानञ्च योगाचार्य्यैरुदाहृतं ॥ इत्यादि ।

**End.** एते स्थिरेच्छयात्मानं मलिनं कुर्व्वते निजं ।
वड्डिशामिषवत्तुच्छे प्रसक्ता भोगतः सुखे ॥
अवेद्यसंवेद्य+दं सत्सङ्गागमयोगतः ।
तद्दुर्गतिपदं जेयं परमानन्दमिच्छता ॥

**Colophon.** इति तारादित्रयद्वात्रिंशिका समाप्ता ।

विषयः । जैनमतेन तारादित्रययोगकथनम् ।

---

**No. 3354.** कुतर्कग्रहनिवृत्तिद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Verse. Generally correct. Sanskrit.

**Kutarka-graha-nivritti-dvátriñśiká.** Thirty-two stanzas on the suppression of doubts and false arguments.

**Beginning.** जायमानेऽत्र राजीवचमूचरण+चरे । (?) ।
निवर्त्तते स्ततः शीघ्रं कुतर्कविषमग्रहः ॥
शमारामानलज्वाला हिमा+ज्ञान+पङ्कजे ।
श्रद्धाम्बुग्यं स्मयोल्लासः कुतर्कः सुस्तताङ्गला ॥ इत्यादि ।

**End.** ज्ञायेरन् हेतुवादेन पदार्था यद्यतीन्द्रियाः ।
कालेन तावता प्राज्ञैः कृतः स्यात्तेषु निश्चयः ॥
तत्कुतर्कग्रहस्त्याज्यो दत्वा दृष्टिमागमे ।
प्रायोऽधर्म्मा अपि त्याज्याः परमानन्दसम्पदि ॥

**Colophon.** इति कुतर्कग्रहनिवृत्तिद्वात्रिंशिका समाप्ता ।

विषयः । जैनागमोक्तविषये हेतुवादो न कर्त्तव्य इति निरूपणम् ।

**No. 3355.** सदृष्टद्वात्रिंशिका। Substance, country-made paper, 12 x 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pancháyata-pausála. Appearance, old. Verse. Slightly correct. Sanskrit.

**Sadrishta-dvátriñśika.** Thirty-two stanzas on mental obstruction to Jain morality.

**Beginning.** प्रत्याहाराः स्थिरा यस्य दर्शनं नित्यमधमं ।
तथा निरतिचारार्थं सूक्ष्मबोधसमन्वितं ॥
विषयासम्प्रयोगे+स्वरूपानुकृतिः किल ।
प्रत्याहारो हृषीकाणामतदायत्ततापलः ॥ इत्यादि ।

**End.** केवलं श्रियमासाद्य सर्व्वलब्धिफलान्वितां ।
परं परार्थमासाद्य ततो योगान्तमश्नुते ॥
तथायोगाद्योगमुख्याद्भवोपग्राहिकर्म्मणां ।
क्षयं कृत्वा प्र+ +पूर्व्वैः परमानन्दमन्दिरं ॥

**Colophon** इति सदृष्टद्वात्रिंशिका समाप्ता ।

विषयः । जैनमतेन प्रत्याहारादिफलकथनम् ।

---

**No. 3356.** भिक्षुद्वात्रिंशिका । Substance, country-made paper, 12 x 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara. Pancháyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Bhikshu-dvátriñśiká.** Thirty-two stanzas on Jain mendicancy.

**Beginning.** नित्यं चेतः समाधाय यो निष्क्रम्य गुरुदिते ।
प्रत्याविशति न वान्ते+वशः कुटिलभुवां (?) ॥
पृथिव्यादींश्च षट्कायान् सुखे+ +सुखदिषः ।
गणयित्वात्मतुल्यान् यो महाव्रतरतो भवेत् ॥ इत्यादि ।

**End.** यद्वानद्रव्यभिक्षुस्तु शुद्धसंविग्नपाक्षिकः ।
सम्पूर्णां प्रतिमां दीक्षां स्पृष्टो + +पत्रौयति ।
केचिदुक्ता यमन्येषु भावभिक्षोर्गुणाः पुनः ।
भावयमाना यतौ सम्यक् परमानन्दसम्पदे ॥

**Colophon.** इति भिक्षुद्वात्रिंशिका समाप्ता ।

विषयः । जैनभिक्षोः संक्षेपेण कर्त्तव्यतानिरूपणम् ।

**No. 3357.** दीक्षाद्वात्रिंशिका । Substance, couutry-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Válucbara, Panchâyata-pausála.

**Díkshá-dvátriñśiká.** Thirty-two stanzas on Jain initiation.

**Beginning.** दीक्षा हि श्रेयसी दानादशिवक्षपणादपि ।
सा ज्ञानिनो + योगेन ज्ञाननिष्ठावतोऽथ वा ॥
एकः स्यादिह चक्षुष्मानन्यस्तदनुवृत्तिमान् ।
प्राप्नुतो युगपद्ग्रामं गम्यं यद्भावपि (?) ॥ इत्यादि ।

**End.** विचित्रत्वमनालोच्य बक + लादिना श्रुतं ।
दीक्षायुक्तैकरूपेण इष्टा श्राम्नं दिगम्बरैः ॥
चित्रा क्रियात्मना + + मेका सामायिकात्मना ।
तस्मात् समुच्चयेनास्यै परमानन्दलक्षणता ॥

**Colophon.** इति दीक्षाद्वात्रिंशिका समाप्ता ।

विषयः । जैनदीक्षानिरूपणादिकम् ।

---

**No. 3358.** पातञ्जलयोगलक्षणविचारद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pusála. Appearance, old. Verse. Incorrect. Sanskrit.

**Pátanjala-yoga-lakshana-vichára-dvátriñśiká.** Thirty-two stanzas on the elements of Pátanjala yoga compared with the Jain system.

**Beginning** चित्तवृत्तिनिरोधस्तु योगमाह पतञ्जलिः ।
द्रष्टुः स्वरूप + वस्थानं यत्र स्यादविकारिणि ॥
चापन्नो विषयाकारं यत्र चेन्द्रियवृत्तितः ।
पुमान् भाति तथा चन्द्रश्चलन्नीरे चलन् यथा ॥ इत्यादि ।

**End.** योगारम्भोऽत्र विक्षिप्ते शून्यात्मे क्षिप्तमूढयोः ।
एकाग्रे च निरुद्धे च समाधि + मि चेष्ट तत् ॥
योगारम्भोऽपि योगस्य निश्चयेनोपपादनात् ।
मदुक्तलक्षणं तस्मात् परमानन्दकृत् सतां ॥

**Colophon.** इति पातञ्जलयोगलक्षणद्वात्रिंशिका समाप्ता ।

विषयः। संक्षेपेण पातञ्जलपातञ्जलयोगशास्त्रादिविवेचनपुरःसरं जैनागमोक्तयोगस्य प्रशं-सासंकीर्तनम्।

---

**No. 3359.** पूर्वसेवाद्वात्रिंशिका। Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Paňcháyata-pausála, Appearance, old. Verse. Incorrect. Sanskrit.

**Púrva-sevá-dvátriñśika.** Thirty-two stanzas on the most revered gods, or those who should be honoured most, of the Jain system.

**Beginning.** पूर्वसेवानुयोगस्य गुरुदेवादिपूजनं।
सदाचारस्तथा + + द्वेषश्चेति प्रकीर्त्तिताः॥
माता पिता कलाचार्य्य एतेषां ज्ञातयस्तथा।
वृद्धा धर्मोपदेष्टारो गुरुवर्गः समासतः॥ इत्यादि।

**End.** नचायमेव रागः स्यान्मुदुमध्यादिकल्पतः।
तथोपायेन + + + योगिभेदप्रदर्शनात्॥
द्वेषस्याभावकल्पत्वाद्द्वेष एक एव हि।
रागात् क्षिप्रं क्रमायातः परमानन्दसम्भवः॥

**Colophon.** इति पूर्वसेवाद्वात्रिंशिका समाप्ता।

विषयः। गुरुदेवसदाचारादिनिरूपणपूर्व्वकं प्रथममेव तेषां सेवनावश्यकतादिकथनादिकम्।

---

**No. 3360.** मुक्त्यद्वेषप्राधान्यद्वात्रिंशिका। Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Paňcháya-ta-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Muktyadvesha-pradhánya-dvátriñśiká.** Thirty-two stanzas on the purification of the mind.

**Beginning.** उक्तभेदेषु योगीन्द्रैर्मुक्त्यद्वेषः प्रशस्यते।
मुक्त्युपायेषु न द्वेषा + + मायेव यन्नतः॥
विषान्नवद्भिसदृशं त + तो ममदुर्भवः।
उक्तः शास्त्रेषु सत्यादिश्रान्तदुर्भवसन्निभः॥ इत्यादि।

**End.** वीर्योल्लासक्रमेण स्याच्चतः क्षुतिरनुत्तरा।
ततः समाहितं चेतः स्थैर्यमप्यवलम्बते॥

अधिकारित्वमित्यमपुनर्बन्धकतादिना ।
मुक्त्यद्वेषः क्रमेण स्यात् परमानन्दकारणं ॥

**Colophon.** इति मुक्त्यद्वेषप्राधान्यद्वात्रिंशिका समाप्ता ।

विषयः । मुक्त्यनुरागेणैव चित्तशुद्ध्यादिर्जायते इति तत्प्राधान्यादिकथनम् ।

---

**No. 3361.** अपुनर्बन्धकद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pañcháyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Apunarvandhaka-dvátriñśiká.** Thirty-two stanzas on bondage and redemption.

**Beginning.** शुक्लपक्षेन्दुवत् प्रायो वर्द्धमानगुणः स्मृतः ।
भवाभिन + + दोषाणामपुनर्बन्धकोऽव्ययः ॥
अस्यैव पूर्व्वसेवोक्ता मुख्यान्यस्योपचारतः ।
+ + + पतिताभिमुखो पुनः ॥ इत्यादि ।

**End.** सर्व्वोत्तमं यदेतेषु भिन्न + + तदिष्यते ।
फलवद्द्रुमसद्बीजप्ररोहसदृशं ॥
मन्त्रं तत्तोक्तमखिलमपुनर्बन्धकस्य च ।
अवस्थाभेदता न्याय्यं परमानन्दकारणं ॥

**Colophon.** इति अपुनर्बन्धकद्वात्रिंशिका समाप्ता ।

विषयः । संसारस्य दुःखमयत्वकथनपूर्व्वकं सदा शान्तोदात्तत्वाद्यवलम्बनमेव अपुनर्बन्धाय भवतीति कीर्त्तनम् ।

---

**No. 3362.** मार्गद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Pañcháyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Márga-dvátriñśiká.** Thirty-two stanzas on the safest paths according to the Jain system.

**Beginning.** मार्गः प्रवर्त्तकं मानं शब्दो भगवतोदितः ।
संविग्नाशठगीतार्थाचरणं चेति च द्विधा ॥
द्वितीयामादरे सत्ता प्रथमस्याप्यनादरः ।
ज्ञानस्यापि प्रधानत्वं साम्प्रतं श्रूयते यतः ॥ इत्यादि ।

**End.** ते च यो + + सम्यक्त्वमिथ्यादर्शनभूमयः।
अतो द्वयोः प्रकृत्यैव वर्त्तितव्यं यथाक्रमं ॥
इत्थं मार्गस्थितामारमनुसृत्य प्रहृष्टया।
मार्गश्रेष्ठैव लभ्यन्ते परमानन्दसम्पदः ॥

**Colophon.** इति मार्गद्वात्रिंशिका समाप्ता।

**विषयः।** संक्षेपेण जैनानां कर्त्तव्याकर्त्तव्यमार्गकथनम्।

---

**No. 3363** जिनमहत्त्वद्वात्रिंशिका॥ Substance, country-made paper, 12 × 6 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Válnchara, Panchâyata-pausála. Appearance, old. Verse. Incorrect. Sanskrit.

**Jinamahattva-dvátriñśiká.** Thirty-two stanzas on the superiority of the Jain doctrine over those of Kapila and others.

**Beginning.** रत्नत्रयध्वजच्छत्रचक्रचामरसम्पदा।
विभुत्वं न विभोस्तस्य मायाविष्वपि सम्भवात् ॥
स्वामिनो वचनं यत्तु संवादिन्यायसङ्गतं।
कुतर्कध्वान्तसूर्य्यांशुमेतत्त्वं तद्गदत्प्रभुः ॥ इत्यादि।

**End.** पूज्योऽयं स्मरणीयोऽयं सेवनीयोऽयमादरात्।
अस्यैव शासने भक्तिः कार्य्या चेच्चेतनास्ति वः ॥
सारमेतन्मया लब्धं श्रुताब्धेरवगाहनात्।
भक्तिर्भागवती बीजं परमानन्दसम्पदां ॥

**Colophon.** इति जिनमहत्त्वद्वात्रिंशिका समाप्ता।

**विषयः।** कपिलादिभ्योऽपि जिनेन्द्रस्य महत्त्वातिशययुक्तस्य तच्छासनपक्षपातयुक्तता-कथनम्।

---

**No 3364.** विवेककौमुदी। Substance, country-made paper, 16 × 4 inches. Folia, 36. Lines, 6—7 on a page. Extent, 1,055 ślokas Character, Bengali. Date, ? Place of deposit, Guptipáḍá, Rámadhan Vidyálaṅkára. Appearance, old Prose and verse. Generally correct

**Viveka-kaumudí.** The indispensability of the obligation to wear the *sikhá* or crown lock and the holy thread. A discussion on the nature of *Vidhi, Niyama* and *Parisaṅkhyá*. The particular positions of the holy thread in reference to the body on various occasions. The

*śráddha* on the occasion of an eclipse. The blind man has no right to perform this particular *S'ráddha.* A refutation of the doctrine that Sudras can repeat Puráṇic *mantras.* The place for putting the sectarial or *tilaka* mark. The necessity of wearing gold and the *kusha* grass at the time of *japa.* The necessity of putting in *tila* or sesamum in pouring oblations to the manes. When a *mantra* is forgotten its place may be supplied with a *vyáhṛiti.* The eight forms of S'iva are to be worshipped before his own worship. The rule for touching flowers offered to S'iva. A female after her marriage and a Sudra after his tonsure can worship S'iva. The difference between consecration and presentation to a god. The circumstances under which the *Sapiṇḍíkaraṇa* may be performed before the end of the year after death. What is a *Nándímukha S'ráddha* or a S'raddha ceremony preceding auspicious occasions like marriage? Why is it called *Nándímukha?* The group of goddesses Gaurí and others is to be worshipped on the occasion of a *Nándímukha S'ráddha* and not the group *Bráhmaṇí* and others. The reading of the mantra, *Madhuvátá,* &c., Ric. I.

H. P. S.

**Beginning.** धर्म्मशास्त्रप्रवक्तारं प्रणम्य परमेश्वरं ।
विवेककौमुदी रम्या रामकृष्णेन तन्यते ॥
सन्ति यद्यपि विद्वद्भिर्निर्म्मिताः संग्रहाः स्मृतौ ।
दुरूहार्थप्रकाशाय कृतिरेषा तथापि मे ॥
सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतिश्च यत्करोति न तत्कृतं ।
अत्र पूर्व्वार्द्धेन नित्यता, उत्तरार्द्धेन च कर्म्माङ्गता बोधिता, अन्यथा उपवीताभावदशायां कृतं साङ्गमेव स्यात् । इत्यादि ।

**End.** नपुंसकमनपुंसकमित्यादिना तानीति निर्द्देशस्य सुकरत्वात् + + सचितैव दक्षिणा इति ।

**Colophon.** समाप्तश्चायं विवेककौमुदीग्रन्थः ।

विषयः । शिखोपवीतधारणनित्यताविचारः । विधिनियमपरिसंख्याविचारः । अत्र द्वितीयपत्रादारभ्य पञ्चमपत्रपर्य्यन्तं खण्डितं । कर्म्मविशेषे प्राचीनावीत्यादिनियमकथनं । स्नानविधिः । स्नानलक्षणनिरूपणादि । चन्द्रदर्शनादिव्यवस्था । ग्रहणश्राद्धादौ अन्धस्य अनधिकारकथनादि । शूद्राणां पौराणमन्त्रपाठानुमोदकमतदूषणं । तिलकधारणस्थानादिनिर्द्देशः । पञ्चगव्य यागादयनु-

होमविधिविचारः । सावित्र्यलक्षणादिनिरूपणं । प्रौढ़पादलक्षणं । जपादिकाले सुवर्णकुशादि-परिग्रहावश्यकता । पवित्रादिलक्षणकथनं । तर्पणे तिलावश्यकता । पञ्चदेवतापूजाक्रमः । मन्त्रा-चमनादेशे व्याहृत्यादिविधानं । गव्यादिदाने विशेषकथनं । शिवपूजाविधिः । पूजनात् पूर्वमष्टमूर्त्तिपूजाकर्त्तव्यतानयाक्षेपः । त्रिपुण्ड्रनियमः । स्नाननिर्म्माल्यस्पर्शादिविधानं । पञ्चपुरश्चरणविधिः । स्त्रीशूद्रयोः यथाक्रममेव विवाहचूड़योरूर्द्ध्वं शिवपूजायामधिकारः । प्रतिष्ठोत्सर्गयोर्भेदप्रतिपादनं । उद्देश्यलक्षणादि । सम्प्रदानस्वरूपकथनादि । नान्दीमुखश्राद्धविधानं । विवाहमासादिनिरूपणं । गर्भाधानान्नप्राशनादिविधानं । सपिण्डनापकर्षविधानं । श्राद्धविशेषव्यवस्था । नान्दीश्राद्धे गौर्य्यादिपूजननियमः न तु ब्रह्माण्यादीनामितिकथनं । वसुधारादानविधिः तमन्त्रव्याख्या च । ब्राह्मणोपवेशनक्रमः । कुत्र नान्दीमुखपदप्रयोगः कर्त्तव्य इति कथनादि । मधुवातेतिमन्त्रपाठविचारः । दक्षिणाकथनञ्च । इति समाप्तिः ।

---

**No. 3365. श्राद्धदीपः, वा श्राद्धप्रदीपः।** Substance, country-made paper, 16 × 4 inches. Folia, 39. Lines, 6 on a page. Extent, 936 slokas. Character, Bengali. Date, ? Place of diposit, Guptipáḍá, Rámadhana Vidyábhúshaṇa. Appearance, old. Prose and verse. Generally correct.

**S'ráddha-dípa, or S'ráddha-pradípa.** The definition of a S'ráddha. A refutation of the doctrine of the author of Kalpataru on the subject. Whether the six ancestors honoured at a *śráddha* as gods are to be taken with their wives or without them? The Ashṭaká-śráddha can be performed even by a Súdra. Various kinds of *S'ráddhas* and some directions in regard to their performance.

H. P. S.

**Beginning.** गोविन्दचरणद्वन्द्वं देवदेवाभिवन्दितं ।

प्रणम्य जयकृष्णेन श्राद्धदीपः प्रकाश्यते ॥

तत्र श्राद्धं चतुर्विधं । पार्व्वणैकोद्दिष्टसपिण्डीकरणाभ्युदयिकभेदात् । इत्यादि ।

**End.** तत्प्रयोजनानुपस्थितौ तदकरणमेवेति निष्कर्षः ।

**Colophon.** इति श्रीजयकृष्णभट्टाचार्य्यविरचितः श्राद्धप्रदीपः समाप्तः ।

**विषयः ।** श्राद्धलक्षणं । तत्र कल्पतरुकारमतदूषणादिकं । देवतालक्षणं । श्राद्धे पित्रादीनां पत्नीनिरपेक्षैव देवतात्वमुत तत्सापेक्षत्वमित्यत्र समाधानं । श्राद्धे विप्रनिमन्त्रणप्रकारादिकीर्त्तनं । अन्नविचारः । श्राद्धदेवाः । अर्घादिविधानं । आमश्राद्धं । अग्नौकरणप्रकारः । श्राद्धीयभोजनं । श्राद्धस्य नित्यकाम्यताः । अष्टकाश्राद्धं । तत्र शूद्रस्याप्यधिकारः । अन्वष्टक्यपक्षश्राद्धं । तत्र अष्टम्यादिकल्पवाददूषणं । मघात्रयोदशीश्राद्धं । नित्यनैमित्तिकादिश्राद्धभेदाः । विकृतिपार्व्वणं । अमा-

चाद्याश्राद्धं । तत्कालविचारः । तद्धितात्मपत्नीयपर्व्वणव्यवस्था । एवं शूद्रपत्नीयस्य च । एकोद्दिष्टव्यवस्था । पार्व्वणलक्षणादि । नवान्नादिश्राद्धकालः । सावकाशश्राद्धं । जीवत्पितृकश्राद्धं । चाभ्युदयिकश्राद्धं । द्वादशविधपुत्रकथनं । त्रिविधप्रेतक्रियाकथनं । प्रेतश्राद्धाधिकारिपरम्परा । जीवत्कर्त्तृकप्रेतश्राद्धे रजोयोगे व्यवस्थानिरूपणं । मध्यागतनिपाते वर्ज्जनीयानि । सपिण्डीकरणश्राद्धं । तत्स्वरूपकथनं । मलमासपाते श्राद्धवृद्धिः । चतुर्व्विधमासलक्षणादिनिरूपणं । चशौचान्तद्वितीयदिनकृत्यप्रयोगः । वृषोत्सर्गादिकालः । वृषलक्षणं । विधिनियमपरिसंख्याविचारः । पर्य्युदासादिलक्षणं । तन्त्रप्रसङ्गन्यायस्वरूपनिरूपणं । शूद्रकर्त्तृकवृषोत्सर्गे पाकविचारः । इति ।

---

**No. 3366.** मलमासतत्त्वविवृतिः । Substance, country-made paper, 17 × 3½ inches. Folia, 77. Lines, 7 on a page. Extent, 2,381 ślokas. Character, Bengali. Date, Sk. 1722. Place of deposit, Guptipáḍá. Khudiráma Nyáyabhúshaṇa. Appearance, old. Prose. Correct.

**Malamása-tattva-vivṛiti.** A commentary on Raghunandana's *Malamásatattva* or the treatise on intercalary months. By Káśiráma Bhaṭṭáchâryya Váchaspati. The MS. was copied in the Śaka year 1722.

**Beginning.** नत्वा गुरोश्चरणपद्मरजांसि मूर्ध्ना
श्रीकान्तकान्तचरणञ्च निधाय चित्ते ।
श्रीकाशिरामसुकृती कृतिनां हिताय
सम्यक् तनोति विवृतिं मलमासकस्य ॥
स्मृतिशास्त्राम्बुधौ नौकाकृतमेतं जगद्गुरुं ।
विदितं विधु लोकेषु नमामि रघुनन्दनं ॥

मीमांसादिनानाशास्त्रपारदृश्वा वन्द्यघटीयः श्रीमान् रघुनन्दनभट्टाचार्य्यः प्राचीनविचक्षणगणनानाविधव्याख्याजनितसन्देहं स्मृतिशास्त्रं मुन्यक्षरवचनयुक्तिभ्यां निर्णीय इदानीन्तनानां सुखबोधाय निबन्धांश्चकार । तत्र स्मृतिशास्त्रस्य स्वभावतो दुर्गमतया कानिचित् कठिनानि सन्ति, चतस्तानि मया यथामति व्याख्यायन्ते । तत्र मलमासतत्त्वव्याख्या । इत्यादि ।

**End.** स्यान्तस्तु विनाशकं मलिम्लुचादिरूपं नाम यस्य सः । यद्वा + + + नाम चसदेव तत्त्वाधिविशिष्टकर्म्मानर्हत्वादित्याहुः ।

यं प्रासूत समस्तशास्त्रनिपुणः श्रीरामभद्रात्मजः
श्रीराधीनारचणभाक्सुकृती सद्वीरचूडामणिः ।
तेन श्रीयुतकाशिरामकृतिना यत्नेन निष्पादिता
टीका नाभिसुपद्यतेऽपि कृतिभिः सामर्षैरंकृता ॥

**Colophon.** इति काशीरामभट्टाचार्य्यचक्रवर्त्तिविरचि.... ... ...तत्त्वविवृतिः समाप्ता।

शक ॥ १७९९ ॥

विषयः। रघुनन्दनकृतमलमासतत्त्वस्य व्याख्यानं।

---

**No. 3367. प्रबोधिनी।** Substance, country-made yellow paper, 16 × $3\frac{1}{2}$ inches. Folia, 57. Lines, 8 on a page. Extent, 2,137 ślokas. Character, Bengali. Date, ? Place of deposit. Guptipáḍá. Gaṅgádhara Vidyáratna. Appearance, fresh. Prose. Correct.

**Prabodhiní.** A commentary on Jagadíśa's work on the connotation and denotation of terms, entitled S'abdaśakti prakáśiká. By Rámabhadra Siddhántavágíśa.

H. P. S.

**Beginning** विश्वतात जगन्मातरेवं गौरीगिरीशयोः।
मिथः सम्भाषया स्मरं चरम्भं समुपास्महे ॥
गुरुमिव गुरुभिश्च नत्वा तत्कृतशब्दशक्तिप्रकाशिकासु।
श्रीरामभद्रसुकृती कुरुते टीकां मुदे सुधियः ॥

शब्दशक्तीति शब्दस्य शक्तिर्बोधसामर्थ्यं। तत्प्रकाशिका इत्यर्थः। तेन ग्रन्थस्य लक्षणादि प्रकाशकत्वेऽपि न क्षतिः। ग्रन्थारम्भे ग्रन्थस्य आरम्भदशायां। वाक्यसमूहो ग्रन्थः। आनुपूर्वविशेषो वा। इत्यादि।

**End.** अनुभवस्य बाधितत्वादित्याशयेनाऽहरित्युक्ता अस्वरसो व्यक्तितः।

**Colophon.** इत्यम्भं प्रचरन्ती शब्दशक्तिप्रकाशिकाविबोधिनी श्रीलरामभद्रसिद्धान्तवागीशभट्टाचार्य्यविरचिता।

विषयः। जगदीशतर्कालङ्कारकृतशब्दशक्तिप्रकाशिकाया व्याख्यानं।

---

**No. 3368. अमरपञ्जिका।** Substance, country-made paper, 12 × $2\frac{1}{4}$ inches. Folia, 63. Lines, 8 on a page. Extent, 2,709 ślokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá. Dínanátha Gangopádhyáya. Appearance, too much decayed. Prose. Correct.

**Amara-panjiká.** A commentary, by Náráyana, on Amara's well-known dictionary.

H. P. S.

**Beginning** यदिन्द्रमपि दूरस्थं सर्व्वमाहत्य तिष्ठति।

यज्ञनः परमं श्रीशं सदानन्दप्रदं गुमः ॥
रवः शशिप्रभता समं विविधकेलिमातन्वती
गुरुः स्मरमनोत्सवे शिवमुखाब्जचुम्बार्थिनी ।
दिगम्बरकृताम्बरा विधुमवेक्ष्य मौलिस्थितं
स्त्रिया नतमुखी सदा क्षितिधरेन्द्रकन्यावतु ॥
मङ्गलानन्दबीजानि भक्तानामति सन्ततं ।
गुरूणां चरणाब्जानि पुनःपुनरुपास्महे ॥
ज्ञात्वा शास्त्रमशेषमादिविदुषामालोक्य नानामतं
चेरम्भाद्रिसरोजयुग्ममलं नत्वातिभक्त्या सुधीः ।
श्रीनारायणपादपद्ममधुलिड्नारायणः श्रीनिधि-
र्यत्नेनामरपञ्जिकां वितनुते संक्षेपतः सत्कविः ॥

शास्त्रारम्भे प्रत्यूहव्यूहवारणकामः शिष्टाचारानुमितवेदबोधितकर्त्तव्यताकं मङ्गलमाचरन्नि बध्नाति । इत्यादि ।

End. प्रततिर्वततिस्तथेति वल्लायुधः । लतिः सौवो वेष्टनार्थः ।

Colophon. इतः परं खण्डितं ।

विषयः । अमरकृतनामलिङ्गानुशासनस्य व्याख्यानं ।

---

**No. 3369. सुजनबोधकरी, वा मनोहरा ।** Substance, country-made paper, 12 × 2½ inches. Folia, 56. Lines, 7 on a page. Extent, 1,813 ślokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá Telipáḍá. Dínanátha Gaṅgopádhyáya. Appearance, decayed. Prose. Incorrect.

**Sujanabodhakarí** ALIAS **Manohará**. A commentary by Rámachandra Kavi on Bháravi's well-known poem entitled Kirátárjuníya.

H. P. S.

**Beginning.** श्रागम्य सौम्यपदपद्ममनन्यभक्त्या
श्रीमद्गुरोर्नियतनीर्थविचारबुद्धेः ।
श्रीरामचन्द्र इतिनाम दधद्द्विजोऽहं
टीकामिमां सुजनबोधकरीं करोमि ॥
श्रनुपाख्या वयं धीराः सुधीभिर्बुद्ध्यतामियं ।

यदि मे रत्नमनघाय विद्या यत्नेन शोभनाम् ॥
इयं निश्चममूरस्य चिताय विचिता मया ।
नाम्ना मनोहरा टीका सरसा रसकारिणी ॥
श्रिय इति । कुरवो जना इत्यादि ।

**End.** स्वं आत्मीयं पुरस्कारं पौरुषमिव शैलमिन्द्रकीलं अभ्यासरोद प्राप ॥
सारो बले स्थिरांशे च न्याय्ये क्लीवे वरे विषु । इत्यमरः ।

**Colophon.** इति श्रीरामचन्द्रकविविरचितायां मनोहराख्यायां भारविटीकायां पञ्चमः स्वर्गः । श्रीहरिः ।

विषयः । भारविकृतकिरातार्जुनीयकाव्यस्य व्याख्यानं ।

---

**No. 3370.** रत्नकोषकारमतविचारः । Substance, country-made paper, 16 × $3\frac{1}{2}$ inches. Folia, 25. Lines, 8 on a page. Extent, 1,525 ślokas. Character, Bengali. Date, ? Place of deposit, Guptipádá. Khudiráma Nyáyabhúshaṇa. Appearance, decayed. Prose. Correct.

**Ratna-kosha-kára-mata-vichára.** The author of Ratna-kosha holds that with the help of two contradictory arguments, such as one for the establishment of the existence of fire in the mountain and the other for its non-existence, an inference in the shape of a doubt may be arrived at. The author of the present work attempts to refute his arguments.

H. P. S.

**Beginning.** ॐ नमो गणेशाय ।
परोक्षज्ञानं निरस्य + + + + सिद्धान्तः, रत्नकोषकारस्तु सत्प्रतिपक्ष + + + + + + + अनुमितिं स्वीकरोति । तत्र संशयत्वस्य विशेषपरामर्शादिजन्यतावच्छेदकतया कथं ततः संशय उत्पद्यते—इति न आग्रहणीयं । इत्यादि ।

**End.** तदपेक्षया लाघवेनापरकोट्यनुमितिसामग्र्यभावस्यैव निवेशयितुमुचितत्वा-दिति न किञ्चिदनुमितेः संशयत्वापत्तिरिति हृतमतिविस्तरेण ।

**Colophon.** इति रत्नकोषकारमतविचारः सम्पूर्णः ।

विषयः । रत्नकोषकारो हि सत्प्रतिपक्षसमवधानदशायां संशयात्मिकामनुमितिमभ्युपगच्छति अत्र तु तस्य सारासारविमर्शनेन निराकरणं ।

---

**No. 3371.** मेघदूतटीका । Substance, country-made paper, 12 × 2½ inches. Folia, 15. Lines, 6 on a page. Extent, 1,167 ślokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá. Khudiráma Nyáya-bhúshna. Appearance, decayed. Prose. Correct.

**Meghadúta-ṭíká.** A commentary, by Ravikara, on *Meghadúta* the Cloud Messenger by Kálidása.

H. P. S.

**Beginning.** परमानन्दसन्दोहं + + + + + + प्रभं ।
गोविन्दमग्रभ + + मिन्दिरानन्दहन्ददं ॥
कश्चिदित्यादि । कश्चिदनिर्द्दिष्टनामा यक्षः । रामगिर्य्याश्रमेषु वसतिं वासस्थानं चक्रे । अथ काव्यमुखं कुर्य्यात् कश्चिदित्यादिभिः पदैः । इत्यादि ।

**End.** अर्थान्तरन्यासमाह । केषामर्थिनां प्रार्थना याच्ञा अभ्युन्नतेषु महत्सु अवितथं फलं यस्याः सेयं सफला न स्यादिति काक्का तु स्यादेवेति भावः ।

**Colophon.** इति महोपाध्यायश्रीरविकरविरचिता मेघदूतटीका समाप्ता ।

**विषयः ।** कालिदासकृतमेघदूतकाव्यस्य व्याख्यानं ।

---

**No 3372.** कारकवादः । Substance, country-made paper, 15 × 4 inches. Folia, 16 Lines, 5 on a page Extent, 700 ślokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá, Khudiráma Nyáyabhúshana. Appearance, old. Prose. Incorrect.

**Káraka-váda.** On Sanskrit case marks and their uses, &c.

**Beginning.** इन्दारामन्दमन्दारवन्द्यमानन्दकन्दलं ।
मत्वा लक्ष्म कारकाणां वादोऽयं क्रियते मुदा ॥
क्रियानिमित्तं कारकमिति न सामान्यलक्षणं । इत्यादि ।

**End.** तच पतनक्रियायामेव पक्षम्यर्थविभागजनकत्वान्वये अवहतिधारक्रिया ।

**Colophon.** स्तः अग्रिमलात् समाप्तिवाक्यं नास्ति ।

**विषयः ।** कारकाणां लक्षणादिनिरूपणं ।

---

**No. 3373.** विस्तारचन्द्रिका । Substance, country-made paper, 15 × 4 inches. Folia, 19. Lines, 6 on a page. Extent, 588 ślokas Character, Bengali. Date, ? Place of deposit, Guptipáḍá, Púrnachandra Bhaṭṭácháryya. Appearance, old. Prose. Correct.

**Vistára-chandriká.** A commentary, by Govinda Tarkavágísa Bhaṭṭácháryya, on Sañkara's Ánanda-laharí.

H. P. S.

**Beginning.** अद्वैतानन्दरूपां मम विधतमनोमात्रगम्यामरूपां
ब्रह्मोपेन्द्रेन्दुमौलिप्रमुखदिविषदो मायया मोहयन्तीं ।
जन्तूनां गर्भवासादपहृतिसमये शुद्धबुद्धिं दिशन्तीं
नित्यां देवीं तुरीयां परशिवघटिणीं चिन्मयीं तां भजामः ॥
गुरूणां पादाम्भोरुहयुगलमभ्यर्च्य सुचिरं
रहस्यं मन्त्राणां निखिलमधिकृत्याध्ययनतः ।
कृती श्रीगोविन्दस्तुहिनगिरिजानन्दलहरी-
स्तुतेर्भावं मुक्तापटलमिव यत्नाद्विवृणुते ॥

अथ खलु महादेवः पूर्व्वयुगे जगदेवं तपोध्यानयज्ञादिविहीनमनादिवासनापङ्कमग्नमुद्दिधीर्षुः परमकारुणिकः श्रीशङ्कराचार्य्यरूपेण पुण्यदेवपावने द्रविड़देशे सोमपीतिनां पंक्तिपावनानां द्विजानां कुले समवतीर्य्य परमहंसपरिव्राजकरूपो भोगस्वर्गैकजननीं तुरीयां स्तुवन् मन्त्रयन्त्रपूजासङ्केतं प्रकाशयति,—शिव—इत्यादिना । इत्यादि ।

**End.** एतेन पूज्यपूजकपूजोपचाररूपा त्वमसीति भावः ।

**Colophon.** इति श्रीगोविन्दतर्कवागीशभट्टाचार्य्यविरचितानन्दलहरीविस्तारचन्द्रिका समाप्ता ।

विषयः । शङ्कराचार्य्यकृताया आनन्दलहर्य्या व्याख्यानं ।

---

**No. 3374.** एकादशीतत्त्वदीपः । Substance, country-made yellow paper, 16 × 4 inches Folia, 103. Lines, 8 on a page. Extent, 3,914 ślokas Character, Bengali. Date, Sk. 1712. Place of deposit, Sántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose. Generally correct.

**Ekádaśítattvadípa.** This is a commentary on the *Ekádaśítattva*, one of the 28 digests of Hindu law and rituals by Raghunandana. The author of the commentary is Rádhámohana Gosvámí commonly known as Gosvámí Bhaṭṭácháryya of Sántipura who flourished during the early part of this century and was a friend of Colebrooke. He was descended from Advaita the associate of Chaitanya, the Great preacher of Vaishṇavism in the Sixteenth Century.

H. P. S.

Beginning. भवेऽस्मिन् कान्तारे मुकुरटमदुःखैकविकलः
समीचे संसक्तं नवघरसपाथोजस्मरणं ।
न योगो ध्यानं वा भजनमपि यद्यपि चरे
तथाप्याशा दीर्घा तव च करुणा किं न कुरुते॥
वन्दे श्रीकृष्णमानन्दघनं परमनीश्वरं ।
राधास्वर्णलतासक्ततमालवविविग्रहं ॥
श्रीराधामोहनो टीकां करोति शुभदर्शनं ।
एकादश्यादितत्त्वानां पूर्व्वाचार्य्यमतेच्छया ॥
ग्रन्थारम्भे विघ्नविघाताय मङ्गलमाचार्य्यः शिष्यशिक्षायै निबध्नाति प्रणम्येति । इत्यादि ।

End. श्रुतितत्त्वभृत्ययेति । एतेनैतद्ग्रन्थस्य निर्द्दोषत्वमित्युक्तं तत्त्वनिर्णायकत्वा-दिति ।

Colophon. इति कलियुगपावनावतारश्रीमदद्वैतवंशसम्भवश्रीराधामोहनगोस्वामिभट्टाचा-र्य्यविरचितैकादशीतत्त्वटीप्पणी सम्पूर्णेति ।
लिखितैकादशीतत्त्वटीका भारतशर्म्मणा ।
पञ्चवेदाब्धिभूमानेऽब्दे पौतास्वरदेशतः ॥

विषयः । रघुनन्दनकृतैकादशीतत्त्वस्य व्याख्यानं ।

---

**No 3375.** प्रायश्चित्ततत्त्वटीका । Substance, country-made yellow paper, 16 × 4 inches. Folia, 94. Lines, 9 on a page. Extent, 4,230 ślokas. Character, Bengali, Date, ? Place of deposit, Sántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**Práyaschitta-tattva-ṭíká.** A commentary on another of Raghunandana's digests—of the Law on expiation. By the same author. H. P. S.

Beginning. तडिद्दीप्तो नीलाम्बुदरुचिरकम्पस्तवतले
लसद्धंसीनादामृतनिकरवर्षी प्रियसखि ।
नवीनोऽयं किं मे रचयति हृदीनोद्गितकथा-
मदुस्यन्दा राधा जयति चकशवोर्वृदि मता ॥
स्फुटा प्रायश्चित्ततत्त्वव्याख्या मोहनशर्म्मणा ।
क्रियतेऽद्वैतवंश्येन गोविन्दरतिकाम्यया ॥

प्रारिप्सितग्रन्थसमाप्तिहेतुतया मङ्गलमाचरन् शिष्यशिक्षायै तदुपनिबध्नन् तद्व्याख्यानाय प्रतिज्ञाञ्चाचरति प्रणम्येत्यादिना ।

**End.** चाण्डाल्यादिरजस्वलास्पर्शे तथाविधस्पृष्ठ्याः चद्राचद्रैगुण्यं शूलपाणिभिः सच्छूद्रात् चाण्डालादेस्त्रिगुणाभ्यमलस्य कथनादिति ।

**Colophon.** इति श्रीमदद्वैतवंशोद्भवश्रीराधामोहनगोस्वामिभट्टाचार्य्यविरचिता प्रायश्चित्ततत्त्वटीका समाप्ता ।

विषयः । रघुनन्दनकृत-प्रायश्चित्ततत्त्वस्य व्याख्यानं ।

---

**No. 3376** विवादार्णवसेतुः । Substance, country-made yellow paper, 16 × 3 inches. Folia, 175. Lines, 6 on a page. Extent, 4,462 ślokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Kálidása Vidyávágíśa. Appearance, old. Prose and verse. Incorrect.

**Vivádárṇava-setu.** A digest of Hindu Law. Compiled by Paṇḍits from various parts of Bengal. The names of the Paṇḍits who assisted in the compilation are given in the Colophon, *viz.* :— Váṇeśvara, Kṛipáráma, Rámágopála, Kṛishṇajívana, Víreśvara, Kṛishṇachandra, Gaurikánta Kalíśaṅkara, S'yámasundara, Kṛishṇakeśava and Sītáráma. Of these Váneśvara was the court poet of Rájá Kṛishṇachandra of Nadiya during the middle of the last century. The works consulted are those of Chaṇḍes'vara, Rája of Dhára, Visvarúpa, the author of the Mitákshará, Haláyudha, S'ríkrishṇa Váchaspati, the Author of Dharmaratna, S'ríkara, Súlapáṇi, Govinda, Lakshmídhara the author of the Tattvas, A'cháryya Chúḍámaṇi and Nátha Bhaṭṭa. The work commences with the origin and distribution of castes, and goes on with various topics of law, such as the laws relating to usury, mortgage, inheritance, partition of property, adoption, treasure troves, &c.

The work appears to have been written with the object of rivalling the work of Jagannátha Tarkapanchánana entitled Vivádabhaṅgárṇava which is known to Anglo-Indian lawyers as the Paṇchanana Code.

H. P. S.

**Beginning.** विश्वेषां शरणं ममाम्बुदरुचिः सद्धर्मचिन्तामणि
र्यः प्रत्यूहतमोविनाशमिहिरः कौमारभौमाश्रमः ।
संसारैकमहार्णवे निपततां निस्तारबीजं सतां

गोविन्दः कृपया सुरासुरगणैर्नन्द्यश्चिरं पातु वः ॥
चण्डेश्वरारेश्वरविश्वरूपा मिताक्षराकारहलायुधौ च ।
श्रीकृष्णवाचस्पतिधर्म्मरत्नकृतस्तथा श्रीकरशूलपाणी ॥
गोविन्दलक्ष्मीधरतत्त्वकारा आचार्य्यचूडामणिनाथ्यभट्टाः ।
व्याख्यानि येषां सुविचार्य्य कुर्म्मो ग्रन्थं विवादार्णवसेतुबन्धं ॥ इत्यादि ।

End. एवं कार्य्याणि सर्व्वाणि सर्व्वान् सम्यक् महीपतिः ।
देशग्रामसंस्थान् स्थित्वेन सर्व्वांश्च परिपालयेत् ॥
इति विद्वद्भिरचिते विवादार्णवसेतुके ।
तरङ्गो निधिदपार्थैरेकविंशोऽत्र कीर्त्तितः ॥
बाणेश्वर-कृपाराम-रामगोपाल-कृष्णजीवनाद्यैः ।
वीरेश्वर-कृष्णचन्द्र-श्रीगौरीकान्ताभिधानैः ॥
चक्रिः कालीशङ्कर श्यामसुन्दर-कृष्णकेशवसंज्ञैः ।
सीतारामसंज्ञैश्च कृतो ग्रन्थः स्फुरतु सभायां ॥
इत्यनेकविषयवासिविद्वद्वृन्दोपवर्णितः ।
विवादार्णवसेत्वाख्यो ग्रन्थः सम्पूर्णतां गतः ॥

Colophon. इति समाप्तिः ।

विषयः। वक्तव्यप्रतिज्ञा । वर्णादिसृष्टिकथनं । एषां वृत्तिनिरूपणं । राजप्रशंसा । राजस्वलक्षणं । राजमन्त्रिलक्षणं । राजसेवकलक्षणं । दूतलक्षणं । राजवासस्थानलक्षणं । राजधर्म्मनिरूपणं । ऋणादानविवादपदं । वृद्धिः । चक्रवृद्धिः । परमवृद्धिः । वृद्धिनिषेधः । उद्ग्राहणविधानं । ऋणदानविधिः । दायभागः । अपुत्रधनाधिकारी । वानप्रस्थयतिब्रह्मचारिणां धनाधिकारिणः । स्त्रीधननिरूपणं । स्त्रीधनाधिकारिणः । विभाज्याविभाज्यता । पितृकृतविभागनिरूपणं । धात्वविभागादिकथनं । संसृष्टधनविभागः । अविभक्तधनस्य देयादेयत्वविचारः । विभागानन्तरागतस्य विभागः । एकमातृकविभिन्नपितृकाणां विभागः । दत्तकौरसयोर्विभागः । निह्नुतद्रव्यविभागः । भुक्तिनिरूपणं । व्यवहारदर्शनं । आततायिवधप्रायश्चित्तविचारः । भाषापादः । उत्तरपादः । क्रियापादः । लिखितनिरूपणं । निर्णयपादः । साक्ष्यविधिः । क्रियावलाबलनिरूपणं । निक्षेपः । अस्वामिविक्रयः । सम्भूयसमुत्थानं । दत्ताप्रदानिकं । दत्तनिरूपणं । अदत्तनिरूपणं । भृतकविधिः । वेतनस्यानपाकर्म्मकथनं । पण्यस्त्रीविधिः । स्वामिपालविवादः । विक्रीयासम्प्रदानं । क्रीत्वानुशयः । सीमाविवादः । लक्षालक्षनिरूपणं । शस्यरक्षा । वदण्डनिरूपणं । वाक्पारुष्यं । दण्डपारुष्यं । स्तेयनिरूपणं । प्रकाशाप्रकाशतस्करदण्डकथनं । चौरान्वेषणं । स्तेनातिदेशः । चौराववाद । साहसनिरूपणं । घातकान्वेषणं । स्त्रीसंग्रहणं । अभिशप्तदण्डकथनं । वन्ध्यादिगमन-

दृष्टकथनं । स्त्रीपुंधर्म्मनिरूपणं । सतभर्त्तृकाधर्म्मनिरूपणं । पुत्रसमाश्रयः । प्रकीर्णककथनं । विशेषनिरूपणं।दत्तप्रशंसा । दत्तकपुत्रादिकथनञ्च ।

---

**No 3377.** रसतरङ्गिणी । Substance, country paper, 8 x 3½ inches. Folia 44. Lines, 9 on a page. Extent, 13,068 ślokas. Character, Nágara. Date, ? Place of deposit Sántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose and verse. Correct.

**Rasa-taraṅginí** Treats of the rhetorical *rasas* or flavours with their definitions and examples. The author is Bhánudatta who describes himself as the son of the poet Kailásanátha Gaṇanátha.

H. P. S.

**Beginning.** लक्ष्मीमालोक्य लक्ष्मीविगममुपचरन् ग्रीवयन् यज्ञजन्मन्
धत्ते ग्रोवाचि पद्मम् भ्रमिति दशमुखं वीक्ष्य रोमाञ्चमञ्चन् ।
कृत्वा वैयाघ्रवीनं चकितमपसरन् सोऽप्यलंकारिगम्भान्
सिञ्चन् दृष्ट्वेन भूमिं निजमिव तुलयन् पातु मां पीतवासाः ॥
भारत्याः शास्त्रकान्तारत्रान्तायाः श्रमहारिणी ।
क्रियते भानुना भूरिरमा रसतरङ्गिणी ॥
वाणी कमलिनी भानोरेषा रसतरङ्गिणी ।
हंसाः छलथियश्चात्र युक्तमत्र प्रतीयतां ॥
गिरां देवि तरङ्गिण्यां वारय क्रूरचारणाम्
यद्भविष्यति लोकानामाविष्टो विरसो रसः ॥

हेतोः पूर्व्वपर्त्तिल्वनियमादतः पूर्व्वमेव तस्य उपन्यासः । सम्प्रतिरसस्य हेतवे । भावादयस्तेन रसेभ्यः पूर्व्वं भावादय एव निरूप्यन्ते । इत्यादि ।

**End.** यावल्लामोः सुता कापि कालिन्दी भुवि नन्दति ।

**Colophon.** इति श्रीकविकैलासनाथ-गणनाथ पण्डिततनयभानुदत्तविरचितायां रसतरङ्गिण्यामष्टमस्तरङ्गः ॥

विषयः । सपरिकराणां शृङ्गारहास्यकरुणादिरसानां लक्षणोदाहरणादिनिरूपणं ।

---

**No. 3378.** ज्योतिःसारसङ्ग्रहः । Substance, country-made yellow paper, 12 x 3 inches. Folia, 18 Lines, 6 on a page. Extent, 532 ślokas. Character Bengali. Date, ? Place of deposit, Guptipáḍá Sambhuchandra Vidyálaṅkára Appearance, new. Prose and verse. Incorrect.

**Colophon.** इति वादद्वात्रिंशिका समाप्ता ।

विषयः । शुष्कवाद-विवाद-धर्मवादभेदात् त्रिविधवादनिरूपणादिकम् ।

---

**No. 4005.** दानद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pauśála. Appearance, old. Verse. Incorrect. Sanskrit.

**Dána-dvátriñśiká.** Thirty-two stanzas to illustrate the superiority of charity.

**Beginning.** ऐन्द्रशर्मप्रदं दानमनुकम्पासमन्वितं ।
भक्त्या सुपात्रदानन्तु मोक्षदं देशितं जिनैः ॥
अनुकम्पानुकम्प्ये स्याद्भक्तिः पात्रे तु सङ्गता ।
अन्यथा + + दातृणामतिचारप्रसङ्गिका ॥ इत्यादि ।

**End.** + + योगेऽपि यो दोषो द्रव्यतः कोऽपि जायते ।
उपभोगेन स पुनर्नामिष्टो यतनावतः ॥
इत्थं दानविधिज्ञानसारः पुण्यप्रभावकः ।
यथाशक्ति ददद्दानं परमानन्दभाग् भवेत् ॥

**Colophon.** इति दानद्वात्रिंशिका समाप्ता ।

विषयः । जैनधर्मानुसारेण दानमाहात्म्यकीर्तनम् ।

---

**No. 4006.** देशनाद्वात्रिंशिका । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchayata-pauśála. Appearance, old. Verse. Incorrect. Sanskrit.

**Deśaná-dvátriñśiká.** Thirty-two stanzas to illustrate the merit of preaching.

**Beginning.** यथाऽऽमं गुणोत्पत्तेः सुवैद्येनेव भेषजं ।
बालाद्यपेक्षया देया देशना क्लेशनाशिनी ॥
उन्मार्गनयनात् पुंसामन्यथा वा कुशीलता ।
सन्मार्गकुमहाबाय वक्तिनाना प्रपञ्चते ॥ इत्यादि ।

**End** जानाति दातुं गीतार्थो य एवं धर्मदेशनां ।

कल्किकालेऽपि तस्यैव प्रभावावर्म रचने ॥
गौतमार्थाय अगज्जन्तुपरमानन्ददायिने ।
मुनये भगवद्धर्मदेशकाय नमो नमः ॥

Colophon. इति देशनाद्वात्रिंशिका समाप्ता ।

विषयः । संक्षेपेण जैनोक्तदेशनाकथनं ।

---

**No. 4007.** क्षुल्लकुमारकथा । Substance, country-made paper, 12 × 4 inches. Folia, 4. Lines, 7 on a page. Extent, 87 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pausála. Appearance, decayed. Prose and verse. Incorrect. Sanskrit and Prákrita.

**Kshulla-kumára-kathá** The story of Kshulla-kumára, a citizen of Sáketa, is given here to demonstrate the superiority of indifference to wealth and power. Anonymous. H. P. S.

Beginning जयन्ति जिनमत्सराः परहितार्थमभ्युद्यमाः
पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः ।
महापुरुषसत्कथाश्रवणजातरोमोद्गमाः
समस्तदुरितार्णवप्रकटसेतवः साधवः ॥
साकेतनामनगरं पुण्डरीको नरेश्वरः ।
युवराजः कण्डरीको यशोभद्रा च तत्प्रिया ॥ इत्यादि ।

End. चक्षुस्तृतस्त्वया + + कियेति प्रतिबोधतः ।
इत्तोऽस्माभिः प्रभोस्त्यागस्तुष्टः सर्वेषु भूपतिः ॥
सर्वे क्षुल्लकुमारस्य मार्गे लग्नाः प्रवज्रणः ।
लब्धोभवेव कर्त्तव्या सर्वैरपि महात्मभिः ॥

Colophon. इति क्षुल्लकुमारकथा समाप्ता ।

विषयः । साकेतपुरवासिनः क्षुल्लकुमारस्य चरितकीर्त्तनव्याजेन निर्लोभताया माहात्म्य-कीर्त्तनम् ।

---

**No. 4008.** सम्यक्त्वश्रावककथा । Substance, country-made paper, 12 × 4 inches. Folia, 4. Lines, 8 on a page. Extent, 72 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pausála. Appearance, decayed. Prose and verse. Incorrect. Sanskrit and Prákrita.

**Sankása-śrávaka-kathá.** In this work the story of one Sankása-śrávaka has been told to illustrate the sinfulness of the misappropriation of temple endowments and the merit of increasing income from such sources. Anonymous. H. P. S.

**Beginning.** प्रणम्य श्रीमहावीरं जिनं त्रिजगदीश्वरम् ।
प्रणं संकाससद्देश तथा चमोवि पावित्री ॥

अथार्थे सङ्काशश्रावकदृष्टान्तः ।

जम्बूद्वीपाभिधे द्वीपे परिपूर्णेन्दुवर्तुले ।
विद्यते भरतक्षेत्रमधिज्यधनुराकृति ॥
सुवर्णनिर्म्मितावासा बहुपुण्यजनार्च्चिता ।
साक्षादलकापुरीवास्ति नगरी गन्धिलावती ॥ इत्यादि ।

**End.** श्रुत्वाख्यानं तदिदमधुना चैत्यवित्तोपयोग-
स्त्याज्यः सर्व्वैर्विदितभगवद्धर्म्मतत्त्वैः सुसत्त्वैः ।
रक्ष्यं यत्नाज्जिनगदितधनं वर्द्धनीयं तथोच्चै-
र्येन स्वर्गः प्रथममथ सा प्राप्यते मोक्षलक्ष्मीः ॥

**Colophon.** इति सङ्काशश्रावककथा समाप्ता ।

विषयः । गन्धिलापुरवास्तव्यस्य सङ्काशश्रावकस्य चरितकीर्त्तनव्यपदेशेन चैत्यधनस्य इथा-व्ययकरणे महान् दोषः, तद्वर्द्धने च महानभ्युदय इति कथनम् ।

---

**No. 4009.** सिरिपालणरिंदकहा । (श्रीपालनरेन्द्रकथा ।) Substance, country-made paper, 14 × 6 inches. Folia, 79. Lines, 10 on a page. Extent, 138 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchâyata-pausála. Appearance, new. Verse. Correct. Prákṛita.

**Siripála-narinda-kahá, or S'rípála-narendra-kathá.** The story of S'rípála, king of Rájagṛiha, is fully given in this work. It contains an exposition of the nine cardinal doctrines of the Jaina faith and a description of the Tantric rite known as the Siddhachakra.

H. P. S.

**Beginning.** अरिहाइं नवपयाइं झाइत्ता हिय कमलमज्झंमि ।
सिरिसिद्धचक्कमाहप्पमुत्तमं किं पि जंपेमि ॥
अत्थिह जंबुदीवे दाहिण भरहद्ध पच्छिमे खंडे ।
बहुधनधन्न समिद्धो मगधादेसो जयप्पसिद्धो ॥

जम्मुप्पत्तं सिरिवीरनाहतित्थं जयंमि वित्थरियं ।
जं देसं सविसेसं निच्चं भासंति तित्थयरा ॥ इत्यादि ।

**End.** एसा नवपयमाहप्पसारसिरिपालनरवरिंदकहा ।
निसुणंत कहंताणं भवियाणं कुणउ कल्लाणं ॥
सिरिवज्जसेण गणहर पट्टप्पहु हेमतिलयसूरीणं ।
सीसेहिं रयणसेहरसूरीहिं इमाउ संकलिया ॥
तस्सीस हेमचंदेण साहुणा विक्कमस्स वरिसंमि ।
चउदस अट्ठावीसे लिहिया गुरुभत्तिकलिएण ॥
— — — — — — — ।

**Colophon.** इति सिरिपालनरिंदकहा । सम्पूर्णोऽयं ग्रन्थः ।

विषयः । जैनमनवपदसिद्धान्तकथनमुखेन सिद्धचक्रमाहात्म्यकीर्त्तनप्रसङ्गेन च राजगृह पुराधिनाथस्य श्रीपालस्य विस्तरेण चरित्रकथनम् ।

---

**No. 4010.** जम्बूचरित्रम् । Substance, country-made paper, 12 x 5 inches. Folia, 46. Lines, 8 on a page. Extent, 728 ślokas. Character, Nágara. Date, ? Place of deposit, Váluchara, Panchláyata-pausála. Appearance, fresh. Prose and verse. Incorrect. Sanskrit.

**Jambú-charitra.** A biographical account of Jambúsvámí. The author's name is Sakalaharsha. The interlocuters are Mahavira and S'renika, king of Rájagriha. The story opens with an account of of Jambú's four previous existences. In his fifth existence he was born as the son of Rishabha, a S'reshthi of Rájagriha. He was named Jambú because his mother in a dream saw a Jambú tree. He was from early youth indifferent to worldly pleasure and pain, though his father married him to eight exceedingly handsome girls. Once on a time thieves entered his house at night. He preached to them and to his wives. They all followed him, and renounced the world. He became a disciple of Vardhamán. There are eighteen moral stories in this work. Some of them were told by Jambú to the thieves and the wives, and some by his wives to him. These are the stories of (1) Madhuvindu, (2) of the eighteen relatives, (3) of Mahes'varadatta, (4) of S'amudra S'rí, (5) of a crow, (6) of Brahma-śrí, (7) of a goldsmith, (8) of Kalámbita,

(9) of a she-monkey, (10) of Siddhaibuddhi, (11) of a horse of the purest descent, (12) of S'rí-vallabhá, (13) of an illiterate Bráhmaṇa, (14) of Kanakavatí, (15) of a prostitute and a Bráhmaṇa, (16) of a bird, (17) of three friends, (18) and a story told by the Bráhmaṇa.

**Beginning.** सप्रभावं जिनं नत्वा पार्श्वं सुरेन्द्रवन्दितं ।
लिख्यते स्वोपकाराय जम्बूस्वामिकथानकं ॥

अथैकदा समुद्रवद्गम्भीरः प्रशमवाञ्छितीरः श्रीमहावीरः क्षितितले विहारं कुर्व्वन् राजगृह-पुरं प्रतिष्ठितः । ततो देवैर्भव्यात्मसुखकरणं समवसरणं चक्रे । अथ तत्समये श्रीवीरागमनं श्रुत्वा श्रीश्रेणिकभूपालः सदभयकुमारादिपरिवारविशालः वन्दनार्थमागतः । पश्चात् परमेश्वरेण चतुर्विधो धर्मः प्रकाशितः । यतः,

दानेन प्राप्यते लक्ष्मीः शीलेन प्राप्यते सुखं ।
तपसा क्षीयते कर्म भावेन मोक्षसम्पदः ॥ इत्यादि ।

**End.** उवसमो कप्पे संजमतियं च केवलबुच्छिन्नामदस इमे ठाणो ।
लोकोत्तरं चि सौभाग्यं जम्बूस्वामिमहामुनेः ।
अद्यापि यं पतिं प्राप्य शिवश्रीर्नान्यमिच्छति ॥

**Colophon.** इति श्रीजम्बूचरित्रं समाप्तं विहितं श्रीसकलचर्षेण ।

विषयः । अथैकदा राजगृहनगरे धर्म्मदेशनां दिशन्तो भगवन्तो वर्द्धमानस्वामिनः श्रेणिक-भूपालमुद्दिश्य भारतेऽस्मिन् चरमकेवलज्ञानी जम्बूकुमारो भविष्यतीत्यूचुः । अथ कीदृशोऽसौ जम्बूकुमार इति सप्रश्रयं श्रेणिकभूपालेन पृष्टो भगवानाह । तत्र जम्बूकुमारस्य चतुःसंख्यकातीत-जन्मविवरणकथनपूर्व्वकं पञ्चमे जन्मनि राजगृहपुरवासिनः ऋषभश्रेष्ठिनः पुत्रत्वमधिगम्य तत्पत्न्या धारिण्या गर्भधारणकाले स्वप्ने जम्बूवृक्षदर्शनात् जम्बूकुमारेति नाम्ना व्यपदेशकथनं । ततोऽसौ यौवनेऽपि प्रोज्ज्वलवैराग्यतया पित्रोराज्ञेति अष्टौ कन्याः परिणीय तासु सुन्दरीष्वपि लब्धबुद्ध्या सञ्जातोपचाबुद्धिः रात्रौ स्वगृहागतान् चौरान् तथा स्वदारांश्च धर्मोपदेशदानेन साधुचरितान् विधाय प्रातरेव भगवतो वर्द्धमानस्य पञ्चमगणधरं सुधर्मस्वामिनं गुरुत्वेनाङ्गीकार्य्य ततो दीक्षां लब्ध्वा प्रव्रज्याग्रहणेन च कृतकृत्यो बभूवेति विस्तरेण कथनं । तत्र चौरान् स्वदारांश्चोद्दिश्य जम्बू-कुमारेण, अथ तत्पत्नीभिरपि तमुद्दिश्य चाख्यायिकाः कथिताः । ताश्च अष्टादशभेदाः । तत्र प्रथमतो मधुबिन्दुकथाकीर्त्तनं । एवं क्रमेण अष्टादशजातिविशेषकथाकीर्त्तनं । महेश्वरदत्तकथा । समुद्रश्रीकथा । काककथा । पद्मश्रीकथा । स्वर्णकारकथा । कलम्बिककथा । वानरीकथा । सिद्धिबुद्धिकथा । विशुद्धजातीयाश्वकथा । श्रीवल्लभाकथा । मूर्खब्राह्मणकथा । कनकवतीकथा । वेश्याब्राह्मणकथा । पक्षिकथा । मित्रत्रयकथा । ब्राह्मणकल्पितकथाकीर्त्तनञ्च ।

---

**No. 4011.** जिनशतकबालावबोधः । Substance, country-made paper, 14 × 5 inches. Folia, 93. Lines, 15 on a page. Extent, 3,051 ślokas. Character, Nágara. Date, ? Place of deposit. Váluchara Panchâyata-pausála. Appearance, new. Prose. Incorrect. Gujaráṭi-bhásá.

**Jina-śataka, bálábodha.** A commentary in Gujarâti of Devendra Súri's Prakrit work, entitled Jinaaśtaka. The author's name is Mati-chandra, a disciple of Gopálgaṇi, belonging to the Anchalika Gachchha. H. P. S.

**Beginning.** रत्नत्रयोपदेष्टारं नत्वा वीरं जिनोत्तमम् ।

स्वल्पो हि शतकस्यार्थो मतिचन्द्रेण लिख्यते ॥

नमिय जिनमिति । अर्थः । जिन कहिए रागद्वेषमोहादिदुर्धरवैरवारणाजेता अष्टमहा-प्रातिहार्यलक्षणा शोभाइं अलङ्कृततीर्थङ्कर ते प्रतिइं नमस्कार करीने । इत्यादि ।

**End.** शतकशाडते सम्पूर्ण करिउं । विकरालकलिकालजलधर जे पाताल तेहने उद्धरवाने धुरीधसमान जे श्रीजगच्चन्द्रसूरि तेहना चरणकमलने विशेषभमरसमान जे देवेन्द्रसूरि तिणइ ग्रंथ लिख्यो छै । कर्मप्रकृति । पञ्चसंग्रह । इत्यनुशतकादिकशास्त्रथी उद्धरीने । सयग-कहतां शतकगाथा प्रमाण छै । ते कारण शतककहिइं ।

ए शास्त्र विचारतां आत्मज्ञान उर ।

**Colophon.** इति श्रीमदञ्चलिकगच्छीयगोपालगणिशिष्यमतिचन्द्रकृतः जिनशतकबा-लावबोधः ।

शतकस्यार्थलेशो हि लिखितो लोकभाषया ।

बालानां सुखबोधाय मतिचन्द्रेण साधुना ॥

सूत्राद्युद्यद्दृष्टिसंवादि लिखितं बुद्धिविभ्रमात् ।

तच्छोध्यं हि कृपां कृत्वा सुधिया गुणशालिना ॥ इति शम् ।

विषयः । देवेन्द्रसूरिकृतप्राकृतभाषामयजिनशतकस्य गुर्जरभाषया व्याख्यानम् ।

---

**No. 4012.** निबन्धसङ्ग्रहः । Substance, country-made paper, 12 × 4 inches. Folia, 325 Lines, 8 on a page. Extent, 6,662 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Nibandha-saṅgraha.** Abstract of the Chikitsásthána section of the Suśruta. By Ulhana.

**Beginning.** शारीराणन्तरं चिकित्साख्यानमारभ्यते । अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः । द्वौ व्रणौ अधिकृत्य कृतं चिकित्सितं द्विव्रणीयचिकित्सितं विकारप्रतीकारः । इत्यादि ।

**End.** दोषघ्नमिति दोषेण येन वा शुक्ररोगेण वा ।
निबन्धान् बहुधा वीक्ष्य भिषक्श्रीडल्हणाभिधः ॥
चिकित्साख्यानमकरोत्सुबोधं भरतात्मजः ।

**Colophon.** इति श्रीडल्हणविरचिते निबन्धसङ्ग्रहे समस्तनिबन्धव्यापकार्थके सौश्रुतचि-कित्साख्यानं समाप्तमिति । चत्वारिंशोऽध्यायः समाप्तः ।

विषयः । सुश्रुतसंहिताचिकित्साख्यानस्य व्याख्यानम् ।

---

**No. 4013.** द्वादशाब्दादूर्द्ध्वमवलोकने विधिः । Substance, country-made paper, 8 × 4 inches. Folia, 2. Lines, 8 on a page. Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose and verse. Correct.

**Dvádaśábdádúrddha-mavalokane-vidhi.** A description of a rite to be celebrated on the return of a son or other relation after an absence of twelve years from home.

**Beginning.** अथ द्वादशाब्दादूर्द्ध्वमवलोकने विधिः ।
द्वादशाब्दे व्यतीते तु न कुर्य्यान्मुखदर्शनम् ।
पित्रोः पुत्रस्य नैवाङ्गमेवाशानिकरं भवेत् ॥
दर्शनं यदि कुर्व्वीत शिवं पूज्य शिवालये ।
कांस्यपात्रं स्थापयित्वा अन्तः पठविधानतः ।
जलपूर्णे कांस्यपात्रे पूर्वं मुखनिरीक्षणम् ॥
मुखावलोकनं पश्चात् समालिङ्गा विपर्य्ययात् । इत्यादि ।

**End.** आचार्य्यपुरःसरमष्टोत्तरशतं तिलान् हुत्वा आचार्य्याय च दक्षिणां दत्वा ब्राह्मणान् भोजयित्वा बन्धुभिः सह भुञ्जीतेति ।

विषयः । पितामाताभ्रात्रादीनामदर्शनदिनात् द्वादशाब्दे व्यतीते पुनर्दर्शनविधिकथनं । तत्र प्रयोगकथनञ्च ।

---

**No. 4014.** गणव्याख्यानावचूरिः वा, गणव्याख्यानक्रमारोहटीका । Substance, country-made paper, $11\frac{1}{2}$ × 5 inches. Folia, 15. Lines, 18—19 on a page. Extent, 770 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose. Correct.

**Gunasthánávachúri, or Gunasthána-kramároha-tíká.** A gloss on the Jain treatise entitled *Gunasthána.*

**Beginning.** अर्हन्तं हृदि ध्यात्वा गुणस्थानविचारिणां ।
अनुकूलामिमं वृत्तिर्लिख्यते ह्यवचूर्णिवत् ॥

तत्रादौ मङ्गलार्थमभीष्टदैवतनमस्कारस्य सम्बन्धादेश्चाभिधायकमाद्यपद्यमाह । गुणमिति । यत्र यत्र पूर्वाप्राप्तगुणविशेषाविर्भावो भवति तत्तद्गुणस्थानमित्युच्यते । तानि गुणस्थानानि । तेषां स्वरूपं किञ्चिदल्पमात्रमुच्यते इति सम्बन्धः । इत्यादि ।

**End.** श्लोकैः प्रायः पूर्व्वर्षिरचितैः श्लोकैरेवेत्यर्थः । कैश्चकृतो रत्नशेखरसूरिभिर्वृ-हद्गच्छीयश्रीवज्रसेनसूरिशिष्यैः श्रीहेमतिलकसूरिपट्टप्रतिष्ठितैः श्रीरत्नशेखरसूरिभिः स्वपरोपका-राय श्लोकबन्धरूपतया प्रकटित इत्यर्थः ।

**Colophon.** इति श्रीगुणस्थानक्रमारोहस्य टीका समाप्ता ।
ऋषिरसमुनिचन्द्रे दशम्यां फाल्गुणे सिते ।
गुणस्थानावचूरिं च लिलेख तिलकोदयः ॥

विषयः । गुणस्थानक्रमारोहाभिधानजैनप्रकरणस्य व्याख्यानम् ।

---

**No. 4015.** विविक्तनामसङ्ग्रहः । Substance, country-made paper, 10 × 4 inches. Folia, 103. Lines, 15 on a page. Extent, 2,338 slokas. Character, Nágara. Date, Sm. 1785. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

**Vivikta-náma-sangraha.** A commentary on the *náma-sangraha* of Hema Áchárya commonly called Hema Kosha.

**Beginning.** स्वस्ति श्रीविजगज्जन्तुजातजीवातुसन्निभः ।
श्रिवतातिः सतां भूयाच्छान्तिनाथो जिनेश्वरः ॥
नवीनकविताकान्ताभिमानमतमातङ्गः ।
स्वगुरोः सूरचन्द्रस्य प्रणम्य चरणाम्बुजं ॥
भावचन्द्रादिशिष्याणां सम्यग्व्युत्पत्तिहेतवे ।
नामसङ्ग्रहनामानि विविच्यन्ते पृथक् पृथक् ॥
रूढयौगिकमिश्राख्यास्त्रिधा शब्दाः प्रकीर्त्तिताः ।
व्युत्पत्तिवर्ज्जितास्तत्र रूढा आखण्डलादयः ।
व्युत्पत्तिभाजः सर्व्वेऽपि मन्यते शाकटायनः ।
तत्पक्षेऽपि तद्ग्रन्थवर्ज्जितः प्रथमो मतः ॥

योगिका योगजनिता योगसम्बन्धयो मतः ।
गुणक्रियाभ्यां सम्भूतः सम्बन्धप्रभवश्च सः ॥
— — — — — — ।

अनयोरर्थः । शब्दानां परमार्थानुगमनसम्बन्धः स योगो गुणक्रियासम्बन्धाच्च भवति । इत्यादि ।

End. यदाहुः ।
इयन्त इति संख्यानं निपातानां न विद्यते ।
प्रयोजनवशादेते निपात्यन्ते पदे पदे ॥

Colophon. इति श्रीमत्तपोगणगगनाङ्गनगगनमणिभट्टारकसार्व्वभौमभट्टारकश्री ५ श्रीविजयसेनसूरीश्वराणां विजयराज्ये पण्डितश्री ५ श्रीसकलचन्द्रगणिशिष्यमहोपाध्यायधारकश्रीसूरचन्द्रगणि-रमोचनाद्यनेकसुकृतकारकमहोपाध्यायश्री ५ श्रीभानुचन्द्रगणिविरचिते विविक्तनामसङ्ग्रहे षष्ठः काण्डः समाप्तः । संवत् १०८५ ।

विषयः । हेमचन्द्रकृतनाममालाभिधानकोषस्य व्याख्यानम् ।

---

No. 4016. जीवविचारप्रकरणवृत्तिः, वा जीवविचारलघुवृत्तिः ।
Substance, country-made paper, 10 × 5 inches. Folia, 8. Lines, 17 on a page. Extent, 408 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Jívavichára-prakaraṇa-vṛitti, or Jívavichára-laghu-vṛitti.** A gloss on the Jaina treatise called *Jivavichára*. By Sánti Súri.

**Beginning.** ध्यात्वा जैनं महः श्रीमत्सद्गुरुं प्रणिपत्य च ।
वृत्तिं जीवविचारस्य कुर्व्वे संक्षेपतः स्फुटां ॥

इह हि संसारसागरे निमज्जतां जन्तूनामुपकाराय प्रवहणकल्पं तत्त्वोपदेशं दातुकामः श्रीशान्तिसूरिस्तावत् स्वेष्टदेवताप्रणतिपूर्व्विकामभिधेयादिसूचिकामादिमां गाथामाह । भुवणपईवमिति । अत्र भणामीतिक्रियाभिसम्बन्धादेवमिति कर्त्तृपदमध्याहार्य्यं । इत्यादि ।

**End.** एतेन न समस्तजीवा कथिता इति सूचितं ।
इति जीवविचारलघुवृत्तिः ।
इत्यद्यादिकं यद्य यद्यपि पुरातनं ।
तथापि सुखबोधार्थं वृत्तिकेयं विनिर्म्मिता ॥
प्रमादाद्वा मतेर्मान्द्यादुक्तमुत्सूत्रमत्र यत् ।
तन्मिथ्यादुष्कृतं मेऽस्तु शोधनीयश्च धीधनैः ॥

संवद्ग्राणशिलौसुधांशुवसुधासंख्ये नभस्ये सिते
पक्षे पावनसप्तमीसुदिवसे श्रीकादिनेराभिधे ।
+गे श्रीमति पूर्णतामभजत व्याख्या सुबोधिन्यसौ
सम्यक् श्रीजिनचन्द्रसूरिमुनिपे गच्छेशतां बिभ्रति ॥
श्रीमन्तो जिनभक्तिसूरिगुरवश्चान्द्रे कुले जज्ञिरे
तच्छिष्या जिनलाभसूरिमुनिपाः श्रीप्रीतिनः सागराः ।
तच्छिष्यास्तनधर्म्मवाचकवरास्तेषां विनेयः क्षमा-
कल्याणः स्वपरोपकारविषयेऽकार्षीदिमां वृत्तिकाम् ॥

Colophon. इति श्रीजीवविचारप्रकरणवृत्तिः सद्भिर्वाच्यमाना चिरं नन्दतात् ।

विषयः । शान्तिसूरिकृतजीवविचारनामकजैनग्रन्थस्य व्याख्यानम् ।

---

No. 4017. अभिधानचिन्तामणिः, वा योगशतटीका। Substance, country-made paper, 10 × 4½ inches. Folia, 11. Lines, 20 on a page. Extent, 647 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Abhidhána-chintámani or Yogaśataka-ṭíká.** A medical treatise, being a century of recipes. By Vararuchi.

**Beginning.** श्रीवर्द्धमानं प्रणिपत्य मूर्ध्ना
जनस्य सर्व्वस्य निरोगहेतोः ।
श्रीपूर्णसेनेन सुबोधनार्थं
प्रारभ्यते योगशतस्य टीका ॥

अथ जीवा व्याधिभिग्रस्तास्तेषां जीवानां व्याधिरमन्याहतशीतातपवर्षानिलविषमाशनानिद्रादिभिर्बाधय उत्पद्यन्ते । तेषां व्याधीनां प्रतीकारार्थं पुरा सर्व्वर्षिभाषितादैश्वग्रन्थात् सारयोगान् विविच्य योगशतं कर्त्तुकामो वररुचिः शास्त्रादौ प्रतिज्ञां करोति कृत्स्नस्येति । कृत्स्नस्य निरवशेषस्य चरकशास्त्रभडसुश्रुतस्य तन्त्रस्य कल्याणादिवैद्यशास्त्रस्य—इत्यादि ।

**End.** मूत्रपुरीषयोः चिरकालेन प्रवर्त्तनं । एतानि संक्षेपेण जानाति ।
एतानि चिह्नानि च मनुजानां
सर्व्वामया + + + चिकित्सकानाम् ।
कश्चित् + + प्राप्तनिरोधपूर्वं
संज्ञान्तरं येन तु संप्रयाति ॥

**Colophon.** इत्यभिधानचिन्तामणियोगशतटीका सम्पूर्णा ।

विषयः । वररुचिकृतयोगशताभिधानवैद्यकनिबन्धस्य व्याख्यानम् ।

---

**No. 4018.** संघपट्टकप्रकरणावचूरिः, वा संघपट्टकपञ्जिका । Substance, country-made paper, 12 × 5 inches. Folia, 7. Lines, 22—24 on a page. Extent, 547 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse. Correct.

**Sañgha-paṭṭaka-prakaraṇávachúri or Sañgha-paṭṭaka-panjiká.** A gloss on a Jain treatise. By Jinavallabha Súri.

**Beginning.** नत्वा श्रीशान्तिदेवेशं ज्ञानचन्द्रं गुरुं तथा ।
मया विलिख्यते चैषा संघपट्टकपञ्जिका ॥

श्रीमद्विक्रमनृपात् दशशताशीतिवर्षे श्रीमदणहिल्लपुरपत्तने दुर्लभराजसभायां चैत्यवासिवादिनो निर्जित्य प्राप्तखरतरविरुदः श्रीजिनेश्वरसूरिः तत्पट्टे श्रीजिनचन्द्रसूरिस्तद्विनेयो नवाङ्गवृत्तिविधाता श्रीअभयदेवसूरिस्तच्छिष्यः श्रीजिनवल्लभसूरिश्चैत्यवासनिराकरणाय श्रीसंघस्य पट्टकल्पराजपट्टमिव श्रीसंघपट्टकशास्त्रं चकार । तस्यायमाद्यकाव्यं । वक्ष्यति । व्याख्या । वयं तं देवं श्रीपार्श्वनाथं स्तुमः प्रणमामः । इत्यादि ।

**End.** तेषाञ्च परमं मङ्गलं भविष्यतीति भावार्थः ।
संवत् पञ्चदशाधिके सप्तदशशते त्विदं ।
लिखिता देवराजेन संघपट्टकपञ्जिका ॥

**Colophon.** इति श्रीसंघपट्टकप्रकरणावचूरिः सम्पूर्णा ।

विषयः । जिनवल्लभसूरिकृतसंघपट्टकाभिधानजैनसन्दर्भस्य व्याख्यानम् ।

---

**No. 4019.** स्वोपज्ञधातुपारायणम् । Substance, country-made paper, 13 × 4½ inches. Folia, 70. Lines, 15 on a page. Extent, 4,398 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse Generally correct.

**Svopajna-dhátu-páráyaṇa.** Illustrations of verbs and cojugations in a grammatical treatise by the author. By Hemachandra.

**Beginning.** श्रीसिद्धहेमचन्द्रव्याकरणनिवेशिनाम् सकलधातूनाम् ।
आचार्यो हेमचन्द्रो विवृणोत्यर्हं नमस्कृत्य ॥

इह तावत्तदपदार्थज्ञानद्वारोत्पन्नं वेदोपादेयज्ञानं निःश्रेयसहेतुरिति प्रसिद्धम् । तदपदार्थ ज्ञान+ नयनिक्षेपादिभिरभिन्नमोपायैः परमार्थतो व्यवहारतश्च प्रकृत्यादिभिरिति इत्यादि ।

**End.** चक्षयति । चक्षयति । चपयति । चपयति । इत्यपि भवति ।

**Colophon.** इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे तिङन्तश्चौ भ्वादिगणः सम्पूर्णः ।

विषयः । तिङन्तधातुहेमचन्द्रव्याकरणानुसारेण धातूनां विशेषेण भ्वादिप्रदर्शनपूर्व्वकं प्रयोग-स्वरूपकथनं ।

---

**No. 4020.** शूलटङ्केश्वरमाहात्म्यम् । Substance, country-made paper, 9 × 5 inches. Folia, 39. Lines, 11 on a page. Extent, 777 ślokas. Character, Nágara. Date, Sм. 1844. Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose and verse. Incorrect.

**S'úla-taṅkeśvara-máhátmya.** A description of the sanctity of S'úlataṅkeśvara. An extract from the Skanda Puráṇa.

**Beginning.** अथ शूलटङ्केश्वरमाहात्म्यं लिख्यते । तदुक्तं स्कान्दे शिवरहस्ये । ऋषय ऊचुः ।

सूत सूत महाबुद्धे सर्व्वशास्त्रविशारद ।
शूलटङ्केश्वरस्यैव माहात्म्यं वद विस्तरात् ॥
शूलटङ्केति नामापि कथं जातं महेशितुः ।
कुत्र वा संस्थितिस्तस्य पूर्व्वमासीत् प्रभोः सदा ॥
केन वा कारणेनैव काश्यामागमनं विभोः ।
आकारितश्च केनापि किमर्थं कुत्र वा स्थितः ॥
केन सार्द्धं समागत्य किञ्च कार्य्यं कृतं तथा ।
किञ्च तीर्थं तदा जातं किञ्च पूर्व्वं स्थितञ्च यत् ॥ इत्यादि ।

**End.** रणेरण्ये विवादे च सन्निधौ यदि चाप्नुयात् ।
जयं तस्य भवेत् तत्र नास्ति शास्त्रादिक+च ॥
राजा वा राजपुत्रो वा राजकीयस्तथैव च ।
एतन्माहात्म्यराजस्य सान्निध्यं सर्व्वदाचरेत् ॥

**Colophon.** इति स्कन्दपुराणे शिवरहस्ये शूलटङ्केश्वरमाहात्म्यविशेषवर्णने षोडशो-ऽध्यायः समाप्तः । संवत् १८४४ ।

विषयः । काशीस्थघुसृणेश्वरनामकमहादेवस्य विशेषेण माहात्म्यादिकथनं । तदाविर्भाव-वृत्तान्तकथनं । घुसृणेश्वरनामकारणकथनं । तस्य दशाश्वमेधावस्थितिकारणकथनं । घुसृणेश्वर-क्षेत्रनिरूपणं । तत्र यात्राक्रमकथनं । तत्र नैमित्तिककाम्ययात्रादिविधिकथनं । तत्फलकथनञ्च । तत्तीर्थे माघस्नानादिमाहात्म्यकथनं । प्रसङ्गान्माघमाहात्म्यकथनं दशहरामाहात्म्यादिकथनं । दशाश्वमेधे तत्तटस्थादिभिन्नस्नानाकरणमाहात्म्यकथनं । तत्र प्रासादशिवस्थापनादिमाहात्म्यकथनं । ध्वजदानादिमाहात्म्यकथनं । तत्र मरणे सायुज्यमोक्षप्राप्तिकथनं । तत्र रुद्रदानहोमादिकरणमा-हात्म्यकथनं । तत्र अभिषेकादिमाहात्म्यकथनं । तत्र पुराणपठनपाठनाश्रवणश्रावणादिमाहात्म्य-कथनं । कलौ घुसृणेश्वरस्य माहात्म्यातिशयवर्णनञ्च ।

---

**No. 4021.** रसमीमांसा । Substance, country-made paper, 10 × $4\frac{1}{2}$ inches. Folia, 25. Lines, 3—4—5 on a page. Extent, 114 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Generally correct.

**Rasa-mímáñsá.** Literary criticism. By Gañgáráma Jaḍhi.

**Beginning.** बल्लरामेणाकारि कलिन्दकन्या यथा नापि ।
गङ्गारामेण तथा रसमीमांसापि वाङ्मनः ॥
कविभिः काव्यैः सुहृदां मानसं सदनं समानीतैः ।
अनुभावैश्च विभावैर्व्यभिचारिभिरपि च सम्भूय ॥
कश्चिदलौकिकरूपो व्यापारो जन्यते तत्र ।
तस्मात् स्वतः प्रकाशज्ञानावरणमपसरति झाक् ॥ इत्यादि ।

**End.** गङ्गारामोक्तीनां रसमीमांसां विजानानः ।
पुरुषोऽस्तु तुष्टः सर्व्वज्ञः सोऽपि गोविन्दः ॥

**Colophon.** इति श्रीजडुपनामकगङ्गारामोक्तीता रसमीमांसा सम्पूर्णा ।

विषयः । रसस्वरूपविवेचनं । रसलक्षणं । आलम्बनविभावलक्षणादिकथनं । उद्दीपनविभा-वादिलक्षणं । व्यभिचारिभावलक्षणादिकथनं । अनुभावलक्षणादिकथनं । शृङ्गारादिनवविधरसलक्षणा-दिकथनं । रत्यादीनां लक्षणादिकथनं । अथ सर्व्वलक्ष्यलक्षणलक्ष्यात्मकरूपभेदनिरूपणञ्च ।

---

**No. 4022** छाया, वा रसमीमांसाव्याख्या । Substance, country-made paper, 10 × $4\frac{1}{2}$ inches. Folia, 25. Lines, 6—7—8 on a page. Extent, 618 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Chháyá or Rasa-mímáñsá-vyákhyá.** A gloss on the author's treatise on the Rasas.

**Beginning.** श्रीगणेशाय नमः ।

यावद्ब्रह्मकरण्डुकृतमिनिरसपूर्वापरप्रभुरविन्दुः ।
सत्तापसत्त्वसत्यो महाधिपो जयति सार्वभौम इव ॥
नाभीसरोजयोनेर्वदनसरोजासनोपरि स्थिता ।
त्रिभुवनमपूर्वमिव या प्रदर्शयति सा सरस्वती जयति ॥
— — — — — — — ।
राधादेवीं गङ्गारामो जडीति यः ख्यातः ।
सोऽयं रसमीमांसां विवृणोम्यर्थप्रबोधसिद्ध्यर्थम् ॥

प्रारम्भे इष्टस्य ग्रन्थस्य निर्विघ्नसमाप्तिकामनया कृतं वस्तुनिर्देशात्मकं मङ्गलं शिष्यशिक्षायै निबन्धे चिकीर्षितं प्रतिजानीते । मङ्गरामेवेति । मङ्गरामेव कलिन्दकन्या यमुना चाकाशगङ्गे यथापि । इत्यादि ।

**End.** पुरुषोत्तमः तुष्टोऽस्तु । स गोविन्दः सर्वज्ञः पात्विति सम्बन्धः । शेषं पूर्ववदिति ॥

रससागरपारगानां भावप्रभाविष्णुजमुक्ताभाम् ।
सात्त्विककुवलयवर्णां नासामुक्तां स्तवाय नायीमाम् ॥
नौकाया भानुतरङ्गिण्यां छायामिमां समाख्याय ।
नवरसपयोधिभूता विचरन्तः केन रामकृष्णाम्नि ॥

**Colophon.** इति श्रीजगुपनामकगङ्गारामविरचिता छायाभिधा रसमीमांसाव्याख्या समाप्ता । शुभमस्तु ।

विषयः । निजकृतरसमीमांसाया व्याख्यानम् ।

---

**No. 4023.** **चतुर्विंशतिमतव्याख्या, (आचारकाण्डम्)** | Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 114. Lines, 7 on a page. Extent, 2,174 ślokas. Character, Nágara. Date, SM. 1867. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Chaturviñśatimata-vyákhyá.** (**A'chárakáṇḍa.**) Dialectic disquisitions on duty. By Bhaṭṭojí Díkshita.

Beginning श्रीगणेशाय नमः ।

अथाह्निकं लिख्यते । तत्र माधवीये कूर्म्मपुराणे । ब्राह्मे मुहूर्त्ते उत्थाय धर्म्ममर्थञ्च चिन्तयेत् । कायक्लेशं तदुद्भूतं ध्यायीत परमेश्वरमिति । सूर्य्योदयात् प्रागर्द्धप्रहरे द्वौ मुहूर्त्तौ । तत्राद्यो ब्राह्मः । द्वितीयो रौद्रः । तदुक्तं विष्णुपुराणे । रात्रेः पश्चिमयामस्य मुहूर्त्तो यस्तृतीयकः । स ब्राह्म इति विज्ञेयो विहितः स प्रबोधन इति ।

End. तत्र च वर्ज्यानाह पराशरः । विक्रीणन् मद्यमांसानि ह्यभक्ष्यस्य च भक्षणात् । कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् । इति शेषमन्यतो बोध्यम् । इति शूद्रधर्म्माः ॥

Colophon. इति पदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां श्रीचतुर्विंशमतव्याख्यायामाचारकाण्डं समाप्तम् । संवत् । १८९७ ।

विषयः । आह्निककृत्यनिरूपणम् । तत्र ब्राह्मरौद्रादिमुहूर्त्तलक्षणादिकथनं । उत्थानविधिकथनं । तत्र भूमिप्रार्थनाविधिकथनं । तृणकाष्ठाद्यावरणे कालभेदेन नियमविशेषकथनं । शौचादिविधिविवेचनं । पादप्रक्षालनादिविधिकथनं । आचमनविधिकथनादिकं । गण्डूषनिरूपणादिकं । ब्राह्मतीर्थादिनिरूपणं । आचमननिमित्तकथनं । चलद्वये दन्तधावने वर्ज्यतिथिकथनादिकं । पवित्रविधिकथनं । स्नानविधिकथनं । तदनुकल्पकथनं । दर्भमोचनादिविधिकथनं । परिधेयवस्त्रादिनिरूपणं । आर्द्रवस्त्रोत्सारणे विशेषकथनं । अनुकल्पकथनं । आश्रमभेदेन स्नानभेदनिरूपणम् । नित्यनैमित्तिकस्नानादिविधिकथनं । वस्त्रान्तरिते स्पर्शे विशेषकथनं । देवखातादिलक्षणकथनं । अश्वत्थच्छायास्नानविधिः । समुद्रस्नानविधिः । तिलकविधिः । सन्ध्याविधिकथनं । तत्कालदेशादिनिरूपणं । सन्ध्याप्रयोगकथनञ्च । गायत्रीजपविधिकथनं । होमविधिकथनं । प्रातर्होमकालादिनिरूपणं । श्रौतस्मार्त्ताग्निव्यवस्थाकथनं । नित्यदानविधिकथनं । मङ्गलदर्शनविधिकथनं । एवं दिनस्य द्वितीयतृतीयभागकृत्यकथनं । आतिथ्यविधिकथनं । अर्ज्जनोपायकथनं । आपद्वृत्तिकथनं । चतुर्थभागकृत्यकथनं । पञ्चयज्ञविधिकथनं । तदनुष्ठानक्रमकथनं । विशेषेण तर्पणविधिकथनं । देवतार्च्चनविधिकथनं । तत्र विष्णुपूजाविधिकथनं । पूजोपकरणादिनिरूपणं । पूजेतिकर्त्तव्यतानिरूपणं । गुरुपूजाविधिकथनं । पञ्चमभागकृत्यनिरूपणं । भूतयज्ञपितृयज्ञादिनिरूपणं । भोजनविधिकथनं । तदुदीच्याङ्गनिरूपणं । कालविशेषे भोजनाकर्त्तव्यतादिनिरूपणं । षष्ठभागकृत्यनिरूपणं । शयनविधिकथनं । उदक्शिर आदिशयनविधिः । अथ वानप्रस्थाश्रमकृत्यनिरूपणं । सन्न्यासाश्रमकृत्यनिरूपणं । कुटीचकबहूदकहंसपरमहंसभेदात् चतुर्विधसन्न्यासिनिरूपणं । अथ क्षत्रियधर्मकथनं । वैश्यधर्मकथनं । शूद्रधर्मकथनञ्च ।

---

**No. 4024.** प्रशस्तिकाशिका। Substance, country-made paper, 12 × 4½ inches. Folia, 20. Lines, 10 on a page. Extent, 600 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Praśasti-káśiká.** A Letter-writer, giving the forms and addresses appropriate for letters to various persons; defective.

**Beginning** नत्वा गणपतिं देवं सर्वविघ्नविनाशनम् ।
गुरुञ्च करुणानाथं सच्चानन्दाभिधानकम् ॥
प्रशस्तिकाशिका दिव्या शम्भुदेवेन लिख्यते ।
सर्वेषामुपकाराय लेखनाय च धीमताम् ॥
चतुर्णामपि वर्णानां क्रमतः कार्य्यकारिणी ।
लिख्यते सर्वविद्यार्थिप्रबोधाय प्रशस्तिका ॥
यस्या लेखनमात्रेण विद्या कीर्त्तिर्यशोऽपि च ।
प्रतिष्ठा लभ्यते शीघ्रमनायासेन धीमता ॥

तत्रादौ ब्राह्मणानाम् । स्वस्तिश्रीमत्सकलविद्याविनोदरसिकविराजमानसमानश्रीसमाजमान कविचित्तदिग्विजयवादीन्द्रदर्पदर्पदलन—इत्यादि ।

**End** श्रीमत्याः ।
स्वस्तिश्रीमद्वच्चनीसमानपातिव्रत्यालङ्कारणालङ्कृतभोगायतनप्रपार्जितनिखिलसम्पत्तिजनकर स्मात् अमुकमहाराजात् ।

**Colophon.** अतः परं खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति ॥

विषयः । प्रशस्तिलेखनप्रकारकथनं । तत्र गद्येन ब्राह्मणानां प्रशस्तिकथनं । तत्र पण्डितानां । विद्वत्प्रभृतीनां । यतेः । प्रसङ्गेन तपोवनवर्णनं । अथ पद्येन पूर्वोक्तानां प्रशस्तिकथनं । अथ कनिष्ठविषये प्रशस्तिकथनं । कुशललेखनोपायकथनं । अमात्यादीनां प्रशस्तिकथनं । राज्ञः प्रशस्तिकथनं । अथ गुरूणां । पितृचरणानां । ज्येष्ठ पद्येन प्रशस्तिकथनं । एवं पुत्र शंयं । अथ कुशललेखनप्रकारकथनं । अथ वैश्यविषये प्रशस्तिकथनं । अथ शूद्रविषये प्रशस्तिकथनं । अथ मात्रादीनां प्रशस्तिकथनं । नायकनायिकादीनां प्रशस्तिकथनं । अथ भार्य्यादीनां प्रशस्तिकथनं । अथ राज्ञ्याः प्रशस्तिकथनञ्च । अतः खण्डितम् ।

---

**No. 4025.** कार्त्तवीर्य्यस्तवः। Substance, country-made paper, 12 × 4 inches. Folia, 14. Lines, 8 on a page. Extent, 238 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Correct.

**Káruṇya-laharí-stava**. A Hymn to Dakshiṇámúrtí. Anonymous.

**Beginning**. श्रीगणेशाय नमः ।

नद्यादीन्दया विमलकलधौतद्युतिमतः
परं येन स्तौवं पुष्यति च सौन्दर्य्यमयते ।
चरीन्द्रादेः खर्गस्थितिलयकृतिर्यस्य विकृति-
श्चिदानन्दाकारं किमपि कचचापूरमवचम् ॥ १ ॥
( चहमनौषरायुगद्दयमन्त्रयापी ।)
शिवे नयन्नानागमनिगमवैचम्यकलना-
कुलौभावादेकां द्रविणचरिवन्नादिजननीम् ।
प्रपद्ये त्वामेव स्फुरदवणकावष्यलहरीं
चिदानन्दस्यन्दामिततरपयमन्दादरतया ॥ २ ॥ इत्यादि ।

**End**. चपारव्यापारे नव चचिरकावण्यलहरी-
स्तवेऽस्तोषम् किञ्चित्तदसदपि यत्कङ्कणकविः ।
मुदं नत्ते धन्यां कथमिमसुधामिन्मुलहरि-
म्यघलह्दर्यौ चाभः सुखयतितरामेव जननीम् ॥ १०० ॥
इति शतकमनन्तसत्सुविद्यालयस्य
प्रकटितपरमार्थानन्दसन्दोहभावम् ।
कलयतु मतिमत्त्विन् यादृशं यस्य चेत
स्तद्विलपललसाक्षी दक्षिणामूर्तिरेकः ॥ १०१ ॥

**Colophon**. इति श्रीशङ्करीचरणकिङ्करीभवता कविकङ्कणेन कृतः कारुण्यलहरीस्तवः । शुभमस्तु ।

विषयः । स्तोत्रव्याजेन भगवत्या रूपगुणमाहात्म्यादिवर्णनम् ।

---

**No. 4026** मुकुन्दविलासम् । Substance, country-made paper 11 × 4½ inches. Folia, 16. Lines, 10 on a page. Extent, 350 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Mukunda-vilása**. An imitation of Jayadeva's Gítagovinda.

**Beginning** श्रीकृष्णाय नमः ।

वेदान्तैरपि गीतं नित्यमचलं गुणातीतम् ।

नन्दसुतं गुणसिन्धुं चिन्तय मं चित राधिकावल्लभम् ॥

हेरम्बं कतिचित्परे द्विरदकं केचित्पुनः शङ्करं

शक्तिं केचन कोऽपि विष्णुममलं मन्ये परे पद्मजम् ।

एकं भिन्नधिया यमेव परमात्मानं सदोपासते

तं वृन्दावनचन्द्रमाश्रय मनः श्रीराधिकावल्लभम् ॥

या वाणी विधिपत्निषो जलधिजा या शार्ङ्गिणः पत्निनी

पञ्चाशार्द्धशरीरिणी भगवती या रामचन्द्रप्रिया ।

या रुक्मिण्यपि वासुदेवमहिषी या रामभा रेवती

तामेतां व्रजराजपुत्रदयितां श्रीराधिकामाश्रये ॥

— — — — — ।

गौजगन्नाथदेवस्य श्रीवासपुरपालिनः ।

एतस्य परितोषाय काव्यमारभ्यते मया ॥

गुर्जरीरागः ।

जय परमेश रमेश्वर विष्णो ।

विदितजगद्गुण रिपुगणजिष्णो ॥ इत्यादि ।

End. इति सुखदघनं मधुसूदनम्

जलधिजा भजिनी मधुसूदनम् ।

अनुमताञ्जलिभाषितदैवतं

श्रमदृशो भ्रमभावितदैवतम् ॥

Colophon. अतः परं खण्डितत्वात् परिसमाप्तिसूचकं नास्ति ।

विषयः । जयदेवकृतगीतगोविन्दच्छायामवलम्ब्य विरचितोऽयं निबन्धः । तत्र प्रथमे सर्गे,—गोपीनां श्रीकृष्णं प्रति पूर्वरागवर्णनं । द्वितीये सर्गे,—तासां वाग्विलासवर्णनं । तृतीये सर्गे,—गोपीभ्यो नारदस्य उपदेशदानवर्णनं । चतुर्थे सर्गे,—ताभिर्गौरीशङ्करपूजनवर्णनं । पञ्चमे सर्गे,—तासां समक्षं श्रीकृष्णस्य अनुरागप्रकटनवर्णनं । षष्ठे सर्गे,—गोपीकृष्णयोः परस्परमालापवर्णनं । चक्रचरलीलावर्णनञ्च, (अतः खण्डितम्) (काव्येऽस्मिन् हरिहरयोरभिन्नतया लीलावर्णितेति ज्ञातव्यमिति ।)

---

**No. 4027.** प्रपञ्चसारविवेकः । Substance, country-made paper, 10 × 4 inches. Folia, 41. Lines, 10 on a page. Extent, 890 ślokas. Character, Nágara. Date, Sm. 1840. Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Prapañcha-sára-viveka.** A compilation on morality as inculcated in the Sástras. By Gaṅgádhara Mahákara, son of Sadáśiva Súri.

**Beginning.** श्रीगणेशाय नमः ।

ॐ नमस्कृत्य शिवानाथं लक्ष्मीकान्तं जगद्गुरुं ।
भवानीं दुण्डिराजञ्च दण्डपाणिञ्च भैरवं ॥
गङ्गां सरस्वतीं रामं वायुपुत्रं जितेन्द्रियं ।
देवदैत्यगुरू सूर्य्यं वाल्मीकिं व्यासनारदौ ॥
चैतन्यानन्दपादाब्जं पितरं मातरं गुरुं ।
देवानृषीन् पितॄन् धर्म्मं काशीञ्च हृदि भक्तितः ॥
सदाशिवतनूजन्मा वत्सगोत्रः सतां प्रियः ।
गङ्गाधर इति ख्यातो भगवद्भक्तकिङ्करः ॥
नानाशास्त्राणि चालोक्य बालानां हितकाम्यया ।
प्रपञ्चसारविवेकञ्च कुर्व्वे मोहविनाशकं ॥
यच्छ्रवणमात्रेण मातेव हितकारिणी ।
बुद्धिर्विवर्द्धते पुंसां सोऽयमाद्रियतां बुधैः ॥ इत्यादि ।

**End.** बहवो यद्यपि धन्याः पादपाः सन्ति भूतले ।
तथाप्ययं विजयते चरिनामफलैः शुभैः ॥

**Colophon.** इति श्रीमन्महाकरोपनामकसदाशिवसूरिसूनुभगवद्भक्तकिङ्करगङ्गाधरविरचिते प्रपञ्चसारविवेके चतोराचकृत्यनिरूपणं नाम षष्ठमोल्लासः समाप्तः । संवत् १८४० ।

विषयः। विस्तरेण नीतिकथनं । तत्प्रसङ्गाद्धर्म्मनीतिकथनञ्च । विशेषेण नीतिमार्गनिरूपणं । सदसत्कर्म्मफलकथनं । देवस्वरूपनिरूपणं । भगवत्पूजाविधिकथनं । भागवतधर्म्मकथनं । चाह्निककृत्यकीर्त्तनञ्च ।

---

**No. 4028.** कवीन्द्रकल्पद्रुमः । Substance, country-made paper, 11 × 4½ inches. Folia, 20. Lines, 14 on a page. Extent, 1,572 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Kavíndra-kalpadrumá.** On literary composition. By Kavindra Achárya Sarasvati.

**Beginning.** श्रीरामाय नमः ।

गुरुं गङ्गां गणेशञ्च शिवौ विष्णुद्दिनेश्वरौ ।

प्रथम्य रम्यताचिन्मूर्त्तिबन्धेऽयं विधयते ॥

काशीवासी प्रकाशीहतमुखनिचयः सर्व्वविद्याविलासी

दासीभूतः मरारेर्विषयसुखमवे + + दासीनचेताः ।

मोदातीरे प्रमोदावलिवलितमने जन्मभाक् पुण्यभूमा-

दुमवेदी वेदवेदी जयति विजयते श्रीकवीन्द्रो यतीन्द्रः ॥

अधीत्य वेदवेदाङ्गकाव्यशास्त्राणि सर्व्वशः ।

ततः सौहत्य मन्त्रार्थं ब्रह्माभ्यासं समाश्रितः ॥

— — — — — — ।

तत्रादौ गणेशस्तोत्रं ।

सचिते विघ्ने यदीयस्मृतिं य-

त्सदैवातिविघ्नेशतामस्य पुंसः ।

प्रकामं प्रकामं दृतं विघ्ने

प्रमत्तेभतुण्डं समीडं तमीडे ॥ (?) इत्यादि ।

**End.** तस्याशामदूरीकृतमयामोचममवगतसप्तभूमिकामयारोचमचमद्दारामिकोच

। + + + नारायणेत्यष्टाक्षरमन्त्रपूर्व्वका नमस्काराः सन्ति ॥

**Colophon.** इति श्रीसर्व्वविद्यानिधानकवीन्द्राचार्य्यसरस्वतीविरचिते कवीन्द्रकल्पद्रुम प्राशाविकमदुपद्यद्गडकप्रशस्तिः ॥

**विषयः ।** गणेशस्तोत्रकीर्त्तनं । गङ्गास्तोत्रकथनं । यमुनास्तोत्रं । विमलास्तोत्रं । सूर्य्यस्तोत्रं । शिवस्तोत्रं । भवानीस्तोत्रं । नृसिंहरूपवर्णनं । श्रीकृष्णरूपवर्णनं । रामचन्द्ररूपवर्णनं । हनूमत्स्तोत्रं । प्राशाविकश्लोककथनं । शिवरामवर्णनं । पद्मावतम्मनपद्यकथनं । पवप्रशस्तिवर्णनञ्च ।

---

**No. 4029.** विमलोदयमाला । Substance, country-made paper, 9 × 4½ inches. Folia, 58. Lines, 11 on a page. Extent, 1,394 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Vimalodaya-málá.** An introduction to the Grihya Sútras of Áśvaláyana.

**Beginning.** प्रथमतः अग्निमम् ।

— — — — स्नाने स्वाचाकार प्रयोजयेत् ।

अग्न्यादिना तु मन्त्रेण पूर्व्वं होमसुयन्ति चि ॥

विषयेच तु कर्म्मणमिति व्रह्मविदां मत ।

भुञ्जयत्सु कृतं तेषु यथेष्टं भोजयेत् ततः ॥

प्रभूतं मन्त्रदेयं आद्याश्वमादौनि निश्चितं ।
आत्मा तु श्रावयेत् ब्रह्मान् सर्वा मधुमतीश्च यः ॥
अथग्निनीयमक् आथा आविमायाश्चि नथ ।
— — — — — ।
नान्दीश्राद्धमिथाचार्य्या स्मृत्युक्तिनिबन्धनं ॥
इति नान्दीश्राद्धप्रकरणं ।
अथापरेद्युः समाचारतो नान्दुभोजनादिकं
कृत्वा चानान्तमवस्त्रः सितकुसुमानुलेपनः । इत्यादि ।

**End.** तेनैव यथा पद्मम् गमयित्वा पूर्वपात्रनिनयनादिमेवं परिसमाप्य अन्वा-नीयं (?) अपन् पद्मनां मध्यं गच्छेत् ।

**Colophon.** इतो विमलोदयमालायां चतुर्थोऽध्यायः ईरितः ।

विषयः । आश्वलायनसूत्रस्य व्याख्यानमुखेन प्रयोगकथनम् ।

---

**No. 4030.** आश्वलायनप्रायश्चित्तप्रयोगः । Substance, country-made paper, 10 × 3½ inches. Folia, 16. Lines, 10 on a page. Extent, 3 0 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Áśvaláyana-práyaśchitta-prayoga.** Directions for the performance of sundry expiations according to the rules of Áśvaláyana.

**Beginning.** श्रीगणेशाय नमः ।

ॐ विध्यपराधे प्रायश्चित्तिः । विहितस्याकरणे अन्यथाकरणे च प्रायश्चित्तिः कर्त्तव्या । अपराधे सति तद्दर्शनया विहितमस्ति चेत् तदेव कर्त्तव्यं । नत्रास्ति चेत् व्याहृतिहोमः कार्य्यः । इत्यादि ।

**End.** स्मृतीतेनाज्येन सप्तहोतारं सप्तपदं होष्यामीति सङ्कल्प्य मन्त्रास्तूर्य्यो देवता सर्वप्रायश्चित्तमाचरणीये ।

**Colophon.** इत्याश्वलायनप्रायश्चित्तप्रयोगनिर्णयस्मकमोक्षोपनामा कृतः समाप्तिमगमत् ।

विषयः । आश्वलायनोक्तविधिना पितृपितृयज्ञादिलोपे प्रायश्चित्तविधिकथनम् ।

---

**No. 4031.** आधानपद्धतिः । Substance, country-made paper, 9 × 4 inches. Folia, 31. Lines, 8 on a page. Extent, 427 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**A'dhána-paddhati.** A guide to the performance of the *ádhána* rite according to A'pastamba. By Ananta Bhaṭṭa.

**Beginning.** श्रीगणेशाय नमः ।

अथाधानं । जातपुत्रकृष्णकेशावस्थः सभार्य्यः पितुर्ज्येष्ठस्य वा कृताधाने प्रयुक्ताधिकारप्रति-बन्धरहितोऽपि कश्चित् (?) आत्मसमारोपिताग्निर्भवेत् । उक्तलक्षणयजमानपूर्व्वककूष्माण्डहोमैरात्मानं पावयेत् । यस्तु पित्रादिपाकोपजीवी—इत्यादि ।

**End.** प्राणाय स्वाहेति प्रथमग्रासग्रहणं । अथारण्यविद्याग्रहणं भूर्भुवः स्वरिति हविरासादनं ।

यथाद्योत्तममन्त्रेण प्रकृत्यारम्भगोचरः ।
आपस्तम्बीयकल्पोक्तविधिः श्रीहरितुष्टये ॥

**Colophon.** इत्यग्न्यारम्भणीयप्रयोगः । इत्याधानपद्धतिः समाप्ता ।

विषयः । आपस्तम्बमतानुसारेण आधानकालविचारादिनिरूपणपूर्व्वकं तत्र तत्र प्रयोग-कथनम् ।

---

**No. 4032.** आग्रयणम् । Substance, country-made paper, 9 × 5 inches. Folia, 12. Lines, 10 on a page. Extent, 284 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**A'grayaṇa.** Directions for the performance of the *A'grayana* rite.

**Beginnihg.** श्रीगणेशाय नमः ।

अथाग्रयणम् । अथाग्रयणमिति कर्म्मनामधेयं । तत्र श्रुतिः । शतायुधाय शतवीर्य्याय शतोतये-भिमातिषाहे । शतंयो नः शंतमुवेद्योमः । इत्यादि ।

**End.** सपत्नं भोजयेत् सोमे ब्राह्मणानां शतं परं ।
चातुर्मास्ये तु चत्वारि शतान्यथ तुरायन इति ॥

संस्कार इत्यनेनाग्न्यारम्भदर्शपूर्णमासादितुरायणान्तेन सौत्रामणिपर्य्यन्तं । असामर्थ्ये तु ब्राह्मणं तर्पयेत वै । इत्याह कात्यायनः । अत्र कर्कोपाध्यायाः अग्निकाधिकमेकं भोजयेत् । अनेनैव न्यायेन सर्व्वत्र ज्ञेयमिति श्रीधरसूरिरित्यलम् ।

विषयः । आग्रयणस्वरूपनिरूपणं । तत्र नैत्याग्रयणं यवाग्रयणं श्यामाकाग्रयणञ्च त्रिधेति तस्य स्वरूपभेदादिकथनं । तत्र प्रभेद, कालनिरूपणं । अनुकल्पविधानकथनं । तदकरणे प्रत्यवा-यादिकथनं । दक्षिणादिनिरूपणं । पूर्णपात्रादिद्रव्यकथनं । ब्राह्मणभोजनसंख्यादिकथनञ्च ।

---

**No. 4033. मासिश्राद्धमानोपन्यासः।** Substance, country-made paper, 10 × 5 inches. Folia, 2. Lines, 12 on a page. Extent, 40 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Mási-śráddha-mánopanyása.** An introduction to directions on the performances of monthly śráddhas. By Maunamallári Dikshita.

**Beginning.** श्रीगणेशाय नमः।

अष्टकादिश्राद्धेषु मासिश्राद्धविधिः। सांवत्सरिकादिषु दर्शश्राद्धविधिः सर्व्वेषां। नामधेयोद्देशाल्लिङ्गानिर्द्देशाभ्यां प्रत्यक्षविधिमतिदेशस्य बलवत्त्वात्। इत्यादि।

**End.** तस्मान्न्यायानालोचनपूर्व्वकग्रन्थश्रद्धामात्रममादेयमिति सर्व्वतन्त्रस्वतन्त्रस्य परामर्शः।

**Colophon.** इति दीक्षितमौनिमल्लारिकृतो मासिश्राद्धमानोपन्यासः।

**विषयः।** श्राद्धातिदेशस्वरूपादिनिरूपणं। मासिश्राद्धकालादिनिरूपणञ्च।

---

**No. 4034. मासिश्राद्धविधिक्रमः, मासिश्राद्धप्रयोगश्च।** Substance, country-made paper, 10 × 4 inches. Folia, 14. Lines, 12 on a page. Extent, 236 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Mási-śráddha-vidhikrama or Másia-śráddha-prâyoga.** Directions for the performance of monthly S'ráddhas according to Ápastamba.

**Beginning.** नत्वा रामं गणेशानमापस्तम्बमुनिं तथा।

तत्सूत्रभाष्यकारादींस्तन्मार्गेण निबध्यते॥

सभाजा रघुनाथेन मासिश्राद्धविधिक्रमः।

यदत्र स्खलितं किञ्चिच्छोध्यं तद्बुधवैदिभिः॥

अपरपक्षे श्राद्धं कुर्वीत। इत्यादि।

**End.** प्राचीनावीतिना ...ः सर्व्व श्राद्धशेषं भुञ्जीतेति।

**Colophon.** इति सभाद्रव्यपतिभट्टरघुनाथाभिधानो मासिश्राद्धप्रयोगः समाप्तः।

**विषयः।** आपस्तम्बमतानुसारेण मासिश्राद्धविधिकथनं। तत्प्रयोगकथनञ्च।

---

**No. 4035** ब्रह्मचिन्तनिका । Substance, country-made paper, 10 × 4 inches. Folia, 3. Lines, 9 on a page. Extent, 45 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect

**Brahma-chintaniká** On meditation on the soul. By Sánkara Ácháryya.

**Beginning.** श्रीगुरुभ्यो नमः ।

ॐ अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चितो मुक्तो + + ध्यान्यथा भवेत् ॥
अहमेव परं ब्रह्म न चाहं ब्रह्मणः पृथक् ।
इत्येव समुपासीत ब्राह्मणो ब्रह्मणि स्थितः ॥ इत्यादि ।

**End.** नाहं देहो न मे देहः केवलोऽहं सनातनः ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन ॥

इति श्रुतेः ।

**Colophon.** इति श्रीमच्छङ्कराचार्य्यविरचिता ब्रह्मचिन्तनिका समाप्ता ।

विषयः । आत्मनोऽभिन्नत्वेन ब्रह्मचिन्तनप्रकारकथनम् ।

---

**No. 4036.** व्रते प्रधाननिरूपणम्, वा व्रते अन्वाधानम् । Substance, country-made paper, 11 × 4 inches. Folia, 4. Lines, 12 on a page. Extent, 102 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Vrata-pradhána-nirúpana.** On some of the principles of optional fasts or *vratas*.

**Beginning.** श्रीगणेशाय नमः ।

अथ व्रते अन्वाधानं । अनन्ततीप्रधानं । अनन्तर्तीं प्रतिद्रव्यं अष्टाविंशतिसंख्यया तिलपमिथा यक्ष्ये । मन्त्रः । पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते । अन्यांश्च सर्व्वकामांश्च देहि देवि नमोऽस्तु ते । इत्यादि ।

**End.** • श्वेतामौरीव्रते । मम कृत + + वन्ध्यादिदोषपरिहारार्थं — — — — — तामग्निवर्णां प्रतिद्रव्यं अष्टोत्तरशतसंख्यया दधिमधुक्षीरघृताक्ततिलैः ——————परं अर्चितम् ।

विषयः । अनन्तव्रत्यादिव्रतेषु प्रधानदेवतामन्त्रद्रव्यविधानकथनम् ।

---

**No. 4037.** ब्रह्मसूत्रसिद्धान्तमरीचिका, वा ब्रह्मसूत्रवृत्तिः। Substance, country-made paper, 12 × 5½ inches. Folia, 5. Lines, 12 on a page. Extent, 317 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose. Incorrect.

**Brahma-sútra-siddhánta-maríchiká, or Brahma-sútra-vṛitti.** Gloss, called *Marichiká*, on the aphorsims of the Vedánta. By Vanamáli.

**Beginning** श्रीहयग्रीवाय नमः।

सर्व्ववेदाभिधेयो यो हेयशून्यो गुणाश्रयः।
वाजिग्रीवः कृपाब्धिर्नः सोऽस्यादानन्दविग्रहः॥
श्रीमद्द्वैपायनं वन्दे मदर्द्दमनरिन्दमम्।
श्रीगुरुपादधूलीश्च +न्याम् मन्यहतः सतः॥
प्राचीनोक्तीः समालोच्य संक्षेपाद्वनमालिना।
श्रीब्रह्मसूत्रसिद्धान्तमरीचिका विरच्यते॥

ब्रह्मादिभिः प्रार्थितः संसारिणः सर्व्वजीवान् उद्दिधीर्षुर्भगवान् द्वापरादौ वेदान् विभज्य तदर्थ-निर्णायकब्रह्मसूत्राणि चकार। तत्रादौ सर्व्वशास्त्रविचारविधिमसूत्रयत्। अथातो ब्रह्मजिज्ञासा। अत्र वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रमारम्भणीयं न वेति चिन्तायां नारम्भणीयमिति।

**End.** ब्रह्मलोकमभिसंपद्यन्ते इति श्रुतेः।

श्रीगोविन्दविहारभूषितभुवो वृन्दावन+++
सिद्धो+नाक्प्रिमुखे+ + + +विप्राभरद्वाजजाः।
श्रीसम्राचमुखो वसन्ति सुकुले तेषां सुगतेन वै
वर्णिश्रीवनमालिना श्रुतिमये वृत्तिः समाप्ता कृता॥
— — — — — — ।
भगवतो+कृष्णस्य श्रीगोपालस्य देवयः।
क्रियात्तुष्टिमनस्त्राकमानन्दानाश्च संविदाम्॥

**Colophon.** इति श्रीवनमालिविरचितायां ब्रह्मसूत्रे मरीचिकायां वृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः।

विषयः। परमैश्वर्य्यवाचकवासुदेवभगवद्ब्रह्मशब्दानामेकार्थकत्वनिरूपणपूर्व्वकं हरिप्रसाद-स्यैव मोक्षहेतुत्वमोक्ता ब्रह्मसूत्राणां गुरुपूर्णिवादनिर्णयपरतया व्याख्यानम्। अतेऽस्मिन् मोक्षद-शायां कीटभृङ्गन्यायेन जीवानां ब्रह्मभावप्राप्तिर्जीर्णत्वम्।

**No. 4038.** दशवैकालिकशब्दार्थवृत्तिः। Substance, foolscap paper, 10 × 5 inches. Folia, 27. Lines, 20 on a page. Extent, 2,730 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, new. Prose and verse. Sanskrit.

**Daśavaikálika-śabdártha-vṛitti** Gloss on the Jain treatise called *Daśavaikálika.* By Samayasundara Gaṇi.

**Beginning.** स्तम्भनाधीशमानम्य गणिः समयसुन्दरः ।
दशवैकालिके सूत्रे शब्दार्थं लिखति स्फुटं ॥

धम्मो मंगलमित्यादिव्याख्या । धर्म्मो दुर्गतिप्रपतज्जन्तुधारणलक्षणः । उत्कृष्टं प्रधान मङ्गलं वर्त्तते । कौ धर्म्म इत्याह । अहिंसा न हिंसा । इत्यादि ।

**End.** मुच्यते विमुच्यते श्रवीमोति पूर्व्ववत् । इति चूलिकाद्वयं व्याख्यातं । अथ प्रशस्ति. ।

हरिभद्रकृता टीका वर्त्तते विषमा परं ।
मया तु शीघ्रबोधाय शिष्यार्थं सुगमा कृता ॥
चान्द्रकुले श्रीखरतरगच्छे जिनचन्द्रसूरिनामानः ।
जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः ॥
तच्छिष्यसमयसुन्दरगणिना चक्रे च स्तम्भतीर्थपुरि ।
दशवैकालिकटीका शशिनिधिशृङ्गारमितवर्षे ॥
अर्थस्यानवबोधेन मतिमन्द्यो(मान्द्या)न्मतिभ्रमात् ।
जिनाज्ञाविपरीतं यन्मिथ्यादुष्कृतं मम ॥
ममोपरि कृपां कृत्वा शोधयन्तु बुधा इमां ।
परोपकरणे यस्मात्तत्परा उत्तमा नराः ॥
टीकाकरणतः पुण्यं यन्मयोपार्ज्जितं भवेत् ।
तेनाहमिदमिच्छामि बोधिरस्तु परत्र मे ॥
शब्दार्थवृत्तिटीकायाः श्लोकमानमिदं स्मृतं ।
सप्तसप्तमे + + पुनः सार्द्धचतुःशती ॥

**Colophon.** इति श्रीदशवैकालिकशब्दार्थवृत्तिः श्रीसमयसुन्दरविरचिता समाप्ता ।

**विषयः ।** जैनदशवैकालिकसूत्रस्य व्याख्यानम् ।

---

**No. 4039. ब्रह्मप्रयोगः ।** Substance, country-made paper, 11 × 5 inches. Folium, 1. Lines, 24. Extent, 30 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Brahma-prayoga.** On the proper places of the officiating priests around a fire sacrifice, being a guide to the Brahma priest.

**Beginning.** श्रीगणेशाय नमः ।

प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य समसपाण्यङ्गुष्ठाग्रेणाहवनीयं परीत्य दक्षिणत आहवनीयस्य ब्रह्मसदनात् तृणं । इत्यादि ।

**End.** यत्र न्यूनं तस्मै त उपयत्तोऽतिरिक्तं । तस्मै ते नमः । संस्थाजपे नोपस्थानि + मेत् ॥

**Colophon** इति ब्रह्मप्रयोगः समाप्तः ।

विषयः । आहवनीयस्य दक्षिणतो ब्रह्मोपवेशनादिविधिकथनम् ।

---

**No. 4040. मानसपूजा, वा अव्यक्तमूर्त्तिमानसपूजनम् ।** Substance, country-made paper, 10 × 3 inches Folium, 1. Lines, 12. Extent, 12 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Mánasa-pújá, or Avyakta-múrti-mánasa-pújana.** On mental worship or worship without the aid of material objects. By Sankara Ácharya.

**Beginning.** अथ मानसपूजा ।

पूर्णस्यावाहनं कुत्र सर्व्वाधारस्य चासनं ।
स्वच्छस्य पाद्यमर्घ्यञ्च शुद्धस्याचमनं कुतः ॥
निर्म्मलस्य कुतः स्नानं वासो विश्वोदरस्य च ।
निरालम्बस्योपवीतं रम्यस्याभरणं कुतः ॥
निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च ।
सुगन्धस्य कुतो धूपः स्वप्रकाशस्य दीपनं ॥ इत्यादि ।

**End.** अध्यात्मपूजनस्तोत्रं यः पठेत् सततं नरः ।
पदार्थपूजनात् पुण्यमनन्तं लभते ध्रुवम् ॥

**Colophon.** इति श्रीमच्छङ्कराचार्य्यविरचितं अव्यक्तमूर्त्तिमानसपूजनम् ।

विषयः । नित्यशुद्धबुद्धस्वप्रकाशस्य शिवस्य पदार्थोपचारपूजनाद्ध्यात्मपूजनमेव श्रेय इति निरूपणमुखेन अध्यात्मपूजाविधिकथनम् ।

---

**No. 4041.** दण्डलक्षणविधिः, वा दण्डपद्धतिः । Substance, country-made paper, 11 × 5 inches. Folia, 6. Lines, 9 on a page. Extent, 84 ślokas. Character, Nágara. Date, Sk. 1750. Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Daṇḍa-lakshaṇa-vidhi, or Daṇḍa-paddhati.** Directions for the adoption of the religious staff by a Hermit.

**Beginning.** श्रीगणेशाय नमः ।

अथ दण्डलक्षणविधिः ।

धारयेद्वैणवं दण्डं न स्थूलं न कृशं तथा ।

तस्य चाग्रे च मूले च ग्रन्थिं त्यक्त्वा तु धारयेत् ॥

द्विचत्वारिंशदष्टौ वा द्वादशाङ्गुलानि + + + + ।

न न्यूनं नातिरिक्तं वा द्विगुणं मूलतोऽग्रके ॥ इत्यादि ।

**End.** मनो वाक्कायदण्डश्च वञ्चदके ग्रपि स्मृतम् ।

एकश्च ज्ञानदण्डश्च सं + ऽपि गृह्यते बुधैः ॥

**Colophon.** इति दण्डपद्धतिः समाप्ता । शकाब्दाः १७५० ।

विषयः । दण्डलक्षणविधिकथनं । तत्र वैणवदण्डपरिमाणादिकथनं । अथ ब्रह्मचर्य्याश्रमप्रख्यादौ पालाशबिल्वादिदण्डविधानकथनं । दण्डलक्षणकथनं । ज्ञानदण्डादिस्वरूपकथनञ्च ।

---

**No. 4042.** धर्म्मार्णवः । Substance, country-made paper, 10 × 4 inches. Folia, 4. Lines, 11 on a page. Extent, 140 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Dharmárṇava.** The ceremonial reading of the Chaṇḍi for nine days. Anonymous.

**Beginning.** पितरौ श्रीगुरुं नत्वा नत्वा बुद्धिं विनायकम् ।

प्रतिपन्निर्णयं वक्ष्ये चण्डीस्थापनकर्म्मणि ॥

अथ नवचण्डीविधिमुक्तमभिधमाणो नवचण्डीस्थापनारम्भतमादौ प्रतिपन्निर्णयमाह ।

**End.** आह आह । नवमी स्वल्पमात्रापि यदि न स्यात्परेऽहनि । तदाष्टमीयुतायां वै कार्य्यं होमादिकञ्च यत् । देवलाच । उदयव्यापिनी किञ्चिन्नवमी दृश्यते यदि ।

Colophon. ( अतः परं खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति ) ।

विषयः । नवरात्रपूजायां प्रतिपदादितिथिविवेचनम् ।

---

No. 4043. ब्रह्मैक्यप्रकरणं स्तोत्रम् । Substance, country-made paper, 10 × 4 inches. Folia, 2. Lines, 7 on a page. Extent, 14 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Brahmaikya-prakarana-stotra.** The identification of Brahma and Jíva. A hymn. By S'ankara Ácharya.

**Beginning.** श्रीगणेशाय नमः ।

सदहं सदहं वस्तु सदहं नात्र संशयः ।
अहमस्मि भवेत्येवं न मच्चिन्तकश्चन ॥
चिदेवाहं चिदेवाहं चिदेवाहं न संशयः ।
जाग्रत्स्वप्नसुषुप्त्यादि जानीयात् कथमन्यथा ॥ इत्यादि ।

**End.** इति ब्रह्मैक्यदर्शिं यो नित्यमावर्त्तयेद्बुधः ।
स्तोऽपि श्वपचागारे ब्रह्मनिर्वाणमृच्छति ॥
ब्रह्मनिर्व्वाणमृच्छत्योमिति ।

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्कराचार्य्यविरचितं ब्रह्मैक्यप्रकरणं स्तोत्रं सम्पूर्णम् ।

विषयः । ब्रह्मजीवयोरभेद एव चिन्तनीय इति कथनपूर्वकं तन्माहात्म्यकथनम् ।

---

No. 4044. भैरवदीपदानविधिः । Substance, country-made paper, 10 × 5 inches. Folium, 1. Lines, 20. Extent, 22 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Bhairava-dípadána-vidhi** The offerings of burning lamps to Vatukbhairava. An extract from the Bhairavatantra

**Beginning.** श्रीभैरवाय नमः ।

अथातः संप्रवक्ष्यामि वटुकस्य वरानने ।
दीपदानं सर्वकार्य्यसाधनं प्रत्ययावहम् ॥
चतुरस्रां भुवं सम्यक् प्रकल्प्य सुरवन्दिते ।

गोमयेनोपलिप्याथ मण्डलं रचयेत् ततः ॥ इत्यादि ।

End. अयं दीपविधिः प्रोक्तो वटुकस्य तथानघ ।
गोपनीयः प्रयत्नेन सत्यं सत्यं वचो मम ॥

Colophon. इति भैरवीतन्त्रे भैरवदीपदानविधिः ।

विषयः । वटुकभैरवाय प्रदीपदानविधिकथनं तत्फलकीर्त्तनञ्च ।

---

**No. 4045.** बालग्रहस्तवः । Substance, country-made paper, 11 × 5 inches. Folia, 3. Lines, 10 on a page. Extent, 63 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Bálagraha-stava.** A hymn for the pacification of adverse planets, for the cure of infantile diseases.

Beginning. श्रीगणेशाय नमः ।

अथ बालग्रहस्तवः । प्रयोगसारे ।

प्रणम्य शिरसा शान्तं गणेशानन्तमीश्वरम् ।
बालग्रहस्तवं वक्ष्ये समस्ताभ्युदयप्रदम् ॥
तपसा यशसा दीप्त्या वपुषा प्रक्रमेण च ।
निर्दिष्टः सदृशः स्कन्दः स नो देवः प्रसीदतु ॥
रक्तमाल्याम्बरधरः रक्तगन्धानुलेपनः ।
रक्तादित्योज्ज्वलः शान्तः स नो देवः प्रसीदतु ॥ इत्यादि ।

End. दिव्यं स्तोत्रमिदं पुण्यं बालरक्षाधिकारकम् ।
अपमृत्युनिवारणार्थं बालग्रहोपशान्तये ॥

Colophon. इति बालग्रहस्तवः समाप्तः ।

विषयः । बालग्रहशान्तिकारकस्तुतिकथनम् ।

---

**No. 4046** अङ्गिराकल्पः, वा (अङ्गिरःकल्पः) । Substance, country-made paper, 10 × 4 inches. Folia, 30. Lines, 13 on a page. Extent, 828 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Aṅgirá-kalpa or Aṅgirah-kalpa.** A conversation between Angira and Pippaláda on diverse occult rites.

Beginning. श्रीदुर्गायै सकलसिद्धिदायै नमः ।
दक्षिणामूर्त्तिरूपाय श्रीमभक्तीश्वराय नमः ।
मन्त्र चाङ्गिरसा मन्त्रा बहवः परिकीर्त्तिताः ॥
तत्रासुरीमहामन्त्रो मुख्योऽयं सर्वकर्मसु ॥
पुरा हिरण्यगर्भेण उपदिष्टः स्वयं मम ।
अङ्गिरा ऋषिरदिष्टस्त्वनुष्टुप्छन्द उदाहृतं ॥
संहारिणी च शक्तिर्या आसुरी देवता मता ॥ इत्यादि ।

End. नानापिष्टकमन्नञ्च मोदकं दधिदुग्धकं ।
पर्पटी घृतमूली च यथाविभवविस्तरात् ॥
पूजान् सम्भृत्य सम्भारान् कृत्वा होममनङ्गितः ।
श्रीदुर्गा संप्रसन्ना स्यात् सर्वकर्मार्थसिद्धये ॥

Colophon. इत्यङ्गिराकल्पे अङ्गिरःपिप्पलादसंवादे कल्पः समाप्तः ।

विषयः । पिप्पलादेन सह अङ्गिरसः संवादेन आसुरीमहामन्त्रनिरूपणादिकं । आसुरीमहामन्त्रस्य अर्थादिकथनं । तन्मन्त्रोद्धारादिविधिकथनं । कुण्डादिलक्षणकथनं । तन्मन्त्रप्रयोगादिविधिकथनं । आत्मपूजाविधिकथनं । आसुरीमहामन्त्रमाहात्म्यादिकथनं । अथ अनिष्टशकुनेऽपि तन्मन्त्रमाहात्म्यादिष्टसिद्धिर्भवतीतिकथनं । होमसामान्यविधिकथनं । भावनाषट्कनिरूपणं । मन्त्रयन्त्रविधिकथनं । अथ शत्रुवशविधिकथनं । विद्वेषणविधिकथनं । मारणादिविधिकथनं । शूद्रादिवशीकरणविधिकथनं । सम्भारविधिकथनञ्च ।

---

No. 4047. अवधूतगीता । Substance, country-made paper, 10 × 4 inches. Folia, 7. Lines, 9 on a page. Extent, 161 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Correct.

**Avadhúta-gítá** A dissertation on the unconditioned.

Beginning श्रीगणेशाय नमः । ॐ ।
अवधूतं द्विजं कश्चिच्चरन्तमकुतोभयं ।
कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥
यदुरुवाच ।
कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ।
यामासाद्य भवांल्लोकं विद्वांश्चरति बालवत् ॥

प्रायो धर्म्मार्थकामेषु विविक्तायाम्न मानवाः ।
चेतुनैव समीचन्ते चायुषो यशसः श्रियः ॥ इत्यादि ।

**End.** लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थदमपीह + नित्यधीरः ।
तूर्णं यतेत न पतेदनुमृत्यु याव-
न्निश्रेयसाय विषयः खलु सर्व्वतः स्यात् ॥

विषयः । केनचिदवधूतेन सह यदोः संवादेन विवेकोदयकारणादिकथनं । तत्र भूमिपवनाकाशजलाग्निचन्द्रसूर्य्यकपोताजगरसिन्धुपतङ्गमधुकरादिभ्यो धैर्य्यसहिष्णुतादिशिक्षाविधिकथनं । पिङ्गलोपाख्यानकथनञ्च ।

---

**No. 4048.** यतिवल्लभा । Substance, country-made paper, 10 × 5 inches. Folia, 28. Lines, 10 on a page. Extent, 723 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Generally correct.

**Yativallabhá.** On the proper duty of Yatis.

**Beginning.** हरिचरणसरोजं मानसे भावयित्वा
परमममलमेनदर्थिभाव्यं विभाव्य ।
भवजलनिधिमग्नं विप्रहृन्दं विलोक्य
सदयमिह समर्थं ग्रन्थमेतं करोमि ॥
आश्रमस्य तुरीयस्य शुद्धिहेतोर्द्विजन्मनां ।
क्रियते पद्धतिर्नूनं सदयं विश्वकर्म्मणा ॥

तत्र भारते । चतुर्विधा भिक्षवस्तु कुटीचकबहूदकौ । आद्यानि चौचपाक्षत्य मनो मोक्षे निवेशयेत् । श्वनपाक्षत्य मोक्षन्तु सेवमानः पतत्यधः ॥ इत्यादि ।

**End.** विधानमाम्नायामपि वचनान्युदाहृत्य मध्ये प्रदर्शितमस्तीत्यधिकजिज्ञासायां तत्रैव द्रष्टव्यमिति संक्षेपः ।

इति अतयतिसंस्कारविचारः ।
यतीनामुपकाराय परितोषाय चात्मनः ।
विश्वकर्म्माकरोद्रम्यां पद्धतिं यतिवल्लभां ॥
यावद्गङ्गाद्यो भवो यावत्सूर्य्यश्च चन्द्रमाः ।
तावत्स्थास्यतीयं श्रीवादिविश्वकर्म्मकवेः कृतिः ॥

**Colophon.** इति यतिवल्लभा पद्धतिः ।

विषयः । सन्न्यासविधिकथनं । तत्र सन्न्यासाधिकारनिरूपणं । सन्न्यासदीक्षाधिकारनिरूपणं । सन्न्यासग्रहणयोग्यतिथ्यादिनिरूपणं । तत्र प्रयोगकथनं । विरजाहोमादिविधिकथनं । दण्डग्रहणादिकथनं । सन्न्यासवेषविधानकथनं । तीर्थाश्रमवनादिनामकरणविधिकथनं । अवभृतस्नानादिविधिकथनं । तत्र आहिताग्नेः सन्न्यासग्रहणे विशेषकथनं । प्रैषोच्चारप्रकारकथनं । अथ कुटीचकबहूदकहंसपरमहंसभेदात् सन्न्यासिनां चातुर्विध्यकथनं । आतुरसन्न्यासविधिकथनं । अथ योगपट्टविधिकथनं । अथ यतिधर्मकथनञ्च ।

---

**No. 4049.** अवतारस्तवराजः। Substance, country-made paper, 12 × 4 inches. Folium, 1. Lines, 12. Extent, 11 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Avatára-stavarája.** A hymn to Vishnu, praising his ten incarnations. An extract from the Skanda-purana.

**Beginning.** श्रीहरिर्जयति ।

प्रथमं मीनरूपेण प्रविष्टो जलसागरे ।
वेदमुद्धारणं (?) येन स देवः शरणं मम ॥
द्वितीये कूर्मरूपेण मन्दारो धार्य्यते गिरिः ।
समुद्रमन्थने येन स देवः शरणं मम ॥ इत्यादि ।

**End.** दशमे कलियुगस्यान्ते कल्किरूपोऽभवत् + + ।
स्लेच्छदर्पविनाशाय स देवः शरणं मम ॥

**Colophon.** इति स्कन्दपुराणे ब्रह्मनारदसंवादे श्रीविष्णोरवतारस्तवराजः समाप्तः ।

विषयः । मत्स्यादिदशावतारस्तुतिकथनम् ।

---

**No. 4050.** आगमसारसङ्ग्रहः। Substance, country-made yellow paper, 17 × 4 inches. Folia, 5. Lines, 10 on a page. Extent, 167 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**A'gama-sára-sangraha.** A summary of the principal tenets and duties enjoined in the A'gamas. By Jogendra.

**Beginning.** नत्वा गुरुपदद्वन्द्वं योगेन्द्रेण च धीमता ।
नानातन्त्रानुसारेण कृता तत्त्वतरङ्गिणी ॥
साधूनां मतमाश्रित्य कृत्वा चर्व्वितचर्व्वणं ।
गुरुपादप्रसादेन साधकानां हिताय वै ॥ इत्यादि ।

**End.** देवान् गुरून् समभ्यर्च्य वेदशास्त्रोक्तवर्त्मना ।
जानतो भैरवीचक्रे ज्ञानिनां नैव दूषणं ॥

**Colophon.** इति योगेन्द्रप्रकाशिते आगमसारसङ्ग्रहे तत्त्वनिरूपणे तत्त्वतरङ्गिणी नाम द्वितीयोल्लासः समाप्तः ।

विषयः । सदाशिवस्य निर्गुणत्वादिकथनं । बिन्दुस्वरूपादिकथनं । सत्त्वादिगुणत्रयाणां दुर्गायाः सगुणत्वादिकथनं । जीवध्यानप्रकारकथनं । शक्तिस्वरूपादिकथनं । श्रीकृष्णादीनां प्रकृतिमयत्व-कथनं । कुलशास्त्रमाहात्म्यकथनं । कुलविन्यासस्वरूपादिकथनं । कौलिकप्रशंसादिकथनञ्च ।

---

**No. 4051.** आपूर्व्विकविधिः । Substance, country-made paper, 11 × 3 inches. Folia, 6. Lines, 11 on a page. Extent, 152 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

. **A'púrvika-vidhi** The preliminary duties of installing a sacred. fire. Anonymous.

**Beginning.** अथ शुचौ समे देशे अग्न्यायतनदेशं शकलेन त्रिः प्राचीनमुल्लिखेत् । त्रिरुदीचीनमथाद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृश्य यज्ञीयात् काष्ठादग्निं मथित्वा श्रोत्रि-यागाराद्वा आहृत्येति । इत्यादि ।

**End.** पार्श्वे तु समा आहुः केचित् प्रत्यक्परोक्षते ।
पुनः स्मृत्या परेणैव प्रद+सत् प्रपञ्चनं ॥

**Colophon.** इत्यापूर्विकविधिः समाप्तः ।

विषयः । दर्श्वहोमादौ प्रकृतिनिरूपणादिकं । आधारप्रकृत्यादिनिरूपणञ्च ।

---

**No. 4052.** भक्तिमार्गमर्य्यादा । Substance, country-made paper, 16 × 4 inches. Folia, 4. Lines, 9 on a page. Extent, 83 slokas. Character, Nágara. Date, ? Place of deposit, Mirahâṭa, Zillá Vardhamána; Chandranátha Chúḍámaṇi. Appearance, fresh. Prose and verse. Incorrect.

**Bhaktimárga-maryádá.** The pre-eminence of the cult of faith. By Viṭṭhala, son of Ballabha. It attempts to prove that the Bhagavadgítá considers *Bhakti* to be the principal means of obtaining emancipation.

**Beginning.** पितृपादाब्जयुगलं प्रणमामि कृपामधु ।
यत्कृतं गोकुलेशेन स्वीकृतं कृपया स्वतः ॥
अतस्तद्वदनाम्भोजच्युतगीतामृताम्बुधेः ।
आविर्भावहेतुमीमांसानुपपत्त्यादिस्वरूपाश्रयं ॥
स्वयं स्वतत्त्वं हि हरिः पार्थायोपदिशत्यतः ।
तदादौ धृतराष्ट्रस्याभक्तस्य वचसा न हि ॥
उपक्रमो युक्ततरस्तत्पुत्रस्यापि वा कथा ।
पार्थस्यापि विषादोऽयमतद्रूपत्वतो न हि ॥
— — — — — — ।
अनाधिकाराभावस्य ज्ञापकत्वाच्च लौकिकी कथा युक्ता । इत्यादि ।

**End.** तदुत्पत्तिवपदेशेन च तन्निष्ठितिरिति ।
इति श्रीपितृपादाब्जदासेन निज + + ना ।
भक्तिमार्गस्य मर्य्यादा निरुक्ता विट्ठलेन वै ॥

**Colophon** इति श्रीविट्ठलकृता भक्तिमार्गमर्य्यादा समाप्ता ।

विषयः । भगवद्गीतायां भक्तिरेव मुख्यत्वेन निरूपितेति निरूपणम् ।

---

**No. 4053.** सन्न्यासवरणम् । Substance, country-made paper, 14 × 3½ inches. Folia, 6. Lines, 8 on a page. Extent, 72 ślokas. Character, Nágara. Date, ? Place of deposit, Mirahâṭa, Zillá Vardhamána, Chandranátha Chúḍámani. Appearance, fresh. Verse. Incorrect.

**Sannyása-varaṇa.** It treats of the mode of renouncing the world in order to devote one's self to the service of his God. By Vallabháchárya.

**Beginning.** पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्य्यते ।
स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥
कर्ममार्गे न कर्त्तव्यः सुतरां कलिकालतः ।
अत आदौ भक्तिमार्गे कर्त्तव्यत्वाद्विचारणा ॥

अयथादिप्रसिद्ध्यर्थं कर्मबन्धः स नेष्यते ।
सन्न्यासस्य प्रसाध्यत्वात् साधनानाञ्च रक्षणात् ॥ इत्यादि ।

End. तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।
अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥

Colophon. इति कृष्णप्रसादेन वल्लभेन विनिश्चितं ।
सन्न्यासवरणं भक्तावन्यथा पतितो भवेत् ॥
समाप्तोऽयं ग्रन्थः । संवत् १८८१ ।

विषयः । भक्त्युपयोगिसन्न्यासविधिनिरूपणम् ।

---

**No. 4054.** **सिद्धान्तमुक्तावली, व्याख्यासहिता ।** Substance, country-made paper, 12 × 4 inches. Folia, 12. Lines, 8 on a page. Extent, 308 ślokas. Character, Nágara. Date, ? Place of deposit, Mírháṭa, Zillá Varddhamána, Chandranátha Chúḍámaṇi. Appearance, fresh. Text, verse. Commentary, prose. Incorrect.

**Siddhánta-Muktávalí. Vyákhyá-shahitá** By Vallabhácharhya with a commentary by his son Viṭṭhaleśvara Díkshita. Both the father and son were Vaishnavas. They advocate that the worship of Kṛishṇa was to them the only way to salvation and mental worship, preferable to any other mode of worship. Devotion to Kṛishṇa is superior to the knowledge of truth in leading one to emancipation.

**Beginning.** व्याख्यायाः ।

प्रणम्य पितृपादाब्जपरागमनुरागतः ।
कृपया वितदीकुर्म्मस्तद्वाङ्मुक्ताफलावलीम् ॥

नत्वा हरिं प्रवक्ष्यामि स्वसिद्धान्तमिति । अथ वक्ष्यमाणैर्बहुभिर्मिथो विरुद्धैः सिद्धान्तैः शास्त्रार्थ सन्देहे तन्निरासया स्वसिद्धान्तरूपं शास्त्रार्थनिश्चयं वक्ष्यामीत्यर्थः । इत्यादि ।

मूलस्य,—
नत्वा हरिं प्रवक्ष्यामि स्वसिद्धान्तविनिश्चयं ।
कृष्णसेवा सदा कार्य्या मानसी सा परा मता ॥ इत्यादि ।

**End.** मूलस्य,—
भक्त्यभावे + + + + यथा दुष्टैः स्वकर्मभिः ।
अन्यस्याभावमापन्नास्वस्मात् स्वाचार्य्यं नमति ॥

व्याख्यायाः,—

अन्यथा संशयात्मा विनश्यतीति बुद्धिरन्यथा भवेदित्यर्थः ।

इति श्रीपिष्टपादाब्जपरागरसमिश्रकृत् ।

एवं स्वशास्त्रं सर्व्वस्वं मया गुप्तं निरूपितं ।

एतद्बुद्ध्वा विमुच्येत पुरुषः सर्व्वसंशयात् ॥

श्रीविट्ठलसतसिद्धान्तवाक्यमालां हृदये दधौ ॥

**Colophon.** इति श्रीवल्लभाचार्य्यविरचिता सिद्धान्तमुक्तावली समाप्ता ।

**विषयः ।** ज्ञानमार्गादपि भक्तिमार्गस्य श्रेष्ठत्वनिरूपणपूर्व्वकं भगवद्भक्तिमाहात्म्यकीर्त्तनम् ॥

---

**No. 4055.** स्मृतिदुर्गभञ्जनम् । Substance, country-made paper, 14 × 3½ inches. Folia, 68. Lines, 7 on a page. Extent, 2,380 slokas. Character, Bengali. Place of deposit, Pántá, Zillá Varddhamána, Akshayachandra Bhaṭṭácbárya. Appearance, fresh. Prose and verse. Correct.

**Smṛiti-durga-bhanjana.** By Chandraśekhara S'armá, a Várendra Bráhmaṇa who settled at Navadvípa. The work treats of the titles of the S'ráddha ceremonies and of the way of resolving to perform particular ceremonies. The title of the work breathes a martial spirit on the author, for it means the storming of the fortress of the Smṛiti.

**Beginning.** भजत भजत कृष्णं गोपनारीसतृष्णं

निखिलभुवनवन्द्यं नन्दगोपाभिनन्द्यं ।

सुकृतिहृदयरम्यं प्रेमभक्त्येकगम्यं

सकलललितगेहं सच्चिदानन्ददेहं ॥

— — — — — ।

सदानन्दमयीं स्मृत्वा चन्द्रशेखरशर्म्मणा ।

वारेन्द्रान्वयसम्भूतनवद्वीपनिवासिना ॥

श्रीकृष्णप्रीतये गूढशास्त्रार्थव्याभिसन्धितः ।

स्मृतीनां क्रियते दुर्गभञ्जनं बुधरञ्जनम् ॥

अथ तिथिदुर्गभञ्जनं । तत्र राशिचक्रचरसूर्य्यावधिकत्वाश्रयविप्रकर्षप्रयोजकताश्रयचन्द्रक्रिया तिथिः । तथा हि राशिं परिभ्रमतोश्चन्द्रयोजनाकारितोपर्य्यधोभावापन्नयोः सूर्य्याचन्द्रमसोरमावास्यान्तचरे समसूत्रपातन्यायेन राश्येकावच्छेदेन सहावस्थानरूपः परसन्निकर्षो भवति । इत्यादि ।

End. नैमित्तिकादीनीति इत्यत्रत्येन प्रतिप्रसवादिति सार्वैः समाश्रितत्व साधु सुस्थत्वे। इति सर्व्वमनाकुलमिति ।

Colophon. इति वारेन्द्रकुलसम्भूतनवद्वीपनिवासिश्रीचन्द्रशेखरशर्म्मविरचिते स्मृतिदुर्गभञ्जने सङ्कल्पादिदुर्गभञ्जनं ।

विषयः। तिथिश्राद्धसङ्कल्पादिस्वरूपविवेचनपूर्व्वकं तत्र तत्र व्यवस्थादिनिरूपणम् ।

---

**No. 4056. नवरत्नम् सटीकम् ।** Substance, country-made paper 14 × 4 inches. Folia, 6. Lines, 8 on a page. Extent, 126 ślokas. Character, Nágara. Dáte, ? Place of deposit, Mírahâṭa, Zillá Varddhamána, Chandra nátha Chúḍámaṇi. Appearance, fresh. Text, verse. Commentary, prose. Incorrect.

**Nava-ratna. Prakáśa-sahita.** The only means of obtaining Bhagaván is by throwing one's self at his feet. The name of the author is not known. The commentator is Viṭṭhala Dikshita. The substance is that those who surrender themselves unconditionally to God are the only persons who have a right to worship Him.

H. P. S.

**Beginning.** मूलस्य,—

चिन्तासन्तानहन्तारो यत्पदाम्बुजरेणवः ।
स्वीयानां तान्निजाचार्य्यान् प्रणमामि मुहुर्मुहुः ॥

टीकायाः,—ननु भगवदीयानां कथं चिन्तोद्भवः । इत्यमात्मनिवेदिनो हि भगवद्भजनादेः नेतरे । तत्र वैदिकपारलौकिकयोरर्थयोर्नावशिष्टं किञ्चिदसमर्पितं । एवं सति इत्यादिनिर्णयः केन कार्य्यः । इत्यादि ।

**End.** मूलस्य,—

तस्मात् सर्व्वात्मना नित्यं श्रीकृष्णः शरणं मम ।
वदद्भिरेवं सततं स्थेयमित्येव मे मतिः ॥

टीकायाः,—

यद्दास्यस्यैव मोक्षान्ताः पुमर्था वशवर्त्तिनः ।
स कोऽपि विठ्ठपादाब्जरेणुर्मह्यं प्रसीदतु ॥

**Colophon.** इति श्रीविट्ठलेश्वरदीक्षितविरचितो नवरत्नप्रकाशः समाप्तः ।

विषयः। आत्मनिवेदनमेव भगवत्प्राप्त्युपाय इति निरूपणम् ।

---

**No. 4057.** कृष्णभक्तिसुधार्णवः। Substance, country-made paper, 19 x 3½ inches Folia, 186. Lines, 6 on a page. Extent, 5,826 slokas. Character, Bengali. Date, ? Place of deposit, Sántipúra, Rámanátha Tarkaratna. Appearance, fresh. Prose and verse. Incorrect.

**Krishṇa-bhaktí-sudhárṇava.** By Rádhámohana Gosvámí, of S'ántipura. Contains short disquisitions on the nature of *Jnána*, *Vairágya*, *Prema-bhakti* &c. It contains an enumeration of the Vaishṇava rites for each month of the year. It also contains various interesting information about Vaishṇava religious ceremonies and Vaishṇava doctrines. The fast observed on the eleventh day of the moon is one of the principal topics treated of in this work.

H. P. S.

**Beginning.** वन्दे राधासुखाम्भोजमधुसम्भोगलम्पटं ।
गोविन्दं परमानन्दं वृन्दाकाननमायकं ॥
श्रीकृष्णचैतन्यपादाब्जबन्दितासवसद्रसः ।
समर्पयतु संसारतप्तचेतोमधुव्रतं ॥
नानादुःखदवार्दितान् भवमहारण्यान्तरस्थायिनः
सम्मूढान् कलिकालजालविवशानालोक्य लोकान् हरिः ।
आविर्भूय सरागभक्तिसुधया सिञ्चन् समाजीवय-
न्नानद्वैतसमाह्वयान् विलसितः पायादपायात्स नः ॥
नित्यानन्दमनन्तांशं करुणापारसागरं ।
नमामि परमानन्दौ तथा वैष्णवमण्डलीं ।
राधामोहनशर्म्माविष्कृतोऽयं मधुरोत्तरः (?) ।
आनन्दयतु भक्तान् श्रीकृष्णभक्तिसुधार्णवः ।

अथ एव कर्म्मचितो लोकः क्षीयतेऽमुत्र पुण्यचितो लोकः क्षीयत इत्यादि श्रुत्या । सुखमैन्द्रियकं स्वर्गे नरक एव वा । इत्यादि ।

**End.** तदत्रिक्रमे पुण्यपुनर्व्यवसाने दिगियं प्रदर्शितेति श्रीकृष्णभक्तिसुधार्णवे नैमित्तिकविवरणं नामोत्तरविभागः ।

**Colophon.** श्रीकृष्णभावनमधुराधनलोभशिखा-
संप्रेरितेन विहतं किल मोहनेन ।
एतच्च साधुतमतं खमतिप्रचार-
मर्य्यादमुत्सुकधिया रचितप्रबन्धं ॥

यथोक्तमथ विपरीतमपक्वबुद्ध्या
दीनानुकम्पिसदुदारमतिप्रवीणैः ।
तच्छोधनीयमुररीकृतकृष्णभावै-
र्यैरिदं सविनयं विनिवेदितं मे ॥
समाप्तोऽयं श्रीकृष्णभक्तिसुधार्णवो ग्रन्थः ॥

विषयः । भक्तिस्वरूपविवेचनं । एवं ज्ञानवैराग्यादिस्वरूपविवेचनं । भगवद्भक्तलक्षणादिकथनं । तत्र शूद्रादीनामपि अधिकारविवेचनं । भगवद्भजनविधिविवेचनं । भजनस्थानादिनिरूपणं । दीक्षाविधिविवेचनं । पूजाभेदनिरूपणं । प्रणवार्थनिरूपणं । गायत्र्यर्थनिरूपणं । श्रीकृष्णचरणचिह्ननिरूपणं । राधिकाचरणचिह्ननिरूपणं । भक्तिविघ्ननिरूपणं । अपराधोपासनादिस्वरूपनिरूपणं । एकादश्यादिव्रतविधिकथनं । प्रसङ्गात् तत्र श्राद्धविधिविवेचनं । पुरुषोत्तममाहात्म्यादिविवेचनं । श्रीकृष्णस्वरूपनिरूपणं । श्रवणविवेचनं । कीर्त्तनविवेचनं । पादसेवननिरूपणं । अर्चनविवेचनं । तत्र मन्त्रादिविवेचनं । पूजामाहात्म्यकीर्त्तनं । स्नानविधिकथनं । विशेषेण मानसपूजाविधिकथनं । पूजास्थानादिनिरूपणं । पात्रादिनियमकथनं । पूजाविधिकथनं । जपविधिकथनं । दास्यविधिकथनं । आत्मनिवेदनविधिकथनं । त्रिकालपूजाविधिकथनं । नैमित्तिकविधिकथनं । अथ मासविशेषे क्रियाविशेषविधिनिरूपणं । अथ वैशाखकृत्यनिरूपणं । तत्र प्रातःस्नानविधिकथनं । पुष्परथयात्राविधिकथनं । नृसिंहचतुर्दशीविधिकथनं । एवं ज्यैष्ठकृत्यकथनं । तत्र स्नानयात्रादिविधिकथनं । आषाढकृत्यकथनं । तत्र रथयात्राविधिविवेचनं । शयनादिविधिकथनं । एवं श्रावणकृत्यविधिकथनं । भाद्रकृत्यविधिकथनं । विशेषेण जन्माष्टमीविधिविवेचनं । राधाष्टमीविधिकथनं । आश्विनकृत्यविधिकथनं । कार्त्तिककृत्यविधिकथनं । उत्थानयात्राविधिकथनं । रासयात्राविधिकथनं । मार्गशीर्षकृत्यनिरूपणं । पौषकृत्यनिरूपणं । माघकृत्यनिरूपणं । फाल्गुनकृत्यनिरूपणं । तत्र विशेषेण दोलयात्राविधिविवेचनं । चैत्रकृत्यनिरूपणञ्च । एकादश्युपवासविधिविवेचनं । उन्मीलन्यादिद्वादशीविधिकथनञ्च ।

---

**No. 4058 रासप्रमाणम् ।** Substance, country-made paper, 15 × 4 inches. Folia, 5. Lines, 6 on a page. Extent, 86 ślokas. Character, Bengali. Date, ? Place of deposit, Pántá, Zillá Varddhamána, Akshayachandra Bhaṭṭácbárya. Appearance, decayed. Prose and verse. Correct.

**Rásapramáṇa.** By Krishṇa Miśra. Extracts from the Sástras on the sanctity of the Rása festival which is the sport of Krishṇa in the company of the milk-maids of Vṛindávana on the full moon of the month of Kárttika. The writer quotes from ancient works to prove the exact time of performing the annual

**Beginning.** रासाविष्टं हरिं नत्वा श्रीकृष्णो चरितज्ञवित् ।
कालं तत्प्रीतये वक्ति रासयात्राक्रियोचितं ॥

अथ रासयात्राकालः । विष्णुपुराणे । गोपीपरिवृतो रात्रिं शरच्चन्द्रमनोरमां । गमयामास गोविन्दो रासारम्भरसोत्सुकः । इति । इत्यादि ।

**End.** अथ भ्रमणक्रमः । शिरसा भ्रामयेद्भक्त्या सप्त वारान् शनैः शनैः । इति । दर्शनफलं यथा । अस्मिन् काले च ये मर्त्या भक्त्या पश्यन्ति केशवं । सर्वपापविनिर्मुक्ताः कृष्णसायुज्यमाप्नुयुरिति ।

**Colophon.** इति श्रीकृष्णमिश्रविरचितं रासप्रमाणं समाप्तं ।

विषयः । कार्त्तिकपौर्णमास्यां महानिशाव्यापिन्यामेव रासयात्रा कर्त्तव्येति निरूपणं । तद्प्राप्तौ तु प्रदोषव्यापिन्यां तस्यां कर्त्तव्येति विवेचनञ्च ।

---

**No. 4059.** रासयात्राविवेकः । Substance, country-made paper, 16 × 4 inches. Folia, 4. Lines, 6 on a page. Extent, 63 ślokas. Character, Bengali. Date, ? Place of deposit, Dhátri-gráma, Zillá Varddhamána, Prasannakumára Bhaṭṭáchárya. Appearance, old. Prose and verse. Correct.

**Rása-yátrá-viveka.** By Mahámahopádhyáya S'úlapáṇi, who is represented as a Sáhúḍiyána, *i. e.*, belonging to the village of Sáhuḍi bestowed on one of the descendants of the five bráhmaṇs invited by Ádisúra, from Kányakubja. The bráhman belonged to the Bharadvája gotra. The bráhmaṇ belonging to this gráma are still to be found in Bengal. But they are regarded as inferior to Mukhopádhyáyas who belong to a different village but to the same gotra. Súlapáṇi who is quoted by Raghunandana belonged to this village at a time when his clan had not been lowered in the estimation of the Bráhmaṇs. From this work it appears that Súlapáṇi was a Vaishṇava.

H. P. Ṣ.

**Beginning.** नत्वा कृष्णपदद्वन्द्वं सुराणामपि सेवितं ।
विवेको रासयात्रायाः क्रियते शूलपाणिना ॥

स्कान्दे । गोपीभीराससंरम्भे तस्य चान्तर्द्धिकौतुकं । ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा । इति । देवानां रमणं रास इति व्युत्पत्त्या औणादिकस्य बाहुलकात्मकारस्य सकारः । अथ वा ईश्वरस्य मायया कौतुकभोगो रास इति स्थितं । इत्यादि ।

**End.** पौर्णमास्यां निशार्द्धे तु रासे रासेश्वरं प्रभुं ।
दृष्ट्वा नरो लभेत्स्थानं रम्यं चिद्रासेश्वरं ।
वचनमिदं वराहपुराणोक्तं ।

**Colophon.** इति माण्डियानमहामहोपाध्यायश्रीशूलपाणिविरचितो रासयात्राविवेकः समाप्तः ।

विषयः । कार्त्तिकपौर्णमास्यामर्द्धरात्रव्याप्यामेव रासयात्रा कार्य्येति निरूपणं । तदप्राप्तौ तु प्रदोषव्यापिन्यां पौर्णमास्यां सा कर्त्तव्येति निष्कर्षकथनं । यात्रापरिपाटीविधिकथनं । तन्माहात्म्यकीर्त्तनञ्च ।

---

**Nŏ. 4060.** शङ्करसंहिता । Substance, country-made paper, 16 × 6½ inches. Folia, 391. Lines, 13 on a page. Extent, 14,216 slokas. Character, Nágara. Date, Sk. 1670. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incoi rect.

**S'añkara-Sañhitá.** The Sañkara-Sañhitá is not mentioned in the preface to the translation of Vishnu Purána, nor in the index to the Puráṇas by Bábu Janamajaya Mitra. The Bábu had access to nearly all the MSS. of the Puránas accessible in Calcutta, and Professor Wilson had nearly as much, and the absence from their lists of the name of S'añkara-Sañhitá shows that it was not known in Bengal at the time. It has likewise not been met with in any of the N.-W. Provinces catalogue; but it has been known to Sanskrit scholars in the Southern Provinces; Mr. Barnell's catalogue of the Tanjore MSS. alludes (page 194,) to several copies, but all in fragments. The contents are very similar, so are the contents of the Sañkara Vilás, (Barnell's) page 203. The largest of the Tanjore MS. contains 14,000 verses. The MS. under notice is not a Southern one but it was directly obtained from Bombay. It contains about 15,000 verses divided into seven parts, each entitled a Káṇḍa, namely, Sambhava Káṇḍa, A'sura Káṇḍa, Víra Káṇḍa, Yuddha Káṇḍa, Deva Káṇḍa, Daksha Káṇḍa and Upadesá Káṇḍa. In the second chapter of the first káṇḍa, Vishnu at the request of S'iva, assumes the form of Vyása and composes the eighteen puráṇas for the glorification of different Devas. The Skanda-puráṇa is said to have six sañhitás, Sanat Kumáríya, Súta, Bráhmí, Vaisnavi, S'ánkarí and Sauri sañhitás. This division of the Puráṇa does not, however, agree with that given in the Náradíya-purán, which names the divisions as *khaṇḍas* and enumerates them as

follows: Máheśvara, Vaishṇava, Bráhma, Kásí, Avanti, Nágara and Prabhása khaṇḍas. The Sambhaba káṇḍa of this Sañhitá goes over the same ground as the Kumára Sambhava with slight differences in the details. The Asura who oppressed the Dévas on this occasion is not Táraka alone, but S'ura Padma and others were associated with him. Mahádeva had other sons besides Kárttika, Víra Váhu, Víra Kesári, Víra Mahendra, Víra Chandra, Víra Márttaṇḍa, Vírántaka and Víradhíra. Kárttika was brought from his native place, the S'aravana, a place full of reeds, to Kailása and he was sold and bought again. He fought with Indra and others, killed them and revived them. Nárada killed an animal at a sacrifice and a goat sprung out from its person. The goat disturbed the peace of the three worlds, and Kárttika made the goat his váhana, conveyance. Kárttika then put Brahmá into prison, from which the prisoner was rescued by S iva. Then S'ivá's sons march forth to fight with Táraka and others. Kárttika kills Táraka. His wives lament his loss, and his son flies to his brother Súrapadma to inform him of what had happened.

(**Aśura Káṇḍa**). Then follows a description of the birth and education of the Asuras, Táraka and others. Their propitiation of Mahádeva and of obtaining a boon from him. Their conquest of the devas and the oppression of the three worlds. The connected stories of the fall of the Vindya Mountain, the slaughter of Vátápí and the origin of the river Gaṇḍakí are then given.

(**Víra Káṇḍa**). Kárttika proceeds to Lañká to fight with S'úrapadma.

(**Yuddha Káṇḍa**) kills him with his whole family.

(**Deva Káṇḍa**). Kárttikeya is then married. The story of Muchukunda is given to glorify Kárttikeya.

(**Daksha Káṇḍa**). This káṇḍa contains the description of the well known destruction of Daksha's sacrifice by S'íva.

(**Upadeśa Káṇḍa**) contains a description of Mount Kailása. It then goes on to find the reason why the Asuras were so troublesome to the Devas. The sacredness of the ashes of cremation, of the rudráksha beeds, of the name of S'iva, of the fast on Mondays, of the various vows in honour of S'iva and his consort Párvati is the theme of a number of chapters. The consequences of devotion to S'iva, of hearing the recitation of S'ivapuráṇa, of acting against, of blaspheming and of worshipping S'iva, are then enumerated and a description given of the 25 forms of S'iva.

Beginning. श्रीगणेशाय नमः । अथ शङ्करसंहिता लिख्यते ।

ॐङ्कारनिलयं देवं गजवक्त्रं चतुर्भुजं ।
पिचिण्डिलमहं वन्दे तुजवक्त्रं चतुर्मुखं ॥
सुमुखश्चैकदन्तश्च कपिलो कज(गज)कर्णकः ।
लम्बोदरश्च विकटो विघ्नराजो विनायकः ॥
धूमकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
वक्रतुण्डः शूर्पकर्णो हेरम्बः स्कन्दपूर्व्वजः ॥
षोडशैतानि नामानि यः पठेच्छृणुयादपि ।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ।
सुब्रह्मण्यं प्रणम्याहं सर्व्वज्ञं सर्व्वगं सदा ॥
अभीष्टफलसिद्ध्यर्थं प्रवक्ष्ये नाम षोडश/
प्रथमो ज्ञानशक्त्यात्मा द्वितीयः स्कन्द एव च ॥
अग्निभूश्च तृतीयः स्यात् बाहुलेयश्चतुर्थकः ।
गाङ्गेयः पञ्चमो विद्यात् षष्ठः शरवणोद्भवः ॥
सप्तमः कार्त्तिकेयः स्यात् कुमारः स्यादथाष्टकः ।
नवमः षण्मुखश्चैव तारकारिर्दश स्मृतः ॥
सेनान्येकादशश्चैव गुहो द्वादश एव च ।
त्रयोदशो ब्रह्मचारी ईशपुत्रश्चतुर्दशः ॥
क्रौञ्चजित् पञ्चदशकः षोडशः शिखिवाहनः ।
एतत्षोडशनामानि जपेत् सम्यक् च सादरं ॥
विवादे दुर्गमे मार्गे दुर्जरीये (?) तथैव च ।
कवित्वे च महाशास्त्रे विद्यामार्थी फलं लभेत् ॥
कन्यार्थी लभते कन्यां जयार्थी लभते जयं ।
पुत्रार्थिपुत्रलाभश्च धनार्थी लभते धनं ॥
आयुरारोग्यवश्यञ्च धनधान्यसुखावहं ।
हरिः ॐ ।
पुरा काश्यां चतुर्वक्त्रस्तताप परमं तपः ।
स्रष्टुकामः प्रजाः सर्व्वाः तपसा परमेष्ठितुः ॥
तस्मिन् क्षेत्रवरपरिचर्य्यापरायणं ।

मुनयः कतिचित्पुण्ये स्थित्वा गार्हस्थ्य उत्तमे ॥
वैखानसाश्रमे तप्तुं तपः संयतमानसाः ।
प्रापुस्तन्निकटं प्रष्टुं तद्रहस्यानमुत्तमं ॥

End. इह लोके परत्रापि स्कन्दसायुज्यमाप्नुयात् ।
तस्मादहरहर्नित्यं श्रोतव्यमपि शुद्धये ॥
सूतात्मजस्य वचसातिमुनीन्द्रवर्य्याः
सन्तोषवार्द्धिलहरीषु निमग्नचित्ताः ।
सम्भाव्य सूतमपि स्वं स्वमपि विसृज्य
प्रापुस्तदाश्रमपदं त्रिदिवानधिश्रि ॥

Colophon. इति श्रीस्कन्दपुराणे शङ्करसंहितायां शिवरहस्यखण्डे उपदेशकाण्डे पञ्चाशीतितमोऽध्यायः । शङ्करसंहितायां शिवरहस्यखण्डं समाप्तं ।

विषयः । स्कन्दपुराणान्तर्गतशङ्करसंहितायां सप्त काण्डाः सन्ति । तद्यथा सम्भवकाण्डं आसुरकाण्डं वीरकाण्डं युद्धकाण्डं देवकाण्डं दक्षकाण्डं उपदेशकाण्डं । तत्र प्रथमकाण्डस्य प्रथमाध्याये, सूतमुनिसंवादः । द्वितीयाध्याये, विष्णुः शिवेनादिष्टः व्यासरूपेणावतीर्णो भूत्वा अष्टादशपुराणानि प्रणीतवानितिकथनं। अष्टादशपुराणेषु यस्मिन् यस्मिन् पुराणे ब्रह्मादिदेवानामन्यतमस्य प्राधान्यतो-माहात्म्यकीर्त्तनमस्ति तत्तन्नामकीर्त्तनं स्कन्दपुराणान्तर्गतषट्संहितानामकथनञ्च। स्कन्दपुराणान्तर्गतषट्-संहितानामानि यथा, सनत्कुमारीयसंहिता, सूतसंहिता, ब्राह्मी संहिता, वैष्णवी संहिता, शाङ्करी संहिता, सौरी संहिता । तृतीयाध्याये, भवानी शिवनिन्दाहेतोः दाक्षायणीति नाम परिजिहीर्षुः मायया हिमालयकन्यात्वेनाविर्बभूवेतिकथनं । चतुर्थाध्याये, शूरपद्मादिभिरसुरैरुपद्रुतानामिन्द्रा-दिदेवानां ब्रह्मणः समीपे गमनकथनं । पञ्चमाध्याये, ब्रह्मणः सन्निधौ शूरपद्मसिंहवक्त्रतारकासुराणां पराक्रमकथनं इन्द्रादिदेवानां क्लेशविज्ञापनञ्च । षष्ठाध्याये, ब्रह्मा इन्द्रादिदेवैः सह वैकुण्ठं गत्वा शूरपद्मादीनामुपद्रवं वैकुण्ठनाथं विज्ञापयामासेतिकथनं । सप्तमाध्याये, नारायणः ब्रह्मादिदेवैः सह कैलासं गत्वा महादेवं स्तुतिभिः सन्तोष्य असुरकृतदेवपराभवं कथयामास । महादेवः कार्त्तिकेयमुत्पाद्यासुरान् संहरिष्ये इति विष्णुप्रभृतीनाश्वास्य समाधिस्थो बभूवेतिकथनं । अष्टम-नवमदशमाध्यायेषु, शिवसमाधिभङ्गार्थं देवैः प्रार्थितो मदनः कैलासङ्गत्वा समाधिभङ्गोपायमचिन्तय-दितिकथनं । एकादशाध्याये, शिवस्य समाधिभङ्गः मदनस्य भस्मीकरणञ्च । द्वादशाध्याये, कन्दर्पस्य पुनर्जीवनार्थं रतिप्रार्थना, पार्व्वत्याश्छलनार्थं वृद्धब्राह्मणरूपेण शिवस्य हिमालयगमनमितिकथनं । त्रयोदशाध्याये, चतुर्दशाध्याये च पार्व्वतीसन्निधौ वृद्धब्राह्मणरूपेण शिवेन शिवनिन्दा कृता तच्छ्रुत्वा पार्व्वती रुष्टा बभूव सदाशिवस्तां कुपितां दृष्ट्वा प्रसाद्य कैलासमगमदितिकथनं । पञ्चदशाध्याये, महादेवः कैलासमागत्य सप्तर्षीन् सस्मार, आगतेषु तेषु पार्व्वत्या सह परिणयनार्थं तान् हिमालयं

प्रेरयामासेतिनिर्देशः। षोडशाध्याये, सप्तदशाध्याये च सप्तर्षयो गौरी महादेवाय दातव्येति हिमालयतत्पत्न्योः सम्मतिं कृत्वा शिवसन्निधौ जग्मुरितिकथनं। १८शे १९शे २०शे २१शे २२श अध्याये हरपार्व्वतीविवाहाङ्गकर्म्मानुष्ठानं। २३शे अध्याये, उद्वोढया पार्व्वत्या सह शिवस्य कैलासगमनं। २४शे २५शे २६शे अध्याये कार्त्तिकेयोत्पत्तिविवरणं। २७शे अध्याये, वीरबाहुः, वीरकेशरी वीरमहेन्द्रः, वीरचन्द्रः, वीरमार्त्तण्डः वीरान्तकः वीरधीरः एषां शिवसुतानां जन्मविवरणं। २८शे अध्याये, कार्त्तिकेयोत्पत्तिः शरवणात् कैलासे तस्यानयनमिति कीर्त्तनञ्च। २९शे अध्याये क्रीडाव्याजेन कार्त्तिकेयस्य विक्रमवर्णनं। ३०शे अध्याये, इन्द्रादिदेवैः सह कार्त्तिकेयस्य युद्धकथनं इन्द्रादीनां पराभववर्णनञ्च। ३१शे अध्याये, कार्त्तिकेयः बृहस्पतिना प्रार्थितो युद्धे मृतान् देवान् पुनर्जीवयामास, आत्मनो विश्वात्मकं रूपञ्च दर्शयामासेतिकथनं। ३२शे अध्याये, कार्त्तिकेयस्य देवसेनापतित्वेनाभिषेकः। नारदकृतयज्ञे आलम्भपशुत्व-सम्भूतेनैकेन छागेन त्रिलोकीनां व्याकुलीकरणं कार्त्तिकेयेन च स छागो वाहनः कृतः इति कथनं। ३३शे अध्याये, कार्त्तिकेयेन ब्रह्मणः कारागाररोधकथनं। ३४शे अध्याये, शिवेन ब्रह्मणः कारागाररोधमोचनमितिकथनं। ३५शे ३६शे अध्याये, कार्त्तिकेयस्य रूपवीर्य्यविभूतिकथनं। ३७शे अध्याये, शूरपद्मप्रभृतीनामसुराणां विनाशाय कार्त्तिकेयवीरबाहुप्रभृतीनां युद्धयात्रा। ३८शे ३९शे अध्याये, तारकासुरेण सह वीरबाहुप्रभृतीनां युद्धवर्णनं। ४०श अध्याये, वीरबाहोः पराजयवर्णनं। ४१श ४२श ४३शे अध्याये, गुहतारकासुरयोर्युद्धवर्णनं। ४४शे अध्याये, क्रौञ्चतारकासुरवधकथनं। ४५शे अध्याये, क्रौञ्चतारकासुरवधदिवसे ब्रह्मविष्णुप्रभृतिभिर्देवैः सह कार्त्तिकेयस्य हिमालयपर्व्वते अवस्थितिकथनं। ४६शे अध्याये, तारकासुरपत्नीनां विलापः। असुरेन्द्रनामा तारकासुरस्य सुतः पितुरन्त्येष्टिक्रियादिकं समाप्य पितृव्यस्य शूरपद्मस्य समीपे गत्वा कार्त्तिकेयकृतपितृवधादिवृत्तान्तं कथयामास च इति कथनं। ४७श अध्याये, कार्त्तिकेयस्य बलविक्रमादिज्ञानार्थं शूरपद्मासुरेण तत्समीपे चारः प्रस्थापितः। ४८श ४९श ५०श अध्यायेषु कार्त्तिकेयादिदेवानां वाराणसीतीर्थादिगमनकथनं। इति सम्भवकाण्डः।

आसुरकाण्डस्य १मे-अध्याये, शूरपद्मसिंहास्यतारकगजवक्त्रादीनामुत्पत्तिकथनं। २ये अध्याये, शूरपद्मसिंहवक्त्रतारकासुराणां तपस्याविवरणं। ३ये-अध्याये, महादेवात्तेषां वरप्राप्तिविवरणं। चतुर्थाध्यायमारभ्य सप्तमाध्यायपर्य्यन्तं शूरपद्मादिकृतदेवपराजयविवरणं। ८मे-अध्याये, शूरपद्मस्य ब्रह्मादिदेवकृतराज्याभिषेकविवरणं। ९मे-अध्याये, शूरपद्मादीनां उद्वाहादिवंशविस्तारकथनम्। १०मे-अध्याये, शूरपद्मस्य दौरात्म्यकथनं। ११शे अध्याये, विन्ध्यपर्व्वतस्य पतनविवरणं वातापिवधविवरणञ्च। १२शे अध्याये, शूरपद्मभयात् शीकोपाख्यनगरे शच्या सह पलायितस्येन्द्रस्य सन्निधौ देवानामागमनं। १३शे अध्याये, गङ्गाया उत्पत्तिः, महाकालकृतशूरपद्मभगिनीहस्तच्छेदः। १४शे अध्याये, शूरपद्मसमीपे गत्वा सर्वा अजमुख्या आत्मनो हस्तच्छेदवृत्तान्तः

कथितः। १५शे अध्याये, इन्द्रपुत्रजयन्तादिदेवैः सह शूरपद्मसुतभानुकोपाख्यासुरादीनां युद्धविवरणं। इत्यासुरकाण्डः।

वीरकाण्डे सप्तमाध्यायाः सन्ति, तेषु शूरपद्मासुरस्य बलवीर्य्याद्यन्वेषणार्थं प्रस्थितस्य वीरबाहोः प्रत्यागमनानन्तरं तन्मुखात् शूरपद्मासुरस्य बलवीर्य्यादिकं विदित्वा युद्धार्थं सैन्यैः सह कार्त्तिकेयस्य स्कन्दागमननिमित्तकथनं॥ इति वीरकाण्डः।

युद्धकाण्डे पञ्चत्रिंशदध्यायाः सन्ति, तेषु कार्त्तिकेयवीरबाहुप्रभृतीनां शूरपद्मभानुकोपादिभिः सह युद्धवर्णनं। शूरपद्मभानुकोपादीनां निधनकीर्त्तनञ्च। इति युद्धकाण्डः।

देवकाण्डे सप्ताध्याया विद्यन्ते तेषु कार्त्तिकेयोद्वाहविवरणं मुचुकुन्दनृपतेर्जीवनचरितवर्णनव्याजेन कार्त्तिकेयमाहात्म्यकीर्त्तनञ्च। इति देवकाण्डं।

दक्षकाण्डे चत्वारिंशदध्यायाः सन्ति तत्र दक्षयज्ञविवरणं। ब्रह्मादीनां मध्ये महादेवस्य श्रेष्ठत्ववर्णनञ्च। इति दक्षकाण्डः।

उपदेशकाण्डे, १मे २ये चाध्याये, कैलासवर्णनं। ३य ४र्थ ५म अध्यायेषु असुरादिदेवोत्पत्तिकारणकीर्त्तनं। ६ष्ठ ७म अध्याययोः अजमुख्या आसुरदेवोत्पत्तिहेतुपूर्वजन्मकर्म्मकथनं। ८मे अध्याये, मायायाः शूरपद्मादिपुत्रोत्पत्तिनिमित्तकर्म्मकथनं। ९म १०म ११श १२श अध्यायेषु भस्ममाहात्म्यकीर्त्तनं। त्रयोदशाध्यायावधिऊनविंशाध्यायपर्य्यन्तं रुद्राक्षमाहात्म्यकीर्त्तनं। विंशाध्यायात् षड्विंशाध्यायपर्यन्तं शिवनाममाहात्म्यकथनं। २७शे अध्याये, सोमवारव्रतविधितन्माहात्म्यकथनं। २८शे अध्याये, आर्द्राव्रतविधिः। २९शे ३०शे चाध्याये, उमामहेश्वरव्रतविधिः। ३१शे अध्याये, केदारव्रतविधिः। ३२शे अध्याये, कल्याणव्रतविधिः। ३३शे अध्याये, शूलव्रतविधिः। ३४शे अध्याये, वृषभव्रतविधिः। ३५शे अध्याये शुक्रवारव्रतविधिः। ३६शे अध्याये, विघ्नेश्वरव्रतविधिः। ३७शे अध्याये, कृत्तिकादिव्रतमाहात्म्यकथनं। ३८शे अध्याये, माघमासप्रथमदिवसे चैत्राश्विनमासयोर्भरणीनक्षत्रे च शिवव्रतविधिः। ततः ऊनचत्वारिंशाध्यायात् सप्तचत्वारिंशाध्यायपर्यन्तं शिवभक्तस्य लक्षणादिकथनं। ४८शे अध्याये, शिवपुराणश्रवणफलकीर्त्तनं। ऊनपञ्चाशाध्यायात् सप्तपञ्चाशाध्यायपर्यन्तं शिवद्रोहफलकीर्त्तनं। ५८शे ५९म ६०म अध्यायेषु शिवनिन्दादिफलवर्णनं। एकषष्टितमाध्यायमारभ्य एकाशीतितमाध्यायपर्यन्तं शिवपूजामाहात्म्यकथनं। ८२मे अध्याये, शिवयोगकथनं। ८३मे ८४मे चाध्याये शिवज्ञानकथनं। ८५मे अध्याये शिवस्य पञ्चविंशतिमूर्त्तिकथनं। इत्युपदेशकाण्डः।

---

**No. 4061.** तत्त्वचन्द्रिका। Substance, country-made paper, 16 x 4 inches. Folia, 68. Lines, 14 on a page. Extent, 2,320 ślokas. Character, Bengali. Date, ? Place of deposit, Vegune, Zillá Varddhámana, Sadánanda Bhaṭṭáchárya. Appearance, decayed. Prose. Correct.

**Tattva-Chandriká.** By Chandra-śekhara. Gives the definition of Brahmá and refutes the arguments of the Chárvákas, Bauddhas, Jainas, Naiyáyikas, Sáñkhyas, S'aivas and Mímáñsakas on the subject of creation. The writer belongs to that school of the Vedántists who believe Jíva to be part of Brahma and he levels his arguments against the Dualists on the one hand and the Pantheists on the other. He ascribes bondages to the result of beginning-less influence, Brahmá Náráyana and Sachchidánanda all these words meaning the same thing.

Beginning. प्रणम्य जानकीनाथं सच्चिदानन्दविग्रहं ।
श्रीचन्द्रशेखरो विप्रः कुरुते तत्त्वचन्द्रिकाम् ॥

अथ ब्रह्म वा इदमग्र आसीत् यत्कारणं तद्ब्रह्मेति लक्षणवाक्येनोक्तं विनापि प्रकरणात् ब्रह्मशब्द आत्मपरः । इत्यादि ।

End. अतो महोपनिषत्प्रतिपादिते नारायण एव तद्ब्रह्मादिशब्दाः पर्य्यवस्यन्तीति सर्व्वमवदातं ।

Colophon. इति श्रीचन्द्रशेखरविरचिता तत्त्वचन्द्रिका समाप्ता ।

विषयः । जगत्कारणतया ब्रह्मलक्षणादिविवेचनं । अथ चार्व्वाकमतनिरसनं । बौद्धमतनिरसनं । आर्हतमतनिरसनं । तार्किकमतनिरसनं । सांख्यमतनिरसनं । शैवमतनिरसनं । मीमांसकमतनिरसनञ्च । ब्रह्मणः सविशेषत्वनिरूपणं । तत्र मायावादनिरसनं । जीवस्य ब्रह्मांशत्वनिरूपणं । तदन्यमतनिरसनं । तत्त्वमस्यादिश्रुतीनां तात्पर्य्यकथनं । तत्र शुद्धाद्वैतमतोपपादनं । द्वैतवादनिरसनं । अद्वैतवादनिरसनञ्च । मोक्षस्वरूपादिविवेचनं । अनादिवासनयैव जीवस्य बन्धादिकथनं । सच्चिदानन्दादिशब्दानां प्रत्येकमर्थकथनं । ब्रह्मणः तत्स्वरूपलक्षणञ्च । नारायण एव भगवद्ब्रह्मशब्दादिवाच्य इति निरूपणञ्च ।

---

No. 4062. क्षेमकुतूहलम्, वा पाकशास्त्रम् । Substance, country-made paper, 14 × 5 inches. Folia, 75. Lines, 8 on a page. Extent, 1,788 ślokas. Character, Nágara. Date, ? Place of deposit, Sántipura, Rámanátha Tarkaratna. Appearance, new. Verse. Incorrect.

**Kshema-kutúhalam.** By Kshema S'armá, the son of Manmatha, belonging to the Vaidya caste. The chapters are styled *Utsavas* or "Feasts." There are twelve of these in the work. The writer has consulted the following authors. Gaurí, Nala, Vágbhaṭa, Bhíma, Hárita and Suśruta. The work treats of the art of cookery. It shows that the

Hindus besides eating the numerous vegetables were in the habit of eating the flesh of numerous animals, such as, goat, sheep, stag, &c. The different processes of cooking flesh have been fully given. The date appears to be 1415 of the Vikrama era. The work was finished on the 13th day of the waning moon in the month of Kárttika. It is an elaborate treatise on Hindu cookery.

H. P. S.

Beginning. कपोलतलनिर्गतप्रमदवारिधाराखसत्-
षडङ्घ्रिकुलकाकलीकलितमञ्जुकोलाहलः ।
गिरीशतनयो गुरुः सकलसिद्धिधाराम्बिधि-
र्भिनत्तु दुरितानि वः सततमोदकादः सदा ॥

— — — — — — ।

भारद्वाजकुलाम्भोधौ वलक्षा + क्षयोर्द्वयोः ।
द्विजराजतनिर्जाता निष्कलङ्का स + क्षपा ॥
तस्मान्निगूढाम्बयभूषणोऽभूत्
स लक्ष्मणो लक्षणपूर्णगात्रः ।
भिषग्वरो राक्षसराजधान्यां
विभीषणं यो विगदं व्यधत्त ।

— — — — ।

गौरीमतञ्च नलवाग्भटभीमसृष्टिं
हारीतसुश्रुतमतं रविसिद्धपाकम् ।
क्षेमो भिषग्वरसुधीरवलोक्य सम्यग्-
ग्रन्थं व्यधत्त खलु क्षेमकुतूहलाख्यम् ॥
इष्टदेवनमस्कारस्ततो ग्रंथप्रशंसनम् । इत्यादि ।

End. नन्दन्तां नीतिभाजः सकलवसुमतीज + + पास्तु विश्वं
दुःखेना यान्तु नाशं भवतु वसुमती शस्यसम्पन्नरेशा ।
नीरं यच्छन्तु मेघाः कलयतु सुकविः काव्यकौशल्यलीला-
मबादव्याजभाजं परत्तरदुरितं क्षेमशर्म्माणमीशः ॥
बाणाकाशगुणेनाब्दे वत्सरे विक्रमाह्निते ।
कार्त्ते शुक्लत्रयोदश्यां ग्रन्थः पूर्णोऽभवन्मुदे ॥

इति श्रीमरवैद्यमन्मथात्मजक्षेमशर्म्मविरचिते क्षेमकुतूहले ग्रन्थे मांसपाकादिप्रशंसनो नाम द्वादशोत्सवः ।

**Colophon.** इति पाकशास्त्रं समाप्तं ।

विषयः । ग्रन्थकर्तुः प्रशस्तिकथनं । अथ महानसनिर्म्माणविधिकथनं । चुल्लीनिर्म्माणविधिकथनं । स्थालयभाण्डादिप्रशंसाकीर्त्तनं । पक्वान्नानां पाकान्तरे स्थापनविधिकथनं । महानसोपयोग्योपकरणकथनं । विषादिपरिहाराय तत्र चकोरादिरक्षणविधिकथनं । सूपकारादिप्रशंसाकीर्त्तनं । ऋतुविशेषे भक्ष्याभक्ष्यविधिकथनं । अथ दिनचर्य्याविधिकथनं । भोजनविधिकथनं । भोक्तृविधिकथनं । आसनविधिकथनं । भोजनपात्रविधिकथनं । आचमनोदकादिविधिकथनं । परिवेषणक्रमणादिकथनं । रन्धनविधिकथनं । तत्र सूपविधिकथनं । मुद्गकुल्माषविधिकथनं । माषविधिकथनं । सामान्यतो घृतविधिकथनं । गव्यादिविधिकथनञ्च । अन्ननिरूपणं । पर्पटविधिकथनं । पटोलफलविधिकथनं । नाड़ीविधिकथनं । डमरविधिकथनं । कर्करीविधिकथनं । मूलकविधिकथनं । चाङ्गेरीकविधिकथनं । हरिद्राविधिकथनं । अथ सर्व्वव्यञ्जनपरिभाषाकथनं । तण्डुलनविधिकथनं । वर्णकरणविधिकथनं । मिचरिणीपानकयोर्विधिकथनं । मांसरन्धनविधिकथनं । सुखिन्नमांसविधिकथनं । कोमलसुगन्धविधिकथनं । अजमांसविधिकथनं । वर्कुरविधिकथनं । पठोराविधिकथनं । खिचौधिपाविधिकथनं । मेषमांसविधिकथनं । गड्डुरविधिकथनं । चगौमांसविधिकथनं । मृगमांसविधिकथनं । शिकारजविधिकथनं । शशकमांसविधिकथनं । पाठीमांसविधिकथनं । मावरमांसविधिकथनं । राघविधिकथनं । वराहविधिकथनं । प्रलेहविधिकथनं । गौरीगौरप्रलेहविधिकथनं । समोसाविधिकथनं । पूरणप्रलेहविधिकथनं । शुक्लवर्णप्रलेहविधिकथनं । पीतहरित-रक्तादिप्रलेहविधिकथनं । भृष्टमांसविधिकथनं । परिशुष्कविधिकथनं । तन्दूरविधिकथनं । सुस्वादुतन्दूरविधिकथनं । कुष्माण्डपक्वतन्दूरविधिकथनं । पुटपाकविधिकथनं । फलपुटपाकविधिकथनं । वल्कलप्रलेहविधिकथनं । मांसेष्टरीविधिकथनं । मधुरमांसपाकविधिकथनं । मुण्डरन्धनविधिकथनं । अन्तरन्धनराजिकामांसविधिकथनं । मांसपूरितवार्त्ताकुविधिकथनं । पक्षिमांसविधिकथनं । महावलपाकविधिकथनं । बलभूतिपाकविधिकथनं । अनूपजलाद्यविधिकथनं । तित्तिरिविधिकथनं । लावकविधिकथनं । कपोतविधिकथनं । मयूरविधिकथनं । चिमाचिनविधिकथनं । अथ मत्स्यपाकविधिकथनं । तत्र गन्धनाशनविधिकथनं । मत्स्यप्रलेहविधिकथनं । मत्स्यखण्डप्रलेहविधिकथनं । मत्स्यपिष्टिकविधिकथनं । मत्स्यपूरणविधिकथनं । मत्स्यपुटपाकविधिकथनं । मद्गुरमत्स्यविधिकथनं । रोहितपाकविधिकथनं । पालासिमत्स्यविधिकथनं । पाठीनविधिकथनं । मत्स्यीविधिकथनं । मत्स्यगुच्छकविधिकथनं । मत्स्येष्टरीविधिकथनं । सूक्ष्ममत्स्यविधिकथनं । मत्स्यनामाभ्यनुक्रमकथनं । अथ शाकविधिकथनं । हस्ताकादिविधिकथनं । बिम्बीफलविधिकथनं । शिम्बीविधिकथनं । एवं तोरयी-पटोला-तुम्बी-डिड़िडश-बिल्व-कुष्माण्ड-राजिक-ढोड़ी कण्टकारिका-कारवल्ली-कर्कोटक-करीर-कपिकच्छु-उदुम्बर-आर्द्रक-कर्कटी-एरण्ड-कुटज-कदली-राजमाषकादिफलपाकविधिकथनं । अथ पत्रशाकविधिकथनं । तत्र देवदाली-वर्बर-शतपुष्पादिशाकविधिकथनं । अथ पुष्प-

शाकविधिकथनं। तत्र करीर-कारीर-कुटज-शोभाञ्जनपुष्पादिपाकविधिकथनं। अथ पक्ववपाक-विधिकथनं। अथ सन्धानकविधिकथनं। अथ वटिकावटकादिविधिकथनं। अथ पिष्टकविधि-कथनं। अथ फेणिकाविधिकथनं। तत्र नवनीतफेणिकादिविधिकथनं। अथ शष्कुलिविधिकथनं। तत्र दधिशष्कुल्यादिविधिकथनं। अथ विश्वमोदकादिविधिकथनं। अथ दुग्धविधिकथनं। तत्र क्षीरदल-कपिगर्भकादिविधिकथनं। अथ मण्डकविधिकथनं। तत्र अङ्गारकर्कट्यादिविधिकथनं। अथ अपूपविधिकथनं। तत्र वदरकर्णपूरिकादिविधिकथनं। अथ खण्डखर्जूरविधिकथनं। कर्पूरनालि-कादिविधिकथनं। पक्वान्नविधिकथनं। सट्टकादिविधिकथनं। आम्रपल्लवमुकुलादिप्रकारकथनं। अथ गोरसपानकादिविधिकथनं। अथ घोलकादिविधिकथनं। अथ रसालादिविधिकथनं। अथ भोजनान्तविधिकथनं। आचमनादिविधिकथनं। धूपादिविधिकथनं। अथ अजीर्णोपशमन-विधिकथनं।

---

**No. 4063.** मर्मप्रकाशः। Substance, country-made paper, 16 × 4 inches. Folia, 200. Lines, 10 on a page. Extent, 5,250 ślokas. Character, Nágara. Date, ? Place of deposit, Dhátrí-gráma, Zilla Varddhamána, Prasannakumára Bhaṭṭácbárya. Appearance, new. Prose. Incorrect.

**Marma-prakás'a.** A commentary by Nágessa, a dependent of the Rájá of S'ṛingavera, on the well-known but very difficult work on Sanskrit rhetoric, entitled Rasagaṅgádhara by Jagannátha Paṇḍitarája.

**Beginning.** नत्वा गङ्गाधरं मर्मप्रकाशं तनुते गुरुम्।
रसगङ्गाधरमणेरतिगूढार्थसंविदे॥
याचकानां कल्पतरोररिकक्षहुताशनात्।
नागेशः शृङ्गवेरेशरामतो लब्धजीविकः॥

परिचिकीर्षितप्रतिबन्धकदुरितशमनाय शृङ्गाराद्यनन्तादिविभावनया तद्देवतात्वेन च समुचित-स्वेष्टदेवतावस्तुनिर्देशरूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातॄणामनुषङ्गतो मङ्गलाय च निबध्नाति स्मृतापीति। कादम्बिनी मेघपंक्तित्वेन अध्यवसिता कृष्णमूर्त्तिः। विलक्षणश्यामत्वात् सकलमेघकार्य्यकरत्वाच्च। अत एव मेघत्वेनाध्यासः। इत्यादि।

**End.** सुवर्णपदार्थमात्र रूपमिति। कातरादीनां प्रश्नमतमिति। मत इत्यादि।

**Colophon.** आकूतमभिप्राय। इति शिवम्।

विषयः। जगन्नाथपण्डितराजकृतरसगङ्गाधरस्य व्याख्यानम्।

---

**No. 4064.** वक्रोक्तिपञ्चाशिका । Substance, country-made paper, 8 × 3 inches. Folia, 22. Lines, 12 on a page. Extent, 693 ślokas. Character, Nágara. Date, ? Place of deposit, Vegune, Zilla Barddhamána, Sadánanda Bhaṭṭácharya. Appearance, decayed. Text, verse and commentary. Prose. Correct.

**Vakrokti-páñchásiká.** Fifty stanzas containing a dialogue between Hara and Párvatí. The work was composed by Ratnákara, a great poet of Káshmír, who wrote an epic entitled Hara Vijaya. He had the literary title of Vágíśvara Vidyádhipatí. The commentator is Vallabha Deva, son of Ánanda Deva, the minister who appears to have lost his life in battle. Vallabha has left commentaries on S'iśupálabadha and other well-known poems.

**Beginning.** त्वयाहृतमनमेतदद्य भवतो निःशेष मुक्ताश्रयं
त्वयाहं विजयोऽसि सुन्दरि वनं निःशेषता नास्ति मे ।
नैवं वाद्यसि वनं मम जलं मूर्धा मयैवोच्यते
वक्रोक्त्येति हिमाद्रिजामवचसं कुर्वन् हरः पातु वः ॥
तां चालावलयाङ्करोषि मनसो मुक्तां समालिङ्गितो
चालां नैव बिभर्मि नैव च वलं मुग्धे कथं चालिकः ।
सत्यं चालिकनैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरो हरः पातु वः ॥
टीकायाः ।
वागीश्वरीं नमस्कृत्य मत्वानाथं महेश्वरम् ।
वक्रोक्तिवर्णने रत्न पञ्जिका क्रियते लघु ॥
त्वयाहृतमनं वामभागावस्थानं । त्वयाहं चाक्षैः द्युतस्थैः वर्जितं वसन । इत्योरुद्योर्ष ग्रन्थालङ्कारेषु यमकवक्रोक्त्यादिषु न तथा इत्यादि ।

**End.** वक्रोक्तिपञ्चाशतिमित्यमेतां
यो भावयेन्मत्सरविप्रबुद्धिः ।
स्यादेशदाख्यानेषु काव्यबन्धे
भवेत्स रत्नाकरवत्प्रवीणः ॥
टीकायाः ।
रत्नाकरः कविवरो हरविजयकाव्यकारः तद्वत्प्रवीणः कुशलः स्यात् ।
इत्यानन्ददेवस्य तस्सूनोर्बल्लभाख्यः ।

वक्रोक्तिवर्षमे राजे डिम्बं बन्नभो थयात् ॥

**Colophon.** इत्यमात्यवरानन्ददेवसूनुश्रिग्रपाखवथायमेकवायटीकाकवंश्रीवल्लभदेवक्र- मया टिप्पणा समेता श्रीचामनृपसत्यमुक्तीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरमाम्नो रत्नविजय- मचाकाव्यकर्त्तुः काश्मीरदेशोद्भवराजानकश्रीरत्नाकरमचाकवेः इतिवक्रोक्तिपञ्चाशिका समाप्ता ।

विषयः । वक्रोक्तिव्याजेन पार्वतीपरमेश्वरयोरन्योन्यं परिहासवर्णनम् ।

---

**No. 4065.** न्यायदीपकः । Substance, country-made paper, 14 x $4\frac{1}{2}$ inches. Folia, 86. Lines, 17 on a page. Extent, 4,906 slokas. Character, Bengali. Date, ? Place of deposit, S'ántipur, Rámanátha Tarkaratna. Appearance, very decayed. Prose. Correct.

**Nyáya-dípaka.** A gloss on Vátsáyana's *bháshya* (commentary) on the Nyáya Sútras of Gautama by one Miśaruka.

**Beginning.** प्रणम्य पुण्डरीकाक्षमक्षपादं गुरूनपि ।

श्रीमता मिश्रधकेण क्रियते न्यायदीपकः ॥

प्रेक्षावत्प्रवृत्त्यौपयिकाभिधेयव्यापारप्रयोजनजिज्ञासायां भगवताक्षपादेन प्रमाणादिपदार्थतत्त्व- ज्ञानान्निःश्रेयसाधिगम इति प्रथमं सूत्रितं । प्रमाणादिपदार्थानां तत्त्वं ज्ञायते अनेनेति तत् प्रमा- णादिपदार्थतत्त्वज्ञानं न्यायशास्त्रं । तस्मान्निःश्रेयसस्यात्यन्तिकदुःखाभावस्याधिगम इति प्रयोजनं । तत्त्वज्ञापनं व्यापारः । प्रमाणादितत्त्वमभिधेयञ्च दर्शितं । अथास्य शास्त्रस्य उद्देशलक्षणपरीक्षारूप- प्रवृत्तित्रये प्राथमिकः पदार्थ उद्देशोऽपि इतः । अत परे सूत्रोत्थानमपि न सङ्गच्छे । इत्यादि ।

**End.** अनुज्ञपाप्रमज्ञानाद्यननुभाषणावसरे — — — मिति । सिद्धान्तम- भ्युपेत्य नियमात् कथाप्रसङ्गः—सिद्धान्त इति सूत्रं । अपगतः सिद्धान्तो यस्मा — — — ।

**Colophon.** अतः परं अपिठतत्वात् परिसमाप्तिसूत्रकवाक्यं नास्ति ।

विषयः । न्यायसूत्रवात्स्यायनभाष्यस्य व्याख्यानम् ।

---

**No. 4066.** न्यायरत्नाकरः । Substance, country-made paper, 16 x 4 inches. Folia, 150. Lines, 8 on a page. Extent, 3,725 ślokas. Character, Bengali. Date, ? Place of deposit, Vegune, Zilla Barddhamána, Sadánanda Bhaṭṭácbárya. Appearance, fresh. Prose. Incorrect.

**Nyáya-Ratnákara.** By Pártha-sárathí Miśra. A commentary on the *śloka-várttika* by Kumárila Bhaṭṭa which again explains the Savara-bháshya on the Mímáṅsá aphorisms of Jaimini.

**Beginning.** नमो जैमिनिवन्दये मीमांसाशास्त्रकाराय ।
श्लोकवार्त्तिककारिकुमारिलावित्रसमाप्तये ।
विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति ॥
विश्वेति । विद्यागुरूणां स्तुतिनमः कुर्वन् वार्त्तिककारस्यं प्रतिजानीते । अभिवन्द्येति । सम्प्रति श्लोकयाख्यामारिप्रयमाणो विदुषामनुनयं करोति । तदिति । परीक्षकाणामिदानीं माध्यस्थमर्थ्यते । न चार्थेति । दोषदृष्टिपरायणानामसन्नपि दोषः प्रकाशते । अतो मध्यस्थाः परीक्षध्वमिति । दुर्जनानिदानीं + + श्च दमयति । इत्यादि ।

**End.** तेन प्रकरणार्थमुपसंहरति । इति चोदनसूत्रपदर्शनतात्पर्यतो नैयायमतमेकं वादिनि । इत्यात् गुणानुपेतामिति ।

**Colophon.** इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे निरालम्बनवादः ।

विषयः । भट्टकुमारिलकृतमीमांसासूत्रीयशाबरभाष्यश्लोकवार्त्तिकस्य व्याख्यानम् ।

---

**No. 4067.** प्रायश्चित्तकुतूहलम् । Substance, country-made paper, 18 × 5 inches. Folia, 203. Lines, 8 on a page. Extent, 3,232 ślokas. Character, Bengali. Date, ? Place of deposit, Vegune, Zilla Barddhamána Sadánanda Bhaṭṭáchárya. Appearance, fresh. Prose and verse. Incorrect.

**Práyaśchitta-kutúhalam.** By Rámachandra Bhaṭṭa. A treatise on expiatory ceremonies on the model of S'úlapáni's well-known work the Práyaśchitta-viveka. It treats of various kinds of sins and the mode of expiating them.

**Beginning.** नवीननीरदश्यामं नत्वा श्रीश्याममुन्दरं ।
तन्यते रामचन्द्रेण प्रायश्चित्तकुतूहलम् ॥
तत्राङ्गिराः ।
प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतं ॥
अत्र प्रायः शब्देनाभोजनमात्रमुच्यते । तथाच विशिष्टं तपः शास्त्रविहितमन्यं प्राजापत्यादि । इत्यादि ।

**End.** वैवर्णिके सार्ग्निप्रश्न चान्द्रायणं अचिरवैश्ययोः सार्ग्नोः परान्न इत्यर्थः ।

**Colophon.** इति भट्टश्रीरामचन्द्रकृतौ प्रायश्चित्तकुतूहलं समाप्तं । सम्पूर्णोऽयं ग्रन्थः ।

विषयः । प्रायश्चित्तलक्षणादिकथनं । नरकनिरूपणं । प्रायश्चित्ताधिकारनिर्णयः । कामाकाम-

विकल्पकथनं । पापोद्देशकथनं । अतिपातककथनं । महापातककथनं । अनुपातककथनं । उपपातककथनं । जातिभ्रंशकरादिकथनं । तन्त्रतानिरूपणं । ब्रह्महत्यादिप्रायश्चित्तकथनं । पतितसंसर्गादिप्रायश्चित्तकथनं । पतितोत्पन्नप्रायश्चित्तकथनं । अथ गोवधप्रायश्चित्तकथनं । रोधादिनिमित्तकगोवधप्रायश्चित्तकथनं । क्षत्रियादिवधप्रायश्चित्तकथनं । प्रतिलोमजादिवधप्रायश्चित्तकथनं । स्त्रीवधप्रायश्चित्तकथनं । गर्भवधप्रायश्चित्तकथनं । गजाश्वमार्जारादिवधप्रायश्चित्तकथनं । पक्षिविशेषवधप्रायश्चित्तकथनं । मत्स्यादिप्रायश्चित्तकथनं । अभक्ष्यभक्षणप्रायश्चित्तकथनं । रजकाद्यन्त्यजकापालिकचण्डालाद्यन्नभक्षणप्रायश्चित्तकथनं । वृथामांसादिभक्षणप्रायश्चित्तकथनं । लशुनपलाण्डुभक्षणादिप्रायश्चित्तकथनं । अगम्यागमनादिप्रायश्चित्तकथनं । मूत्रादिपानप्रायश्चित्तकथनं । रहस्यादिप्रायश्चित्तकथनं । व्रतविधिकथनं । तत्र क्षत्रियादिषु व्यवस्थाकथनं । अनुग्रहविधानकीर्त्तनञ्च ।

---

**No. 4068. विद्वच्चित्तप्रसादिनी ।** Substance, country-made paper, 14 × 3 inches. Folia, 22. Lines, 7 on a page. Extent, 414 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, new. Prose. Incorrect.

**Vidvachchitta-prasádiní.** A commentary on S'aṅkaráchárya's well-known treatise entitled Shaṭpadí Stotra. By Kavi Sarojánandatírtha a disciple of Vaikuṇṭhánandatírtha. The commentator consulted the commentaries on the work existing in his time.

**Beginning.** नत्वा रामं रमानाथं श्रीकृष्णं शङ्करं तथा ।
करिष्यामीह षट्पद्याव्याख्यानं सुगमाक्षरं ।

इह खलु जीवानां वेदविहितकर्म्मानुष्ठानोत्पन्नदुरितदावानलविदग्धान्तःकरणानां विषयरसविडम्बितहृदयतया विमुखानां समुद्दिधीर्षुर्भगवान् श्रीमच्छङ्कराचार्य्यः षट्पदीस्तोत्रं प्रणिनाय । तत्र विषयासवप्रमादापहृतविवेकानां विष्णुविप्रगुरुश्रेष्ठेष्वविनयात् दुरितोत्पत्तिमाकलय्य तन्निवृत्तिरेव तावत् प्रार्थ्यते—अविनयमिति । इह खलु मण्डलधराः सभाजन ताडनदण्डनादिभिरपराधं क्षमन्ते । इत्यादि ।

**End.** तथा चास्याः पाठात् सर्व्वेषां मङ्गलं भवतीत्युक्तं ।
टीकाकारमतं ज्ञात्वा विद्वच्चित्तप्रसादिनी ।
कृता तत्त्वप्रबोधाय षट्पद्या विवृतिः शुभा ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीवैकुण्ठानन्दतीर्थस्य शिष्येण श्रीमत्परमहंसपरिव्राजकाचार्य्येण कविसरोजानन्दतीर्थेन रचिता विद्वच्चित्तप्रसादिनी समाप्ता ।

विषयः । शङ्कराचार्य्यकृतषट्पदीस्तोत्रस्य व्याख्यानम् ।

**No. 4069.** सुगमावृत्तिः । Substance, country-made paper, 10 × 4 inches. Folia, 36. Lines, 19 on a page. Extent, 1,710 ślokas. Character, Nágara. Date, Sm. 1847. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Sugamá-vṛitti.** A commentary on the Gautamaprich'chhá. It is dated Samvat 1318.

**Beginning.** वीरं जिनं प्रणम्यादौ बालानां सुखबोधिका ।

श्रीमद्गौतमपृच्छायाः क्रियते वृत्तिरद्भुता ॥

नमिऊण तित्थनाहमिति । व्याख्या । नत्वा तीर्थनाथं ज्ञात्वा तथा गौतमः भगवतां बोधा-नबोधार्थं धर्माधर्मफलं वक्ष्ये । इत्यादि ।

**End.** एतद्ग्रन्थं यः शृणोति वाचयति तस्य पुरुषस्य पापं न भवति । पश्चात् मोक्षसुखं भुनक्ति । अतो भव्यलोकैरियं गौतमपृच्छा पठनीया श्रोतव्या च ॥

श्रीजिनचन्द्रसूरीणां सुशिष्याः पाठकवराः ।

श्रीमत्सुमतिहंसाख्य तच्छिष्यैर्मतिवर्द्धनैः ॥

पाठकपदसंयुक्तैः कृता चेयं कथानिका ।

श्रीगौतमस्य पृच्छायाः सुगमा सुखबोधिका ॥

सिद्ध्यै रामे मुनौ चन्द्रवर्षेऽस्मिन् मार्गशीर्षके ।

श्रीमत्+नागपारिख्यां नगर्याञ्च शुभेऽहनि ॥

**Colophon.** इति श्रीगौतमपृच्छायाः सुगमावृत्तिः सम्पूर्णतामगमत् । संवत् १८४७ ।

विषयः । गौतमपृच्छाभिधानजैनप्रकरणस्य व्याख्यानम् ।

---

**No. 4070.** ग्रहयज्ञप्रयोगः । Substance, country-made paper, 10 × 3 inches. Folia, 28. Lines, 9 on a page. Extent, 440 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Grahayajṇa-prayoga.** A gloss on Aśvaláyna's Gṛihya Sútra.

**Beginning.** श्रीगणेशाय नमः ।

अथ ग्रहयज्ञप्रयोगः । यजमानः स्नात्वा नित्यकर्म निर्वर्त्य मौञ्जिबन्धने देवकार्ये सत्यादौ अयनादिनिमित्तकालेषु संकल्पयेत् । ममात्मनः(ग्रहयज्ञ)सिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्ये । इत्यादि ।

**End.** बहुरूपं वा सहस्राक्षं यस्य कर्म प्रचोदितं ।

तस्य तावति शास्त्रार्थे कृते सर्वः कृती भवेत् ॥

इति वचनात्। एवमन्येषामपि यदि सम्प्रदायागतस्तदा स एव। येषां सम्प्रदायो नास्ति। तैः याज्ञवल्क्यादिस्मृत्युक्तः मत्स्यपुराणाद्युक्तो वानुष्ठेयः। स्मृत्यादेः साधारण्यादिति दिक्।

**Colophon.** इति ग्रहयज्ञप्रयोगः समाप्तः।

विषयः। आश्वलायनीयगृह्यपरिशिष्टानुसारेण बह्वृचां नवग्रहयागप्रयोगकथनम्।

---

**No. 4071.** ग्रहमखप्रयोगः। Substance, country-made paper, 9 × 4 inches. Folia, 20. Lines, 10 on a page. Extent, 325 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Graha-makha-prayoga.** On the details of domestic rights.

**Beginning.** श्रीगणेशाय नमः।

यजमानः कृतनित्यक्रियः देशकालौ स्मृत्वा मम सकुटुम्बस्य सपरिवारस्यायुरारोग्यैश्वर्याद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं अमुककर्म करिष्ये। तदङ्गस्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धञ्च कर्म करिष्ये। इत्यादि।

**End.** यथाशक्ति विप्रान् भोजयित्वाशिषो गृहीत्वा पूर्णतां वाचयित्वा कर्मेश्वरार्पणं कृत्वा सुहृद्भिः सह भुञ्जीतेति।

**Colophon.** इति ग्रहमखप्रयोगः।

विषयः। पद्धतिकथनम्।

---

**No. 4072.** गणपत्युपनिषत्। Substance, country-made paper, 10 × 4 inches. Folia, 6. Lines, 5 on a page. Extent, 29 ślokas. Character, Nágara. Date, ? Place of deposit. Calcutta, Government of India. Appearance, new. Prose and verse. Incorrect.

**Gaṇapatyupanishat.** On the divinity of Gaṇesa.

**Beginning.** श्रीगणेशाय नमः।

ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षं त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि। इत्यादि।

**End.** महाविघ्नात् प्रमुच्यते महादोषात् प्रमुच्यते (?)। स सर्वविद्भवति स एवं वेदेति। ॐ शान्तिः शान्तिः शान्तिः।

**Colophon.** इति गणपत्युपनिषत् समाप्ता।

विषयः। गणेश एव सर्वजगत्कारणं परं ब्रह्मेति निरूप्य तन्मन्त्रादिकथनम्।

**No. 4073.** गायत्रीसहस्रनामस्तोत्रम् । Substance, country-made paper, 5½ × 2½ inches. Folia, 25. Lines, 7 on a page. Extent, 98 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

**Gáyatrí-sahasra-náma-stotra.** A hymn in a thousand epithets of the holy verse Gáyatryi. Anonymous.

**Beginning.** श्रीगणेशाय नमः ।

नारद उवाच ।

भगवन् देव देवेश सर्व्वशास्त्रविशारद ।

श्रुतिस्मृतिपुराणानां रहस्यं तन्मुखाच्छ्रुतं ॥

सर्व्वपापहरं देव केन स्याद्ब्रह्मवर्च्चसं ।

केन वा ब्रह्मविज्ञानं किन्नु वा मोक्षसाधनं ॥

ब्राह्मणानां गति केन केन वा मृत्युनाशनं ।

ऐहिकामुष्मिकफलं केन वा ब्रह्मसम्भवः ॥ इत्यादि ।

**End.** इदं रहस्यममलं मयोक्तमपि सत्तम ।

पठनात् ब्रह्मसायुज्यं प्राप्नुवन्ति न संशयः ॥

**Colophon.** इति गायत्रीसहस्रनामस्तोत्रं समाप्तं ।

**विषयः ।** स्तुतिव्याजेन गायत्र्याः नामसहस्रकीर्त्तनम् ।

---

**No. 4074.** गोभिली नाम परिशिष्टम् । Substance, country-made paper, 9½ × 4 inches. Folia, 13. Lines, 8 on a page. Extent, 198 ślokas. Character, Nágara. Date, Sm 1615 Place of deposit, Calcutta, Government of India. Appearance, decayed. Verse. Generally correct.

**Gobhilí-pariśishṭa.** An appendix to the aphorisms of Gobhila on the domestic rites of the Hindus.

**Beginning.** देवदानवगन्धर्व्वाः पिशाचोरगराक्षसाः ।

पीडन्ते ग्रहपीडायां किं पुनर्भुवि मानवाः ॥

आदित्ये द्वादशे चैव रावणः सगणो हतः ।

अष्टमेन शशाङ्केन हिरण्यकशिपुर्हतः ॥

अङ्गारकेण वक्रेण रौमो राज्याद्विवासितः ।

पाण्डवा बुधपीडायां विक्रमेषि विनिर्जिताः ॥ इत्यादि ।

**End.** आयुश्च विद्या च तथा सुखञ्च
धर्म्मार्थलाभो बहुपुत्रता च ।
शत्रुक्षयं राजसुपूजितञ्च
तुष्टा ग्रहाः सर्व्वमेतद्ददन्तु (?) ॥

**Colophon.** इति गोभिलाचार्य्यकृतं गोभिलौ नाम परिशिष्टं समाप्तम् । संवत् १९४५ ।

विषयः । स्थानविशेषस्थितानां ग्रहाणां शुभाशुभजनकत्वकथनपूर्वकं तत्र तेषां शान्तिविधिकथनं । तत्र समिधादिलक्षणकथनं ग्रहयागमन्त्रादिकथनञ्च ।

---

No. 4075. गुरुगुणषट्त्रिंशिका, वा गुरुगुणषट्त्रिंशत्षट्त्रिंशिका-सूत्रम्, कुलदीपिकाख्यविवृतिसहिता । Substance, country-made paper, 10 × 4 inches. Folia, 19. Lines, 21 on a page. Extent, 1,582 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Text, verse. Mágadhí. Commentary. Prose and verse Sanskrit. Correct.

**Guru-guṇa-shaṭtriñśiká, or Guru-guṇa-shaṭtriñśat-shaṭtriñśiká-sútra, Kuladípikákhya-vivṛiti-sahitá.** On the virtues of Guru in 36 stanzas, with the gloss of Ratnaśekhara. The text in Prakrit and the gloss in Sanskrit.

**Beginning.** टीकायाः,—

ॐ नमः सिद्धाय ।
श्रीमदर्हत्पदं जीयान्महोदयमहोज्ज्वलं ।
जगत्त्रितयसाम्राज्यं यत्प्रसादर्द्धिवर्णिका ॥
कलाकुलनयज्ञानसम्पद्विस्तारकारकः ।
श्रीयुगादिजिनो भूयात् भविनां भूरिभूतये ॥
— — — — — ।
श्रीवज्रसेनाभिधसूरिराजैः
सुसूत्रधारैरिव यैर्व्यधायि ।
अयं जनोऽप्यश्मसमोऽभिवन्द्य-
स्तेभ्यो गुरुभ्योऽस्तु मम प्रणामः ॥

— — — — इह विशिष्टसमयानुसारतो मयमार्थसमीहरैवतामसम्बाराधि-भाविका सम्यक्त्वादिगर्भाश्च सूत्रस्येमामादिगाथामाह वीरं । इत्यादि ।

मूलस्य,—

वीरस्स पणप णमित्तुं सिरि गो अम पमुह गणहराणं च ।
गुरुगुणछत्तीसीओ छत्तीसं कित्तइ स्सं स ॥

End. सिरिवयरासण सुह गुरुसीसेणं विरइयं कुलगमेयं ।
पढिऊणममलभावा भव्वाणवं उ कल्लाणं ॥

Colophon. इति श्रीगुरुगुणषट्त्रिंशिका समाप्ता ।

टीकायाः ।

कुलकार्थानुसारिणां प्राणिनामागौवचनमाह सिरीति सुगमं ।

समाप्ता चेयं श्रीगुरुगुणषट्त्रिंशत्षट्त्रिंशिकासूत्रकुलदीपिका ॥

श्रीमद्वृहद्गच्छपयोजहंसः समस्तवादीन्द्रशिरोऽवतंसः ।
प्रज्ञापराभूतसुरेन्द्रसूरिर्जीयाज्जगत्यां गुरुदेवसूरिः ॥
— — — — — — ।
तत्पट्टनायकाः श्रीहेमतिलकसूरयस्तदादेशात् ।
श्रीरत्नशेखराख्यः शिष्यो लिखति स्म वृत्तिमिमां ॥

. विषयः । तत्र गृणाति सद्धर्म्ममिति गुरुः । स च गुणवानेव तत्त्वतो विशुद्धसम्यक्तत्त्वाव-बोधजनकसद्धर्म्मपरायण एव देशनादिदानाय समर्थो भवति । गुणा हि खलु दर्शनचारित्रादयो यद्यप्यनन्ता एव,* तथापि देशनाकथाधर्म्मभावनादिचतुष्करूपाः षट्त्रिंशत्संख्यया परिकल्पिताः पूर्वसूरिभिः । तत्र देशना चतुर्विधा यथा आक्षेपिणी, विक्षेपिणी, संवेगिनी, निर्वेदनी चेति । अथ चतुर्विधकथानिरूपणम् । ताश्च अर्थकथा, कामकथा, धर्म्मकथा, सङ्कीर्णकथा चेति । तथा धर्म्मोऽपि दानधर्म्मः, शीलधर्म्मः, तपोधर्म्मः, भावधर्म्मश्चेति चतुर्विधः । भावना च, ज्ञानभावना दर्शनभावना-चारित्रभावना-वैराग्यभावनाभेदात् चतुर्विधा । अथ स्मारणाकथनं । वारणाकथनं । नोदनाकथनं । प्रतिनोदनाकथनञ्च । एवं क्रमेण आर्त्तध्यानकथनं । रौद्रध्यानकथनं । धर्मध्यानकथनं । शुक्लध्यानकथनं । एवं सम्यक्चारित्रादिनिरूपणञ्च ।

---

**No 4076.** गुणमालाटीका । Substance, country-made paper, 10 × 4 inches. Folia, 49. Lines, 17 on a page. Extent, 2,600 ślokas. Character, Nágara. Date. ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Generally correct.

**Guṇa-málá-ṭíká.** A commentary on the Jaina treatise called the Guṇa-málá.

**Beginning.** श्रीश्रुतदेवतायै नमः ।

प्रत्यक्षीकृत्य मुक्ताविव मुचिरचिरं मौक्तिकं येन लोके
मध्येऽलोकं समस्तैर्वसुभिरपचितो दर्शितस्तावदागमः ।
निन्ये भव्याध्वनीनावलिरक्षतपदं येन वाङ्मात्रतोऽपि
स श्रीसिद्धार्थसूनुस्त्रिजगदधिपतिर्मानसं मे पुनातु ॥

(टीका ।) स श्रीसिद्धान्तसूनुः सिद्धार्थराजसूनुः त्रिजगदधिपतिः त्रिभुवननायकः मे मम मानसं चित्तं पुनातु पवित्रीकरोतु । स इति कः । येन मध्यम् अलोकम् । इत्यादि ।

**End.** तन्मनोगतभावांश्च जानाति । इत्येवमेकविंशतिर्गुणाः श्रावकाणामपि व्याख्याताः । समाप्तश्चासौ गुणमालाग्रन्थः श्रीविक्रमार्कन्टपराज्यपदात् समुद्रभूमिद्विराचिपतिभिः प्रमिते ।

श्रीखरतरगणनाथाः श्रीजिनभक्तिसूरिभक्तिभृतः ।
सिद्धान्ततत्त्वनिषयो जयन्ति जिनावभे सूरिवराः ॥
यद्वदननिर्गतगिरः सुरगुरुगिरमधरयन्ति मधुरिमा ।
यशसा धवलितजगतो जयन्ति जिनलाभसूरीन्द्राः ॥
श्रीक्षेमकीर्तिवाचकवंशे जिनहर्षनाममुनिराजः ।
सुखवर्द्धनाभिधानस्तच्छिष्या वाचका विदिताः ॥
तच्छिष्या विदितदया दयादिसिंहाख्यवाचका विबुधाः ।
तच्चरणरेणुरञ्जितमौलिरयं रामविजयाख्यः ॥
श्रीजिनलाभयतीन्द्रैरादिष्टः पाठकः क्षपापटुभिः ।
गुणमाला + +ग्रन्थो लमत सतां कण्ठपीठेऽसौ ॥
— — — — — — ।

**Colophon.** इति श्रीगुणमालाटीका समाप्ता ।

विषयः । गुणमालाभिधानजैनसन्दर्भस्य व्याख्यानम् ।

---

**No. 4077.** गुरुसहस्रनामस्तोत्रम् । Substance, country-made paper, 12½ × 3½ inches. Folia, 6. Lines, 7 on a page. Extent, 118 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Generally correct.

**Guru-sahasra-náma-stotra.** A thousand epithets strung in a hymn in praise of Guru. An extract of the Sanmohana Tantra.

**Beginning.** अथ गुरुसहस्रनामस्तोत्रं । श्रीशिव उवाच ।

कैलासशिखरासीनं चन्द्रखण्डविभूषितं ।

पप्रच्छ विनया भक्त्या गौरी नत्वा वृषध्वजं ॥

श्रीदेव्युवाच ।

भगवन् सर्व्वधर्म्मज्ञ सर्व्वशास्त्रविशारद ।

केनोपायेन च कलौ लोकानां (?) यान्ति सद्गतिं ॥

श्रीमहादेव उवाच ।

अस्ति गुह्यतरं देवि ज्ञानमेकं सनातनं ।

अतीव च सुगोप्यञ्च कथितुं नैव शक्यते ॥

**End.** गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।

महेश्वरात्परं नास्ति गुरुरित्यभिधीयते ॥

**Colophon.** इति संमोहनतन्त्रे पार्व्वतीश्वरसंवादे श्रीगुरुसहस्रनामस्तोत्रं समाप्तं ।

विषयः । गुरोः सहस्रनामकथनं ।

---

**No. 4078.** श्रीगुरुस्तोत्रं । Substance, country-made paper, 13 × 3½ inches. Folium, 1. Lines, 11 Extent, 20 ślokas. Character, Bengali Date, ? • Place of deposit, Calcutta, Government of India, Appearance, Fresh, Verse, Incorrect.

**S'ríguru-stotra.** A hymn in praise of Guru. An extract from the Nigama-sára.

**Beginning.** श्रीमहादेव उवाच ।

साम्प्रतं वद मे कान्ते श्रीगुरोः स्तोत्रमुत्तमं ।

येनानुष्ठितमात्रेण नरो योगित्वमाप्नुयात् ॥

श्रीदेव्युवाच ।

शृणु शङ्कर वक्ष्यामि स्तोत्रमत्यन्तदुर्ल्लभम् ।

स्तोत्रपाठेन विधिना भवाब्धिञ्च तितर्त्ति च ॥

अस्य श्रीगुरोः स्तोत्रस्य परं ब्रह्म ऋषिर्गायत्रीच्छन्दः श्रीगुरुः परं ऋषिरूपि (देवता) मुक्त्यर्थे विनियोगः ।

**End.** अत्यन्तदुर्लभं ह्येतत् न वदेत् पशुसन्निधौ ।

वदन्नरकमाप्नोति यदि साक्षान्महेश्वरः ॥

**Colophon.** इति निगमसारे सर्व्वागमोत्तमोत्तमे पार्व्वतीशिवसंवादे शतसाहस्र्यां संहितायां निगमशास्त्रे सप्तसारे श्रीगुरोः परं ब्रह्मस्तोत्रं सम्पूर्णम् ।

विषयः । श्रीगुरोः स्तुतिकथनं ।

---

**No. 4079.** श्रीगुरुकवचं । Substance, country-made paper, 13 × 3 inches. Folia, 2. Lines, 11 on a page. Extent, 30 slokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**S'rí Guru-kavacha.** An amulet bearing the name of Guru. An extract from the Nigama-yoga-sára.

**Beginning.** श्रीमहादेव उवाच ।

वद कान्ते श्रीगुरोर्मे कवचं परमं शुभम् ।
श्रोतुमिच्छामि देवेशि कृपया मे प्रकाशय ॥
श्रीदेव्युवाच ।
महादेव महाबाहो सुचिसि(?) त्वं कुलेश्वर ।
सर्व्वं ते विदितं यस्य इदं नैव प्रकाशितं ।

**End.** कौलिकानां कुलाचारे योगिनां योगसाधने ।
सम्मतं कवचं दिव्यं सर्व्वसिद्धिमवाप्नुयात् ॥

**Colophon.** इति निगमयोगसारे सर्व्वागमोत्तमोत्तमे पार्व्वतीशिवसंवादे शतसाहस्र्यां संहितायां निगमशास्त्रे सप्तसारे श्रीगुरोः परं ब्रह्म कवचं नाम दशमपरिच्छेदः ।

विषयः । श्रीगुरोः कवचकथनं ।

---

**No. 4080.** गुरुकवचं । Substance, country-made paper, $13\frac{1}{4} \times 3\frac{1}{2}$ inches. Folium, 1. Lines, 10. Extent, 37 slokas. Character, Bengal. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Guru-kavacha.** On the same subject as the preceding, but by a different author. An extract from the Samayá Tantra.

**Beginning.** श्रीदेव्युवाच ।

सेवका बहवो नाथ कुलधर्मपरायणाः ।
जायन्ते त्वत्प्रसादेषां भवोपरि चितोपरि ॥

तेषां प्रयोगसिद्ध्यर्थं रक्षार्थं विशेषतः ।
पृच्छामि बहुशो देव कथयस्व दयानिधे ॥
श्रीशिव उवाच ।
शृणु देवि महाप्राज्ञे कवचं सर्वसिद्धिदं ।
श्रीगुरोः कृपया देवि यद्विद्या यदि लभ्यते ॥

**End.** पठेद्वा पाठयेद्वापि शृणोति श्रावयेदथ ।
सर्वसिद्धीश्वरो भूत्वा देववद्विचरेद्भुवि ॥

**Colophon.** इति समयातन्त्रे श्रीगुरोः कवचं समाप्तं ।

विषयः । श्रीगुरुकवचकीर्त्तनं ।

---

**No. 4081.** गुरुपङ्क्तिकवचं । Substance, country-made paper, 13¼ × 3½ inches. Folium, 1. Lines, 6 on a page. Extent, 10 slokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Guru-pañkti-kavacha.** On the succession of Gurus.

**Beginning.** ईश्वर उवाच ।

अस्य श्रीगुरुपङ्क्तिकवचस्य श्रीविश्वयवनभार्गवजामदग्न्याश्चाप्रुवदृषिः गुरुर्देवता सर्वकामसिद्ध्यर्थे विनियोगः ।

ऐं पातु मस्तके नित्यं सर्वकामफलप्रदं ।
ऐं श्रीं पातु ललाटे च सर्वसिद्धिप्रदायकं ॥

**End.** पठनाद्धारणाद्देवि सर्वसिद्धिः प्रजायते ।
प्रातःकाले पठेन्नित्यं पूजाकाले विशेषतः ॥

**Colophon.** इति श्रीगुरुतन्त्रे गुरुपङ्क्तिकवचं समाप्तम् ।

विषयः । गुरुपंक्तिकवचकथनम् ।

---

**No. 4082.** गुरुकुण्डली । Substance, country-made paper, 19¼ × 3¼ inches. Folium, 1. Lines, 19 on a page. Extent, 65 slokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Guru-kuṇḍalī.** Mystical diagrams consecrated to Guru. An extract from the Guru Tantra.

**Beginning.** नमः सरस्वत्यै । अथ इष्टगतिभावितकुण्डली लिख्यते । अथ मन्त्रो यथा ।

ॐ धुक् धुक् स्वाहा। अनेन मन्त्रेण सप्तवाराभिमन्त्रितां कठिनीं गृहीत्वा उत्तरदक्षिणतः पूर्वपश्चिमतः सप्तसप्तसमेतं जनपञ्चाशन्मण्डलं भूमौ लिखेत्। तत्र सविन्दून् जनपञ्चाशदक्षरान् विन्यसेत्। ततस्तत्कुलस्यापि शिशोर्हस्तेन पूर्वोक्तमन्त्रेण सप्तधा तां कठिनीमभिमन्त्र्य स्वकीयकार्य्यस्य शुभाशुभं मनसि विचिन्त्य कोष्ठानामेककोष्ठे पातयित्वा शुभाशुभं वक्तव्यं।

तद्यथा।

अकारेण यशोऽद्दष्टं धनलाभं सुखं तथा।

अचिराल्लभते कामं भूमिलाभश्च दृश्यते ॥

अ।

आकारेण शोकतापौ विरोधः सततं भवेत्।

धनहानिर्भयञ्चैव क्लेशश्चैव प्रजायते ॥

आ।

**End.** हकारे चिरकल्याणं शुभञ्च सततं भवेत्।

धनधान्यं धेनुवत्सं प्रभुत्वञ्च सदा लभेत् ॥

ह।

**Colophon.** इति बृहस्पतिभाषितगुरुकुण्डली समाप्ता।

विषयः। जनपञ्चाशत्कोष्ठानामन्यतमेषु मन्त्रपाठपूर्वकं स्वकुलजबालकद्वारा कठिनीपातेन शुभाशुभनिर्देशः।

---

**No. 4083.** गुरुसहस्रनामस्तोत्रं। Substance, country-made paper, 13 × 3½ inches. Folia, 9. Lines, 8 on a page. Extent, 133 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Generally correct.

**Guru-sahasra-náma-stotra.** On the same subject as the preceding. An extract from the Nigama Yoga-sára.

**Beginning.** ॐ नमो गुरवे तस्मै। श्रीमहादेव उवाच।

अपरं श्रोतुमिच्छामि कान्ते मत्प्राणवल्लभे।

स्तोत्रं सहस्रनामाख्यं श्रीगुरोः कुलभैरवि ॥

कृपया कथयेशानि स्तोत्रं परमदुर्लभम्।

श्रीदेव्युवाच।

शृणु शङ्कर वक्ष्यामि स्तोत्रं ब्रह्मप्रदायकं।

तव स्नेहेन वक्ष्यामि कथयामि सुनिश्चितम्।

**End.** न सवं दर्शयेदेव प्राणान्तेऽपि च गौरिज (?)। इति ज्ञात्वा भावचिते (भावचिता) स्वयोनिरिव (स्वयोनिमिव) गोपयत् ।

**Colophon.** इति श्रीनिगमयोगसारे सर्वागमोत्तमोत्तमे ज्ञानसारवरां संचितायां निगमशास्त्रे सत्यसारे श्रीगुरोः सप्तलनामकथनमेकादशः परिच्छेदः ।

विषयः । गुरोः सप्तलनामकथनं ।

---

**No. 4084** कुवलयानन्दखण्डनम्, वा अलङ्कारसारस्थितिः । Substance, country-made paper, 11 × 5 inches. Folia, 13. Lines, 13—15 on a page. Extent, 590 ślokas. Character, Nágara. Date, Sm 1856. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Kuvalayánanda-khaṇḍana or Alañkára-sára-sthiti.** A rhetorical disquisition on differences of opinion regarding the Kuvalayánanda. By Bhímasena Dikshita who flourished in the reign of Ajit Siñha of Jodhapus.

**Beginning** ( प्रथमत. पट् पत्राणि न सन्ति । )

इतकौतूहली निर्मातुं प्रभवेन्मनोहरमिदं कथं पुराणो मुनिरिति मूलोदाहरणपर्य्यालोचननिबन्धनं चक्रवर्त्तिभट्टाचार्य्यवाचस्पतिमिश्रादनेकव्याख्याव्याख्यानविरहश्चेत्यनादेयं । इत्यादि ।

**End.** काव्यप्रकाशप्रकाशकारख्यवस्थापितः श्रीदेवनाथतर्कपञ्चाननश्रीमच्चामचोपाध्यायगोविन्दश्रीजयरामन्यायपञ्चाननाद्यनेकविद्वद्व्याख्याता एक + + र्थालङ्कारा एवोपकुर्व्वन्तीत्यनवद्यं ।

संवद्वि—क्षितिधरच्छायद्भिमे आवण
प्राक्पक्षे नवमी शनैश्चरयुता जाताचिदेशे मरौ ।
भूप—श्रीमदजीत (?) सिंहविलसच्छ्रीयोधपुर्य्यां पुरे
कृता दीक्षितभीमसेनसुधियालङ्कारसारस्थितिः ॥

**Colophon.** इति श्रीकुवलयानन्दखण्डनोपनामकालङ्कारसारस्थित्यभिधः समाप्तः । शुभं भूयात् । संवत् । १८५६ ।

विषयः । आप्पयदीक्षितकृतकुवलयानन्दाभिधेयालङ्कारसन्दर्भोक्तानां केषाञ्चिदभिनवालङ्कारलक्षणानां तथा केषाञ्चनप्राचीनानाञ्च दोषप्रदर्शनम् ।

---

**No. 4085.** ज्योतिषमणिमाला । Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 5. Lines, 11 on a page. Extent, 157 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Jyotisha-maṇi-málá.** On astrological calculations.

Beginning. श्रीगणेशाय नमः ।

गणेशं भारतीं वन्दे गुरुपादाम्बुजं तथा ।
वक्ष्ये वै पूर्वशास्त्रोक्तं चन्द्रराशिगतं फलं ॥१॥
चन्द्रजद्दशमषष्ठे लाभगे याति सूर्य्ये
धनयशोसुखमान्यः सर्व्वकार्य्येषु सिद्धिं ।

End चान्द्रं रवेर्मङ्गं (?) लग्नस्याङ्गं च योजयेत् ।
त्रिभिर्भागैर्विज्ञानीयात् समे स्त्री विषमे नरः ॥

इत्थिमन्तः शुभयचेईदृत्तमन्यतषु स्वत्वाख्या वासः (?) प्रवद्न्ति सन्तः ।

Colophon. इति ज्योतिषमणिमाला समाप्ता ।

विषयः । लग्नादीनामन्यतमेषु चन्द्रविशेषाणां स्थितिवशात् शुभाशुभफलकीर्त्तनं । गोचरादिफलकीर्त्तनञ्च ।

---

**No. 4086.** ज्वरशान्तिः । Substance, country-made paper, 9½ × 4 inches. Folia, 2. Lines, 10 on a page. Extent, 38 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Correct.

**Jvara-śánti**. On the cure of fevers according to Garga-Sañhitá.

Beginning. श्रीगणेशाय नमः । अथ ज्वरशान्तिः । आचम्य प्राणानायम्य देशकालौ संकीर्त्य अस्य रोगिणः शरीरे उत्पन्नोत्पत्स्यमानामज्वरपित्तज्वरश्लेष्मज्वरादिसकलरोगनिरसनपूर्व्वकं सद्यआरोग्यावाप्त्यर्थं ज्वराधिपतिभगवद्रुद्रप्रीत्यर्थं गर्गसंहितोक्तां समन्त्रकमन्त्रां ज्वरशान्तिं करिष्ये ।

End. कर्म्मसाद्गुण्याय ( कर्म्मवैगुण्यशान्त्यर्थं ) ब्राह्मणान् भोजयेत् । यस्य स्मृत्येति विष्णुं स्मरेत् ।

Colophon. इति ज्वरशान्तिः । श्रीगजाननार्पणमस्तु ।

विषयः । गर्गसंहितोक्तज्वरशान्तिप्रयोगः ।

---

**No. 4087.** जैमिनीयसूत्रवृत्तिः । Substance, country-made paper, 11¼ × 4 inches. Folia, 16. Lines, 10 on page. Extent, 40 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Correct.

**Jaiminíya-sútra-vṛitti**. Commentary on the aphorisms of Jaimini on astrological calculations. By Krishṭánanda Sarasvatí.

**Beginning** श्रीमहागणपतये नमः ।

भूमानं पुरुषार्थसारमखिलाधारं प्रकाशं परं
सीमानं भवसागरस्य सकलानन्दामृताम्भोनिधिं ।
सन्मानं सततं प्रमाणपदवीदूरं विदूरं हृदि
स्वात्मानं श्रुतिशेखरैकहृदयं स्फूर्तिस्वरूपं भजे ॥
भावयामि हृदि श्रीमद्गोपालानन्ददेशिकान् ।
श्रीमत्स्वयम्प्रकाशार्य्यान् श्रीश्रीधरगुरूनपि ॥
— — — — — — ।

उपदेशमित्यादि । जैमिनीयं सूत्रनिकरमयं जालकम् इत्यादि ।

**End.** अन्यत्र आसमाप्तेरनुक्रमेणैव गणना । इति ।

**Colophon.** इति श्रीकृष्णानन्दसरस्वतीविरचितायां जैमिनीयसूत्रवृत्तौ प्रथमस्याध्यायस्य प्रथमः पादः ।

विषयः । जैमिनिसूत्राभिधानफलितन्यायनिबन्धस्य प्रथमाध्यायप्रथमपादमात्रस्य व्याख्यानम् ।

---

**No. 4088.** जनमारशान्तिप्रयोगः । Substance, country-made paper, 11 × $4\frac{1}{2}$ inches. Folia, 3. Lines, 9 on a page. Extent, 38 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Janamára-śánti-prayoga.** On certain mystic rites for the purpose of overcoming epidemics performed according to directions given by Garga.

**Beginning.** श्रीगणेशाय नमः । अथ जनमारशान्तिः । विधानमालानुसारेण जनमारशान्तिं करिष्यन् आदौ स्नात्वा कृतनित्यक्रियः शिवालयं विप्रैः सह गत्वा देवं प्रणिपत्य तद्दक्षिणे ... द्वादशाङ्गुलान्यतममानेन देवयजनभूमिं सम्पाद्य मण्डपं कृत्वा तस्मिन् कुण्डं स्थण्डिलं वा इत्यादि ।

**End.** धर्मभावसमीतैश्चत्वैर्वेद + + स्नानभवनेन च तं दिवसं नयेदिति ।

**Colophon.** इति विधानमालाख्यगर्गोक्तकारिकानुसारी जनमारशान्तिप्रयोगः ।

विषयः । मारीभयनिवारणार्थं गर्गोक्तविधानेन शान्तिप्रयोगकथनम् ।

---

**No. 4089.** हस्तिकाण्डः । Substance, country-made paper, 9 × 4 inches. Folium, 1. Lines, 32. Extent, 64 ślokas. Character, Nágara.

Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Ishṭi-kála**. On appropriate times for the performance of sacrifices. By Paṇḍita Dámodara.

**Beginning**. अथेष्टिकालः । गोभिलः । पञ्चाम्मा उपवस्तव्याः पञ्चादयोऽभिज्यष्टव्या इति । उपवासोऽन्वाधानं । तत्र मध्याह्ने तत्पूर्व्वे वा पर्व्वप्रतिपत्सन्धौ तद्दिने यागः ।

**End**. ग्रन्थखण्डितत्वात् परिसमाप्तिसूचकवाक्यं न विद्यते ।

**Colophon**. यागकर्त्तव्यतासमयनिरूपणम् ।

---

**No. 4090**. हायनरत्नम् । Substance, country-made paper, $12\frac{1}{2} \times 5$ inches. Folia, 68. Lines, 9—10 on a page. Extent, 2,066 ślokas. Character, Nágara. Date, Sk. 1744. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Generally correct.

**Háyana-ratna**. Astrological calculations. By Balabhadra, son of Dámodara. Written in the year 1551 of some era the name of which is lost owing to a *lacuna*.

**Beginning**. श्रीगणेशाय नमः ।

अथ तन्वादिद्वादशभावविचारः ।
उक्तञ्च यादवेन ।
भावं परस्यानधिगम्य धीमान्
दृष्टेऽपि वक्तुं स हि नो हि तत् क्षमः ।
यथैव तन्वादिजभावजातं
शुभाशुभं तद्विदधोम्यथाचं ॥

द्वादशभावानां संज्ञा उक्ता समरसिंहेन । तनु १ धन २ सहज ३ सुहृत् ४ सुत ५ रिपु ६ जाया ७ मृत्यु ८ धर्म्म ९ कर्म्मा—य १०,११ व्यया १२ इति द्वादशभावाः । आद्य-स्थानानि लग्नाद्या इति ।

**End**. ततोऽब्दप्रवेशः कुण्डलीसहितो लेख्यः । इति वर्षपत्रलेखनक्रमः ।
निर्मथ्य स ताजिकशास्त्रसिन्धुं
समुद्धृतो हायनरत्नसंज्ञः ।
सद्वर्षपत्रीकरणोद्यतानां
ज्योतिर्विदां कण्ठविभूषणाय ॥
— — — — ।

ग्रन्थीपतिमच्चावीरश्रीमत्पश्चिमजातिके ।
श्रीरामभक्तेन मया ग्रन्थो विनिर्म्मितः ॥
—, — — — — ।
भूवाणाश्वकुभि १५५१ मिते + + मितिर्ग्रन्थस्य तां वेत्ति यः ।
तं मन्ये गणितद्वयाङ्कमलप्रोद्बोधने भास्करम् ॥

Colophon इति श्रीमद्दैवज्ञवर्य्यपण्डितदामोदरात्मजबल्लभद्रविरचिते हायनरत्ने मासप्रवेशादिविचारोऽध्यायोऽष्टमः समाप्तः ।

शाके १७४४ ।

विषयः । सामान्यतो भावविवेचनपूर्व्वकं तनुधनसहजादिद्वादशभावफलादिकथनं । पञ्चादीनां दशानयनादिविधिकथनं । मासप्रवेशानयनविधिकथनं । वर्षपत्रलेखनादिक्रमकथनञ्च ।

इति शम् ।

---

**No. 4091.** हयग्रीवस्तोत्रं । Substance, country-made paper, 8 × 3½ inches. Folia, 8. Lines, 6 on a page. Extent, 72 ślokas. Character, Nágara. Date, Sm. 1911. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect

**Hayagríva-stotra.** A hymn to Hayagríva. By Veṅkaṭanátha Vedántáchárya.

**Beginning.** श्रीहयग्रीवाय नमः । अथ संकल्पः । श्रीभगवदाज्ञया भगवत्प्रीतिद्वारा सकलविद्यासिद्ध्यर्थं यथाशक्ति हयग्रीवमन्त्रस्य जपं करिष्ये । अथ ऋषिच्छन्दोदेवताः ।

**End** वागर्थसिद्धिहेतुं पठत् हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किककेशरिणा वेङ्कटनाथेन विरचितामेतां ॥

**Colophon.** इति श्रीसर्वतन्त्रस्वतन्त्रस्य (स्वतन्त्र) श्रीमद्वेङ्कटनाथवेदान्ताचार्य्यकृतिहयग्रीवस्तोत्रं समाप्तं । काश्यां मध्ये संवत् १९११ फाल्गुनमासे कृष्णपक्षे ।

विषयः । हयग्रीवस्य ध्यानध्यानमन्त्रकथनं तत्स्तुतिकीर्त्तनञ्च ।

---

**No. 4092.** हरिद्राचूर्णविधानधारणमाहात्म्यम् । Substance, country-made paper, 12 × 5½ inches. Folia, 3. Lines, 12 on a page. Extent, 48 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, decayed. Verse. Incorrect.

**Haridrá-chúrṇa-vidhána-dháraṇa-máhátmya.** Of sectarial marks with turmeric.

Beginning. श्रीमते रामानुजाय नमः ।

ब्रह्मसंहितायां मुनय ऊचुः ।

किं स्थानमूर्द्धपुण्ड्राणां किं द्रव्यं काश्च देवताः ।

को मन्त्रः किं फलं ब्रह्मन् किं कर्त्तव्यं तदुत्तरम् ॥

ब्रह्मोवाच ।

मत्पुत्रो नारदो योगी पुरा मत्सन्निधौ हरिम् ।

पृष्टवान् परया भक्त्या तदेवाहं ब्रवीमि वः ॥

नारद उवाच ।

वासुदेव जगन्नाथ भगवन् पुरुषोत्तम ।

किं मुख्यं वैष्णवानाम् वैष्णवत्वविधायकम् ॥ इत्यादि ।

End. मदङ्गलेपनं पुण्यं धृत्वा करतले पुनः ।

संप्रोक्ष्य विष्णुगायत्र्या द्वादशा+न वा पुनः ॥

Colophon. इति श्रीब्रह्मसंहितायां श्रीहरिद्राचूर्णविधानधारणमाहात्म्यं समाप्तम् ।

विषयः । हरिद्रारागेण ऊर्द्धपुण्ड्रकरणविधिकथनम् । तन्माहात्म्यादिकथनञ्च ।

---

**No. 4093.** हरितालिकापूजा । Substance, country-made paper, 10 × 4 inches. Folia, 2. Lines, 9 on a page. Extent, 32 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Haritáliká-pújá.** On directions regarding the performance of the Haritáliká.

Beginning. श्रीगणेशाय नमः ।

अथ हरितालिकापूजा लिख्यते ।

विधाय बालुकालिङ्गमर्चयन्तीं महेश्वरम् ।

पूर्णेन्दुवदनां ध्यायेद्धरितालीं शिवप्रियाम् ॥

( ध्यानम् । )

आवाहयामि वरदां हरितालीं शिवप्रियाम् ।

शिवेन सह पूजार्थं सम्यक्सन्निहिता भव ।

उमामहेश्वराभ्यां नमः । आवाहनार्थे अक्षतान् समर्पयामि । इत्यादि ।

End. फलाद्यन्नसमायुक्तं सताम्बूलं सदक्षिणम् ।

वायनं (?) द्विजवर्याय ददामि हरितालिके ॥

वायन(?)मन्त्रः ।

Colophon. इति हरितालिकापूजा समाप्ता ।

विषयः । हरितालिकापूजायामितिकर्त्तव्यताकथनम् ।

---

No. 4094. हरितालिकाव्रतकथा । Substance, country-made paper, 9 × 4½ inches. Folia, 5. Lines, 10 on a page. Extent, 118 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Very incorrect.

**Haritáliká-vrata-kathá.** A legend regarding the origin of the above fast. An extract from the last section of Bhavishya-Puráṇa.

Beginning. वामाङ्के च विभाति भूधरसुता देवापगा मस्तके
भाले बालविधुर्गले च गरलं यस्योरसि व्यालराट् ।
सोऽयं भूतिविभूषणो + + + सर्व्वाधिपः सर्व्वदा
सर्व्वाशापरिपूरकः + × + + श्रीशङ्करः पातु वः ॥
मन्दारमालाकुलितालकायै
कपालमालाङ्कितशेखराय ।
दिगम्बरायै च दिगम्बराय
नमः शिवायै च नमः शिवाय ॥
कैलासशिखरे रम्ये गौरी पृच्छति शङ्करम् ।
गुह्याद्गुह्यतरं लोके कथयस्व महेश्वर ॥ इत्यादि ।

End. यदक्षरपदभ्रष्टं मात्राहीनन्तु यद्भवेत् ।
तत्सर्व्वं क्षम्यतां देव प्रसीद त्वं महेश्वर ॥

Colophon. इति भविष्योत्तरपुराणे उमामहेश्वरसंवादे हरितालिकाव्रतकथा समाप्ता ।

विषयः । शिवाशिवयोः संवादेन हरितालिकाव्रतविधिकथनं । तत्कथाकीर्त्तनञ्च ।

---

No. 4095. हिल्लाजदीपिका, वा हिल्लाजताजिकम् । Substance, country-made paper, 9 × 4 inches. Folia, 11. Lines, 10 on a page. Extent, 110 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

**Hillája-dípiká, or Hillája-tájika.** Astronomical calculations according to Romaka and other astronomers. By Nṛisiṅha Daivajṇa.

Beginning. श्रीगणेशाय नमः । • •

श्रीशाङ्गिधाह्वगिरिशादिकमौलिकोटि

सङ्घट्टिताङ्घ्रिकमलं विमलाङ्गकान्तिं ।

विघ्नौघहृन्दलनं शरणं नराणां

वन्दे गजाननमुमाप्रियसूनुमेकं ।

— — — — ।

श्रीरोमकप्रभृतिखिन्दिककोविदैर्य-

च्छास्त्रे पुरा प्रकथितं किल ताजिकाख्ये ।

हिल्लाजताजिकमिदं प्रकटीकरोमि

गूढार्थतः पृथगिदं न कृतं यदन्यैः ॥

कलियुगे घटते किल ताजिकं

स्मनुभवावपमेमदनाकुलं ।

सुविमलैः सुमनोवरहर्षके-

रविदुषामतिबुद्धिविवृद्धये ॥ इत्यादि ।

End. खिन्दिकादिमतादुक्तं ताजिकं वीक्ष्य यत्नतः ।

हिल्लाजदीपिकां नानाहर्षेय सुगमां स्फुटां ॥

+ + + + + ।

Colophon. इति श्रीनृसिंहदैवज्ञविरचिता हिल्लाजदीपिका समाप्ता ।

विषयः । रोमकमतानुसारेण भावसाधनादिविधिकथनपूर्व्वकं प्रश्नगणनादिप्रकारकथनम् ।

---

**No. 4096.** हिल्लाजताजिकम् । Substance, country-made paper 11 × 4½ inches. Folia, 15. Lines, 9 on a page. Extent, 350 ślokas Character, Nágara. Date, Sm. 1915. Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Very incorrect.

**Hillája-tájika.** On astrological calculations.

Beginning. श्रीगणेशाय नमः ।

वर्षप्रवेशपरत्र्येशचतुर्थो निधनान्तगैः ।

मुन्थेशो यत्र नो+च तद्वर्षे मरणं ध्रुवं (?) ॥

चन्द्रोपाश्रितो(?)रन्ध्रे लग्नेशो+नतोऽस्तगे ।

तद्वर्षे च भवेन्मृत्युः पुत्रनाशधनादिकं ॥ इत्यादि ।

End. वर्षेशे चार्कपुचे मित्रभवनगवे सोचने वाचकेन्द्रे
कर्मेशे वीर्यपूर्क्ते शुभपरचरिते भूपतुल्यं सवंशे ।
मूनं शुत्रोविनाशो विविधसुखकरं पुचपौचादिकच
+ + +भूपार्थलाभं चैकचरचलनं रिपुयोगादिनाशं ।

Colophon. इति श्रीचिन्नाजनातिकं सम्पूर्णम् ।

संवत् १९१५ ।

विषयः । ग्रहाणामुच्चनीचाद्यवस्थानविशेषेण शुभाशुभफलकथनम् ।

---

No. 4097. चित्रमीमांसागूढार्थप्रकाशिका । Substance, country-made paper, 10 × 4½ inches. Folia, 7. Lines, 11 on a page. Extent, 154 slokas. Character, Nágara. Date, Sm. 1840. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Incorrect.

**Chitra-mímáñsá-gúḍártha-prakáśiká.** A commentary on Válkrishna Paigunda's poem called Gúḍárthaprakáśiká.

**Beginning** (प्रथमपत्रं नास्ति ।) इयस्य वाच्यस्य सम्भवः । यदा चाक्षिप्तस्य तस्यैव प्रतीपेऽपि उपमेयस्योपमानत्वकरणेन तदुत्कर्षबुद्धिहत एव चमत्कारः । क्वचिद्वमेव गुणरित्यादौ च चाक्षाचक्षादिनिरस्कार एव सः । इत्यादि ।

**End.** तारावकेषु इति । कचाकेषु इत्यर्थः । शेषं स्फुटमिति शिवम् ॥

**Colophon** इति श्रीमत्पायगुण्डोपाख्यवालकृष्णविरचिता चित्रमीमांसागूढार्थप्रकाशिका परिपूर्णा ।

संवत् । १८४० ।

विषयः । चाप्पयदीक्षितकृतचित्रमीमांसाभिधानालङ्कारसन्दर्भस्य व्याख्यानम् ।

---

No. 4098. कृत्यमञ्जरी । Substance, country-made paper, 10 × 4½ inches. Folia, 65. Lines, 10 on a page. Extent, 600 slokas. Character. Nagara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Kritya-manjarí.** A digest of the Smriti rules regarding Feasts and Fasts during a year. By Vápu Bhatta of Phanasé on the south bank of Krishna in the Saka year 1640.

Beginning. श्रीगणेशाय नमः ।

नत्वा विघ्नहरं देवं व्यासादींश्च मुनीश्वरान् ।
त्रिधा गुरुं महाविष्णुं पार्वत्या सहितं शिवं ॥
आलोच्य बहुशो ग्रन्थान् कौस्तुभादीन् सतां मुदे ।
बापूभट्टेन विदुषा क्रियते कृत्यमञ्जरी ॥
चैत्राद्यमान्तमासेषु सन्ति कृत्यानि भूरिशः ।
चतुर्विधानि तान्याहुर्नित्यत्वादिविभेदतः ॥
करणे तु फलं नोक्तं दोष उक्तो विलोपने ।
तानि नित्यानि वर्षादौ तैलाभ्यङ्गविधिर्यथा ॥
अर्द्धोदयादि योगेषु कृत्यानि विहितानि च ।
नैमित्तिकानि तान्याहुर्ग्रहणादौ च पर्वणि ॥
फलप्रदर्शनं यत्र न लोपे दोषदर्शनं ।
तानि काम्यानि चैत्रादौ प्रपादानविधिर्यथा ॥
— — — — ।

अथ चैत्रशुक्लप्रतिपन्निर्णयः । सा च संवत्सरारम्भे सूर्योदयव्यापिनी ग्राह्या । दिनद्वय तद्व्याप्तावव्याप्तौ वा पूर्व्वैव । इत्यादि ।

End. यमः ।

मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयं । इति ।
सर्व्वं शिवं । इति प्रायश्चित्तानि ॥
समाप्ता च कृत्यमञ्जरी ॥
कृष्णाया दक्षिणे तीरे क्षेत्रे सप्तर्षिसंज्ञके ।
खवेदरसभूशाके मासयोः पौषमाघयोः ॥
केलकारोपनाम्नेयं फणशीग्रामवासिना ।
बापूभट्टेन संक्षेपान्निर्म्मिता कृत्यमञ्जरी ॥
अनया प्रीयतां देवो भगवान् कमलापतिः ।
कृत्यान्येतानि कर्व्वन्तु प्रत्यब्दं भूसुरादयः ॥

Colophon. इति श्रीमच्चित्पावने केलकारोपाभिधमहादेवात्मजबापूभट्टविरचिता कृत्यमञ्जरी समाप्ता ।

विषयः । चान्द्रसौरादिमासेषु कृत्यानां विधिनिरूपणं । तत्र नित्यनैमित्तिकादिलक्षणकथनं । अथ चैत्रशुक्लप्रतिपन्निर्णयः । तत्र संवत्सरारम्भकथनमुखेन तैलाभ्यङ्गस्य नित्यत्वकथनं ।

पश्चाद्भवनादिविधिकथनं । आचारात् प्रद्युम्नपूजादिकथनञ्च । एवंक्रमेण श्रीरामनवम्यादि-विधिकथनं । दोलोत्सवविधिकथनं । दमनारोपविधिकथनं । प्रतिमासं व्यतीपाते सुवर्णदान-विधिकथनं । संक्रान्तिनिर्णयः । प्रतिपदादिषु कुष्माण्डादिभक्षणनिषेधकथनं । अथ वैशाखमास-कृत्यनिरूपणं । तत्र स्नानादिविधिकथनं । अक्षयतृतीयाविधिकथनं । परशुरामजयन्तीविधि कथनं । नृसिंहचतुर्दशीविधिकथनं । एवंक्रमेण ज्यैष्ठादिकृत्यनिरूपणं । अथ आश्विमासकृत्य-निरूपणं । अथ पवित्रारोपणविधिकथनं । पवित्रनिमित्तदोषशान्त्यर्थं प्रायश्चित्तविधिकथनञ्च ।

इति ग्रन्थः ॥

---

**No. 4099** कपिलसूत्रभाष्यम् । Substance, country-made paper, 8½ × 6 inches. Folia, 91. Lines, 17—18 on a page. Extent, 1,195 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Kapilasútra-bháshya.** A commentary on the Aphorisims of the Sáṅkhya system.

ॐ तत्सत् ।

**Beginning.** अथासुरिर्नाम कश्चिद्ब्राह्मणस्त्रिविधेन दुःखेनाभिभूयमानः तस्मात्तं साङ्ख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैरिति । श्रुतिं प्रसृतं कपिलं यत्सप्त ज्ञानैर्बिभर्ति जायमानञ्च पश्येदिति च श्रवणमवगम्य परमर्षिपञ्चमभगवत्कपिलमुपसन्नः शरणं तदुपर्नेदकतत्त्व-जिज्ञासुः । स चोवाच । भगवान् शिष्ययोग्यतां वितर्कयन् साङ्ख्यतत्त्वमात्मानात्मविवेकं द्वाविंशति-सूत्रोक्ताध्यायं चतुष्पादं । तद्याचिख्यासितस्यादिममेतत्सूत्रम् । अथो प्रकृतय इति ।

**End.** एतदिति साङ्ख्यशास्त्रं विवेकप्रोद्बोधकं योगानुशासनमितियावत् । परं यथातथा समुक्तपञ्चविंशतितत्त्वसमाम्नायनिबन्धनं याथातथ्यमित्युपसंहरति जिज्ञासवे शिष्याया-सुरये ज्ञानार्थमन्येभ्योऽपौत्यतः स्यादित्युत्सर्गनियोगः कृत इति ।

इति साङ्ख्यभाष्ये चतुर्थपादः ।

**Colophon.** इति श्रीसाङ्ख्याचार्यकपिलसूत्रभाष्ये प्रथमाध्यायः प्रयोजनसमाख्यो नाम तावत् समाप्तः । •

विषयः । तत्त्वसमासाभिधानसाङ्ख्यसूत्रस्य व्याख्यानम् ।

---

**No. 4100.** कल्पतरुव्याख्या । Substance, country-made paper, 15 × 5 inches. Folia, 51. Lines, 11 on a page. Extent, 2,314 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India, Appearance, fresh. Prose. Incorrect.

**Kalpataru-vyákhyá.** A commentary on the Vedánta Kalpataru.

श्रीगुरुभ्यो नमः ।

**Beginning.** गुरुभिरुपदिष्टमर्थं विस्मृतमपि तत्र बोधितं प्राज्ञैः ।
अवलम्ब्य शिव + + + यथामति व्याकरोमि कल्पतरुं ॥
कल्पतरुमुपकुर्य्यां कमधिकमाकाङ्क्षितार्थमुपहृत्य ।
मद्गिरैवार्थैर्मम मतिमोदं परिष्कर्तुं ॥
यावन्तो निविशन्ते विदुषां व्याख्यानचातुरीभेदाः ।
सर्वेषामयमवकाशं ददाति + + + पुष्पकवत् ॥
इत्यमित्रातिगभीरे कियदाशयवर्णनं मया क्रियते ।
तुष्यन्ति ततो विबुधाः कतिपयरत्नप्रदादिवाम्बुनिधेः ॥

वियदिति । अत्र प्रत्यगिति ब्रह्मविशेषणेन शास्त्रस्य विषयं प्रदर्श्य तत्र सर्व्वेषां वेदान्तानां समन्वयः प्रथमाध्यायार्थः । इत्यादि ।

**End.** स्मृत्यादिभिश्चेति स्मरति । अपि च स वच्चिरभयथापि श्रुतेराचाराच, आचारदर्शनादित्यादिसूत्रे—अतः परं अपिठतम् ।

विषयः । वेदान्तकल्पतरुनामकभामतीटीकाया व्याख्यानम् ।

---

**No. 4101.** गणहोमः । Substance, country-made paper, $8\frac{1}{2} \times 4$ inches. Folia, 8. Lines, 9 on a page. Extent, 109 ślokas. Character Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Gaṇahoma.** A description of Ganahoma according to Baudháyana.

श्रीगणेशाय नमः ।

**Beginning.** पापापनोदकामः पूर्वाह्ने ऽग्न्याग्निं प्रतिष्ठाप्य प्राणानायम्य समस्तपापक्षया-र्थमशेषकर्म्मानुष्ठानयोग्यतासिद्ध्यर्थं च गणहोमं करिष्ये । तत्र सविता देवता अध्वर्युः— इत्यादि ।

**End.** त्वमग्ने अयास्यया सन्मनसाहितः । अयासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा । अग्नये अयसे इदम् ॥

**Colophon.** इति गणहोमः ।

विषयः । बौधायनोक्तविधिना गणहोमविधानकथनम् ।

---

**No. 4102.** वैश्वानर्य्यः । Substance, country-made paper, 8½ × 4 inches. Folia, 3. Lines, 9 on a page. Extent, 50 ślokas. Character Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose. Incorrect.

**Vaiśvánaryya.** Rules regarding Vaiśvánarya sacrifice, according to Baudháyana.

अथ वैश्वानर्य्यः ।

**Beginning.** वैश्वानरो न ऊत्या प्रयातु परावतः । अग्निरुक्थेन वाहसा स्वाहा । अग्नये वैश्वानरायेदं । इत्यादि ।

**End.** कर्म्मान्ते सर्पिःपायसेन ब्राह्मणान् भोजयित्वा तेभ्यो गोहिरण्यादि दत्त्वा पूतः सर्वकर्म्मार्हो भवति । दशपूर्व्वान् दशावरानात्मानञ्च पुनातीत्याह भगवान् बौधायनः ।

**Colophon.** इति वैश्वानर्य्यः समाप्तः ।

विषयः । बौधायनोक्तविधिना वैश्वानर्य्यविधानकथनम् ।

---

**No. 4103.** वृद्धयवनम् । Substance, country-made paper, 10 × 4½ inches. Folia, 110. Lines, 12—13 on a page. Extent, 3,849 ślokas. Character Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, decayed. Verse. Incorrect.

**Briddha-yavana.** A Civil astrology.

**Beginning.** प्रथमतः सप्तपत्रादि न सन्ति ।

नर्वाग्रमिवक्रमटचोपगम्य

स्वभावप्रद्युदिदशा प्रवक्ष्ये ।

च + + + पापफला प्रदिष्टा

द्वाभ्यां फलं वच्मि मतं मुनीनाम् ॥

रवेर्दशायामतितीक्ष्णभोजः

प्राप्नोति मा + + + + + + ।

धनानि चामीकरताम्रसं

सम्प्राप्यते वन्धुसुखं प्रभाणाम् ॥

इत्यादि ।

**End.** सूर्य्यारजीवा अवयन्ति मत्यं

त्वाबेन्द्रमे पञ्चमोविपरीयम् ।

विशालमांसं लपघनभागं
व्यवायिकं कामनिपीड़िताङ्गम् ॥
सूर्य्यारशुक्राष्टमगा मनुष्यं
कुर्वन्ति शौचप्रणयेन हीनम् ।
नितान्तमतिग्रमुग्रप्रभावं
भयाकुलं कीर्तिविवर्जितञ्च ॥ १८ ॥

Colophon. अतः परं खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति ॥

विषयः । आयुर्दायादिनिरूपणं । दशानिरूपणं । अन्तर्दशानिरूपणं । अष्टवर्गफलकथनं । सूर्य्यदर्शनचारकथनं । एवं चन्द्रदर्शनादिचारकथनं । रव्यादिचारकथनं । तनुस्थानादिचिन्तनं । धनस्थानचिन्तनं । सहजस्थानचिन्तनं । बन्धुस्थानचिन्तनं । सुतस्थानचिन्तनं । रिपुस्थानचिन्तनं । कलत्रस्थानचिन्तनं । मृत्युस्थानचिन्तनं । धर्मस्थानचिन्तनं । लाभस्थानचिन्तनं । व्ययस्थानचिन्तनं । लग्नदर्शनचारकथनं । अनफायोगकथनं । सुनफायोगकथनं । दुरुधरायोगकथनं । लग्नाश्रययोगकथनं । धनाश्रययोगकथनं । सहजाश्रययोगकथनं । सुखाश्रययोगकथनं । सुताश्रययोगकथनं । शत्र्वाश्रययोगकथनं । कामाश्रययोगकथनं ।

---

No. 4104. प्रौढ़प्रतापमार्तण्डः वा कालनिर्णयसङ्ग्रहः । Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 44. Lines, 10 on a page. Extent, 1,143 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, decayed. Prose and verse. Correct.

**Praudha-pratápa-mártanda, or Kála-nirnaya-sangraha.** A digest of various Feasts and Fasts. By Pratáprudra.

Beginning. श्रीगणेशाय नमः ।

वन्देऽहं सच्चिदानन्दपरमानन्दमव्ययम् ।
लोकाधीशधराधारमायाखवकविग्रहम् ॥
देशः कश्चिदिहोत्कलोऽस्ति जलधेस्तीरे विशिष्टो महान् ।
यत्रास्तेऽयमुमेश्वरस्त्रिगुणधृद्दारुस्वरूपी हरिः ॥
विप्रेन्द्रा निवसन्ति यत्र सुखिनः स्वाचारसम्पन्नताः ।
कर्मब्रह्मपरायणा दिशि दिशि प्रख्यातसत्कीर्त्तयः ॥
चित्रोत्पलेति सरिन् भाति नदी या जनौघानाम् ।

इति स्मृत्यवमाचनपानैर्दुरितं विनाशयति ॥
गौरे विशिष्टमहिमस्पदवेदिगोष-
शोभाविनिर्जितसुरेन्द्रपुराय तस्याः ।
— — — — — ।
तत्राभूत्कपिलेश्वरो गजपतिः श्रीसूर्यवंशे महान्
उद्यद्भानुसहस्रकान्तिरतुलप्रौढप्रतापोदयः ।
दानेन क्षिपति स्म दैन्यमसकृद्विद्यावतां यः सुह-
च्छूराणां परिपन्थिपार्थिवकुलत् सैन्यस्य वज्रोपमः ॥
महीपतेस्तस्य महानुभावः सुतोऽभवच्छ्रीपुरुषोत्तमाख्यः ।
मान्यः स्वयं विष्णुरिवावतीर्णो गुणैरुदारैरुपलक्ष्य + सुम् ॥
— — — — — ।
तदात्मजन्मा चरितार्थनामा प्रतापरुद्रो जयति क्षितीन्द्रः ॥
औदार्यसौन्दर्यविवेकधैर्यदयानयाद्यामितशौर्यगुण्यः ।
— — — — — — — ।
सोऽयं कृती समयनिर्णयमादरेण न्यायश्रुतिस्मृतियथानुगतं विशिष्टम् ॥
विश्वोपकारहृदयोऽखिलधर्मवित्त्वे श्रीमत्प्रतापनृपतिर्मितमातनोति ॥
हेमाद्रिकृतकल्पद्रुरत्नाकरमिताक्षराः ।
माधवीयानन्तभट्टनिबन्धस्मृतिचन्द्रिकाम् ॥
स्मृत्यर्थसारापरार्कपारिजातादिकांस्तथा ।
कालादर्शं देवदाननिबन्धं परिशिष्टकम् ॥
मन्वादिनिर्मितान् ग्रन्थान् पुराणानि च सर्वशः ।
एतानन्यान् निबन्धांश्च दृष्ट्वा नृपपुरातनान् ॥
श्रीमत्प्रतापरुद्रेण कालनिर्णयसंग्रहः ।
प्रौढप्रतापमार्तण्डसंज्ञकोऽयं विरच्यते ॥

ननु निर्णयो नाम परस्परविरुद्धार्थानां श्रुत्यादिवाक्यानां विरोधपरिहारेणार्थावधारणम् । इत्यादि ।

End. शुभद्रापूजा । एवमभ्यर्चनं कुर्यात् कुमारीणां प्रयत्नतः ।
कञ्चुकैरेव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥

Colophon. नानाविधैर्भक्ष्यभोज्यैः——इतः परं खण्डितम् ।

विषयः । निर्णयस्वरूपादिविवेचनम् । श्रुतिस्मृतिसदाचाराणां प्रामाण्यनिरूपणं । धर्मस्वरूप-

विवेचनं । श्रुत्यादिद्वैधे समाधानादिकथनं । संक्षेपेण ग्रन्थप्रतिपाद्यकथनं । तत्र समयनिरूपणं । दिनविभागकथनं । एकभक्तादिनिर्णयः । प्रतिपन्निरूपणं । संवत्सरारम्भविधिकथनं । तिलकव्रत-निर्णयः । आरोग्यव्रतविधिः । विद्याव्रतविधिः । करवीरव्रतविधिः । मन्वादिव्रतविधिः । सौभव्रत-विधिः । अशोकव्रतविधिः । धान्यव्रतविधिः । द्वितीयानिर्णयः । बालेन्दुव्रतविधिः । नेत्रविधिः । अशून्यशयनव्रतविधिः । आरोग्यव्रतकल्पः । तृतीयानिरूपणं । हिन्दोलकविधिः । गौरीसौभाग्य-शयनविधिः । रम्भाव्रतविधिः । विष्णुस्तुतिव्रतविधिः । कोटीश्वरीव्रतविधिः । उमामहेश्वरव्रत-विधिः । अवियोगव्रतविधिः । रसकल्पादिविधिः । चतुर्थीनिर्णयः । गौरीपूजाविधिः । दूर्वागण-पतिविधिः । सिद्धिगणेशविधिः । चन्द्रदर्शननिर्णयः । नागव्रतविधिः । वरलक्ष्मीचतुर्थीविधिः । गौरीकुष्माण्डाङ्गारकादिव्रतविधिः । पञ्चमीनिर्णयः । श्रयपूजाविधिः । विषापहपञ्चमीविधिः । नाग-पञ्चमीविधिः । शान्तिव्रतविधिः । श्रीपञ्चमीव्रतविधिः । षष्ठीनिर्णयः । कुमारव्रतविधिः । चम्पा-षष्ठीविधिः । कपिलषष्ठीविधिः । कार्त्तिकेयव्रतविधिः । दारिद्र्यहरषष्ठीविधिः । पुत्रषष्ठीविधिः । सप्तमीनिर्णयः । सूर्य्यव्रतविधिः । शर्करासप्तमीविधिः । अमुक्ताभरणादिविधिः । अचलासप्तम्यादि-विधिः । कामदासप्तमीविधिः । कल्याणसप्तमीविधिः । अष्टमीनिर्णयः । अशोकाष्टमीविधिः । जन्माष्टमीजयन्तीव्रतादिविधिः । दूर्वाष्टमीविधिः । महालक्ष्मीव्रतविधिः । दुर्गाष्टमीव्रतविधिः । कुण्डमण्डपनिरूपणं । रुक्मिणीव्रतविधिः । शिवपूजाविधिः । भीष्मतर्पणविधिः । बुधाष्टमीव्रत-विधिः । नवमीनिर्णयः । श्रीरामनवमीनिरूपणं । नित्यत्वकाम्यत्वविचारः । वैशाखनवमीविधिः । दुर्गापूजाविधिः । भद्रकालीव्रतविधिः । रथनवम्यादिविधिः । दशमीनिर्णयः । दशहराविधिः । दशावतारव्रतविधिः । अपराजिताव्रतविधिः । सार्व्वभौमव्रतविधिः । एकादशीनिर्णयः । श्राद्ध-भक्तभोजनादिनियमः । प्रातःकृत्यविधिः । शयनैकादशीविधिः । विजयैकादशीविधिः । प्रबोधन्या-दिनिरूपणं । धरणीव्रतविधिः । द्वादशीनिर्णयः । आमर्दकीविधिः । श्रवणद्वादशीविधिः । वत्सद्वा-दशीविधिः । त्रयोदशीनिर्णयः । कामपूजाविधिः । यमदीपविधिः । प्रदोषव्रतविधिः । शिवव्रत-विधिः । चतुर्दशीनिर्णयः । दमनकविधिः । पवित्रारोपणविधिः । अनन्तव्रतविधिः । दीपोत्सव-विधिः । यमतर्पणविधिः । ब्रह्मव्रतविधिः । कूर्म्मव्रतविधिः । शिवचतुर्दशीव्रतविधिः । पौर्णमासी-निर्णयः । वैशाखीविधिः । एवं कार्त्तिक्यादिविधिः । रक्षाबन्धनविधिः । उपाकर्म्मविधिः । उत्सर्ग-निरूपणं । सावित्रीव्रतविधिः । कोजागरव्रतविधिः । वृषोत्सर्गविधिः । भीष्मपञ्चकविधिः । षट्त्रि-लिकाव्रतविधिः । होलिकोत्सवविधिः । अमावस्यानिर्णयः । सावित्रीव्रतनिर्णयः । सुखरात्रिविधिः । बलिपूजाविधिः । गोक्रीडाविधिः । नीराजनविधिः । अर्द्धोदयव्रतविधिः । ज्येष्ठापूजाव्रतविधिः । रविवारव्रतविधिः । व्यतीपातव्रतविधिः । भद्राव्रतविधिः । नक्षत्रोपवासविधिः । ग्रहणनिर्णयः । संक्रान्तिनिर्णयः । मलमासनिर्णयः । नदीरजोनिर्णयः । प्रथमरजोदर्शने शुभाशुभकथनं । चन्द्र-सूर्य्यविधिकथनं । दर्शश्राद्धविधिः । अपरपक्षश्राद्धविधिः । क्षयाहश्राद्धविधिः । आमश्राद्धविधिः ।

प्रेतबाधविकल्पकथनं। हविनाशविधिः। हविराशादिनिरूपणं। बाधानादिकालनिर्णयः। प्रायश्चित्तविधिः। पुंसवनादिविधिः। प्रबोधकथनं। विष्णुभक्तलक्षणादिकथनं। तुलसीमाहात्म्यकथनं। पुरुषोत्तममाहात्म्यकथनं। शिवशुभलक्षणमाहात्म्यादिकथनं। स्वकृतपापप्रायश्चित्तादिकथनं। कलियुगधर्मकथनञ्च। इति शम्।

(1110 L.N.)

---

**No. 4105.** अनेकार्थकोषः। Substance, country-made paper, 11½ × 7 inches. Folia, 51. Lines, 21—23 on a page. Extent, 8,068 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Generally correct.

**Anekártha-kośa.** A standard Dictionary of Synonyms and Antonyms in Sanskrit.

**Beginning.** श्रीगणेशाय नमः।

पातु वोऽखिलरं (?) दूरविकीर्णकरशीकरः।
दुःखबीजच्छिदे यस्य करको इव विघ्नजित्॥
विषमपदविषयराशौ निपत्य सत्त्वा शेषविविधभेदात्।
सकलजनसुखभविभवाम् कथम निर्मत्सरः कुरुते॥
भागुरिकात्यवरुचियुगधदुर्गामरसिंहशाश्वतादिकृताम्।
कोषान् निरीक्ष्य निपुणं धन्वन्तरिनिर्मितं निघण्टुच॥
लिङ्गानुशासनानि च विचार्य सम्यं महाकवीनाञ्च।
कुरुतेऽनेकार्थानां शब्दानां मङ्खकः कोषम्॥
यथासम्भवमाद्यादिक्रमादक्षरसंख्यया।
करामलकवत् साधादेव भासिष्यते सताम्॥
— — — — — — ।
को वायकालभावेषु कं शिरोऽम्बुसुखेषु तु।
रक्षाकराः। इत्यादि।

**End.** शिरोऽन्तिके शितेऽर्थे शिखोऽन्योन्यं रहस्यपि।
अव्ययाकाशयोः प्रादुरवोपुष्पविकारयोः॥
मनं सुखमथ॥

**Colophon.** इति नानाः॥

**Subject.** रत्नाकरादिक्रमेण ककारादिशब्दानामनेकार्थकथनम्।

---

**No. 4106.** कुण्डमण्डपसिद्धिर्वा कुण्डसिद्धिः, व्याख्यासहिता। Substance, country-made paper, 10 × 4 inches. Folia, 31. Lines, 9 on a page. Extent, 721 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Kuṇḍa-maṇḍapa-siddhi, or Kuṇḍa-siddhi, Vyákhyá-sahita.** Some Sáma hymns designed for reading on altars, with explanations. By Biṭṭhala Díkshita.

मूलम्।

**Beginning.** मार्कण्डमनेकभागजठरे राजत्कलाधारिणि
प्रोद्यत्पक्षपरीगुणं दरदलमध्ये + चीराचितिः।
सर्वाङ्गगिरिद्वयाधरचरी दीना कचिन्त्यात्मना
पञ्चास्यार्थमिदं शिवामिति वदन् स्मरः शिवः पातु वः॥
लब्धाभिधाने नितरां पवित्रे पवित्रकर्माजनि पूर्वसर्गा।
ततूजुना विठ्ठलदीक्षितेन विरच्यते मण्डपकुण्डसिद्धिः॥
तसोऽर्द्धवाचोः समभूमतस्य कर्णुः मरांशप्रपदोक्तितस्य।
यो वा स पश्चोऽस्य शिवांशकोऽपि व्याहरणं तच दिशांशकाये (?)॥ इत्यादि।
टीकायाः।
श्रीगणेशाय नमः।
मतमतङ्गजवदनं वाञ्छितविघ्नावलीपदनं
गौरीश्वरयोः स्तोकं पालितलोकं सदाहमे॥१॥
कल्याणि वाणि निजपाणिसरोजयुग्मं संयोज्य देवि करवाणि तव प्रणामं।
मगणमणगणसण्डमहरं ते वन्याय नित्यमिदमस्तु रसानुषिक्तं॥२॥
सन्ताननसदवमण्डपमण्डितायां कुण्डोत्सवलनकाननवेदिकायां।
श्रीतारणूपकराकलितैकपाणिर्विनायकोमयमये दिशताङ्कुभाति॥
कुण्डमण्डपसिद्धेर्विवृतिं विविनोक्तिषु।
प्राचीनवाक्यसन्दर्भं सन्दर्शयितुमारभे॥

इत्यमति शिष्टाः प्रन्थारम्भे खेष्टदेवतास्मरणमाशीरूपं मङ्गलमाचरन्ति। तदाचारमनुसिद्धीयो विठ्ठलमतो कुण्डसिद्धिं चिकीर्षुः खेष्टदेवतास्मरणमाशीरूपं मङ्गलमाचरति शार्दूलविक्रीडितेन मार्कमिति। स्मरः स्वाराः शिवः वो युष्मान् पातु रक्षतु। इत्यादि।

मूलम्।

**End.** इति मण्डपकुण्डसिद्धिमेतां व्यचिरां विठ्ठलदीक्षितो व्यधत।
पठिकाभिनरार्धमेसतुष्टै विबुधः शोधयतादिमां विचार्य॥

अग्निर्मुनिनिधिगणे + ०× । माघे वरेण्ये

विभवतरदिह रम्ये मासि शुक्ले तपस्ये ।

प्रमदरथतिरद्ये पुण्यपक्षे च लग्ने

कमलनयनविश्वां भार्गवप्रह्नारवत्यां ॥

टीकायाः ।

अथ नेति पूर्वश्लोकेनान्वयः ।

अन्ये परोक्षे मम दूषणोक्त्या किं वा मुखोक्त्या विदुषा विचार्य्य ।

अन्ये मदुक्ते सदसद्विमोध्यं सर्वस्तु सर्वं न हि वेद कश्चित् ॥

अत्रैकार्य्या मत्कृतिर्निर्म्मलेयं कस्मादेवं पण्डितान् प्रार्थयेऽहं ।

क्षीरं पेयं नीरमेतद्विहाय को वा विज्ञं हंसमभ्यर्थयेत ॥

**Colophon.** इति शङ्करभवेरन्वयविवृहद्दीक्षितविरचिता सकलकुण्डसिद्धिव्याख्या समाप्ता ।

मूलस्य विषयः । मण्डपकुण्डयोर्निर्म्माणविधिकथनमुखेन हस्तादिमानपरिभाषाकीर्त्तनं । तत्र प्राचीसाधनविधिकथनं । शङ्कुस्थलादिसाधनविधिकथनं । एवं प्रतीच्यादिसाधनविधिकथनं । आयमण्डपपरिमाणादिकथनं । तत्र द्वारमानकथनं । वेदिमानकथनञ्च । तुलापुरुषादौ विशेषकथनं । निवेशनविधिकथनं । स्तम्भोपरिकाष्ठनिवेशनविधिकथनं । मण्डपच्छादनविधिकथनं । तोरणादि-विधिकथनं । पताकादिनिवेशनविधिकथनं । ध्वजादिनिवेशनविधिकथनं । कुण्डनिवेशनविधि-कथनं । कर्म्मविशेषे कुण्डविशेषविधिकथनं । कुण्डनिर्म्माणविधिकथनं । तत्र योनयुक्तासनादिविधि-कथनं । खातखननादिकथनं । मेखलादिविधिकथनं । अथ कुण्डकरणासमर्थो स्थण्डिलविधि-कथनञ्च ।

**टीकाया विषयः ।** निखिलकुण्डसिद्धिमानवसम्भेदस्य व्याख्यानम् ।

इति ग्रन्थ ।

---

**No. 4107. कुष्माण्डहोमः ।** Substance, country-made paper, $8\frac{1}{2} \times 4$ inches. Folia, 8. Lines, 9 on a page. Extent, 153 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Kushmáṇḍa-homa.** On a fire-offering with pumpkins as directed by Bodháyana.

**Beginning.** श्रीगणेशाय नमः ॥

एकुष्माण्डयं वाक्यं अरुणामायर्वेदैः क्रमात् ।

तत्र बौधायनं वाक्यं मरूयादिभिराहृतम् ॥

अथाग्नीनाधास्यमानः सर्वदुरितक्षयकामः सर्वप्रायश्चित्तरूपकूष्माण्डैर्जुहुयात् । अमावास्यायां पौर्णमास्यां वोपक्रमः । इत्यादि ।

End. अग्न्याधेये पूर्णाहुतिं हुत्वा कूष्माण्डैर्जुहुयात् ॥

पूतो देवलोकान् समश्नुते इति ब्राह्मणं ॥

Colophon. इति कूष्माण्डहोमः ॥

विषयः । बौधायनोक्तविधिना कूष्माण्डहोमविधिकथनम् ।

---

No. 4108. कोकिलाव्रतम् । Substance, country-made paper, 10 × 4½ inches. Folia, 8. Lines, 10—11 on a page Extent, 225 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse. Incorrect.

**Kokilá-vrata.** On the Kokilávrata as described in the Varáhapuráṇa.

Beginning. श्रीः ।

आषाढ़पौर्णमास्यामारभ्यं कोकिलाव्रतं । तदुक्तं हेमाद्रौ भविष्ये । आषाढ़पौर्णमास्यान्तु सन्ध्याकाले ह्युपस्थिते । संकल्पयेन्मासमेकं श्रावणे प्रत्यहं × हं । स्नानं करिष्ये नियता ब्रह्मचर्य्यस्थिता सती । भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयामिति । अस्य नक्तव्रतत्वात् सायाह्नव्यापिनी ग्राह्या । इत्यादि ।

End. न च तारावलं चन्द्रो न मौढ्यं गुरुशुक्रयोः ।

कुयोगदर्शनं नास्ति कोकिलाया व्रते शुभे ॥

Colophon. इति कोकिलाव्रतं ।

विषयः । वराहपुराणानुसारेण कोकिलाव्रतविधिकथनं । तत्र व्रतकालादिकीर्त्तनञ्च । तथा नारदीयपुराणानुसारेण तदुद्यापनविधिकथनञ्च ।

---

No. 4109. कालनिर्णयचन्द्रिका । Substance, country-made paper, 10 × 5 inches. Folia, 142. Lines, 12 on a page. Extent, 3,821 ślokas. Character, Nágara. Date, Sm. 1816. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Generally correct.

**Kálanirṇaya-chandriká.** The division of time for religious ceremonies.

Beginning. श्रीमद्गणाधिपतये नमः ।

अथ चान्द्रसावनसंवत्सरनिर्णयः । तत्र बृहस्पतिवाक्यं । चान्द्रसावनसौराणां मासानान्तु प्रभेदतः । चान्द्रसावनसौरास्तु त्रयः संवत्सरा अपीति शुक्लप्रतिपदादिदर्शान्त एव चान्द्रो मासः । पुनरेकया

षिंशद्दिनात्मकः सावनः। एकस्मिन् राशौ सूर्यो यावत्कालं तिष्ठति स सौरः। अतएवोक्तं श्रीव। चान्द्रः प्रथमादिदर्शान्तः सावनः त्रिंशता दिनैः। एकराशौ रविर्यावत्कालं मासः स भास्करः। इति।

End. तथा च मृत्युमारेषु।
प्रवासाश्लेषयोगेषु मातुर्मासान्तरेषु च।
सौरिके च तथान्येषु मूढदोषो न लभ्यते।

Colophon. इति मिश्रपद्मनाभात्मजश्रीरामदत्तविरचिता कालनिर्णयचन्द्रिका समाप्ता।
संवत् १८१९।

विषयः। चान्द्रसावनसौरसंवत्सरनिरूपणं। विवाहादौ सौरादिमासव्यवस्थाकथनं। मलमासनिर्णयः। एवमृतुमासादिनिरूपणं। तत्र अधिमासक्षयमासनिरूपणं। तत्र तत्र कर्तव्याकर्तव्यनिरूपणं। मलमासे यदुक्तं तद्गुरुशुक्रयोरस्तादिष्वपि वर्ज्यमिति कथनं। गुरुशुक्रयोर्बाल्यादिलक्षणकथनं। तिथ्यादिनिरूपणं। कालविभागकथनं। तत्र प्रथमादिलक्षणं। चन्द्राबलनिरूपणं। एकभक्तनिर्णयः। नक्तादिविधिकथनं। अयाचितकालनिरूपणं। उपवासनिर्णयः। प्रतिपदादिनिरूपणं। देवीपूजनविधिकथनप्रसङ्गेन आश्विनशुक्लप्रतिपदादिविधिकथनं। द्वितीयादिषु कृत्यविधिकथनं। अथ यात्राविषये इष्टकालनिरूपणं। तत्र अग्निपरिग्रहणविधिकथनं। अथ श्राद्धकालनिरूपणं। पितृपितामहादिनिरूपणं। नित्यश्राद्धविधिकथनं। मन्वन्तरादिनिरूपणं। युगाद्यानिरूपणं। संक्रान्तिनिरूपणं। व्यतीपातवैधृतिनिरूपणं। महालयनिरूपणं। जीवत्यपि मातुले दौहित्रकृतमातामहश्राद्धविधिकथनं। श्राद्धाङ्गतर्पणविधिकथनं। पितृदानलक्षणादिनिरूपणं। अष्टकान्वष्टकाकालनिरूपणं। पार्वणश्राद्धविधिकथनं। मघाकालनिरूपणं। प्रत्याब्दिकश्राद्धादिकालनिरूपणम्। इष्टिश्राद्धविधिकथनं। गर्भाधानविधिकथनं। एकोद्दिष्टश्राद्धविधिकथनं। अथ चूडाकर्मयोगकथनं। अथ समुद्रस्नानकालकथनं। अथ अर्धोदययोगकथनं। कपिलाषष्ठीयोगकथनं। अन्यावष्ठीयोगकथनं। गजच्छायादिकथनञ्च।

इति शम्॥

---

No. 4110. कल्पद्रुकलिका। Substance, country-made paper, 11 × 4½ inches. Folia, 181. Lines, 13 on a page. Extent, 6,142 ślokas. Character, Nágara. Date, Sm. 1860. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Generally correct.

**Kalpadru-kaliká**. On days suited for particular ceremonies. An explanation of the Jain Kalpasútra.

**Beginning.** श्रीगुरुभ्यो नमः।
श्रीवर्धमानस्य जिनेश्वरस्य जयन्तु सद्गुणसुधाप्रवाहाः।

येषां श्रुतिस्मरणमात्रतोऽपि नभेयुर्भवेयुर्विमलात्मभावः ॥
श्रीगौतमो गणधरः प्रकटप्रभावः सल्लब्धिसिद्धिनिधिरञ्चितवाक्प्रबन्धः ।
विघ्नान्धकारहरणे तरणिप्रकाशः साहाय्यकृद्भवतु मे जिनवीरशिष्यः ॥
कल्पद्रुकल्पसूत्रस्य सदर्थफलहेतवे ।
चतुराणेव सद्योग्या कलिकेयं प्रकाश्यते ॥

श्रीकल्पसूत्रस्य गम्भीरार्थस्य श्रीगुरुप्रसादात् अर्थः क्रियते । यथा चैत्रमासे कोकिला मधुरं वक्ति, तत्र सहकारमञ्जरी कारणं । यत्र रजः सूर्यमण्डलमाच्छादयति, तत्र पवनस्य माहात्म्यं । यत्र मण्डूको महाभुजङ्गमस्य वदनं चुम्बति, तत्र मणेः प्रभावः — — — —
तत्रादौ श्रीकल्पसिद्धान्तस्य अधिकारत्रयवाचिकेयं गाथा, पुरिमेति । प्रथमतीर्थङ्करचरमतीर्थङ्करयोरित्यादि ।

End. आज्ञां कुर्व्वतां सतां श्रेयः कल्याणं सर्व्वदा भवतु । इति श्रीकल्पकल्पद्रुकलिकायां साधुसामाचारीव्याख्यानं सम्पूर्णम् ।

श्रीकल्पसूत्रवरनामसदागमस्य गूढार्थभावखचितस्य मनोहरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य व्याख्यानमाप नवमं परिपूर्त्तिभावम् ॥
श्रीमज्जिनादिकुशलः कुशलस्य कर्त्ता गच्छे बृहत्खरतरे गुरुराड्बभूव ।
शिष्यश्च तस्य सकलागमतत्त्वदर्शी श्रीपाठकः कविवरो विनयप्रभोऽभूत् ॥
विजय तिलकनामा पाठकस्तस्य शिष्यो
भुवनविदितकीर्त्तिर्वाचकः क्षेमकीर्त्तिः ।
प्रचुरविहितशिष्यः प्र×ता तस्य शाखा
सकलजगति जाता क्षेमधाडी ततोऽभौ ॥
पाठको च तपोरत्नतेजोराजौ ततोऽवरौ ।
भुवनादिमकीर्त्तिश्च वाचको विशदप्रभः ॥
सद्वाचकोऽभवदशेषगुणाम्बुराशि-
र्हर्षादिकुञ्जरगणिर्गुणतान्वितश्च ।
श्रीलब्धिमण्डनगणिर्वरवाचकश्च
सद्बोधसान्द्रहृदयः सुहृदां वरेण्यः ॥
लक्ष्मीकीर्त्तिः पाठकः पुण्यमूर्त्ति-
र्भास्वत्कीर्त्तिर्भूरिभाग्योदयश्रीः ।
शिष्यो लक्ष्मीवल्लभस्तस्य रम्यां
वृत्तिं चक्रे कल्पसूत्रस्य चैताम् ॥

Colophon. इति श्रीकल्पसूत्रकल्पसूत्रकल्पद्रुकलिकायां लक्ष्मीवल्लभविरचितायां नवमं व्याख्यानं सम्पूर्णम् । संवत् १८९० ।

विषयः । जैनकल्पसूत्रस्य व्याख्यानम् ।

---

No. 4111. कुण्डमण्डपे पश्चिमद्वारसामानि । Substance, country-made paper, 8 × $3\frac{1}{2}$ inches. Folia, 10. Lines, 8 on a page. Extent, 112 ślokas Character. Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Correct.

**Kuṇḍa-maṇḍape-paśchima-dvárasáma.** Sáma hymns appropriate to the western gate of an altar.

**Beginning.** श्रीगणेशाय नमः ।

अथ कुण्डमण्डपे पश्चिमद्वारसामानि ।

ॐ । उद्गु इष्मो वा नूतमा १ १ ४ वाम् ।

वहभं मा । रिया १ पा १ १ ४ षाम् ॥ इत्यादि ।

**End.** श्योतो वा १ १ वाउ । वा । वमा मवद्भिर्भुवनेषु

**Colophon.** चक्रदत् ॥ इठ । इवा १ १ ४ ५ ॥ ॥

विषयः । तुलापुरुषादौ कुण्डमण्डपस्य पश्चिमद्वारि स्थितस्य उद्गातुः पठनीयसामकथनम् ।

---

No. 4112. सूर्यसहस्रनामस्तोत्रं । Substance, country-made paper, $6\frac{1}{4}$ × $3\frac{1}{2}$ inches. Folia, 11. Lines, 8 on a page. Extent, 120 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Correct.

**Súryya-sahasranáma-stotra** A hymn in praise of the god Suryya in 1000 epithets. An extract from the Bhavishyotara puráṇa.

**Beginning.** श्रीगणेशाय नमः ॥

विश्वविद्विश्वजित् कर्त्ता विश्वात्मा विश्वतोमुखः ।

विश्वेश्वरो विश्वयोनिर्नियतात्मा जितेन्द्रियः ॥

कालाश्रयः कालकर्त्ता कालहा कालनाशनः ।

महायोगी महाबुद्धिर्महात्मा सुमहाबलः ॥

**End.** चिरञ्जीवी मार्त्तण्डमिहिरातपनो (मिहिरात्पनो) रविः ।

तमिस्रहन्ता सुभगो गोपतिः श्रीपतिर्विभुः ॥

Colophon. इति पार्षदे लक्षणग्रन्थे षष्ठे पटले तृतीयोऽध्यायः । समाप्तमेतत्परिशिष्टम् । संवत् १९८१ वर्षे । शाके १५५८ ।

विषयः । ऋचां लक्षणादिनिरूपणम् । तत्र वर्णराशिक्रमकथनम् । तेषामुच्चारणस्थानादि-कथनम् । प्रगृह्यादिपरिभाषाकथनम् । संहितापदप्रकृत्यादिनिरूपणम् । स्पर्शघोषादिनिरूपणम् । द्वित्वादिनिरूपणम् । क्रमादिनिरूपणम् । पारायणविधिकथनम् । छन्द आदिनिरूपणम् । इति शम् ॥

---

**No. 4191.** पुरुषसूक्ताराधनविधिः । Substance, country-made paper, 11 × 4 inches. Folia, 1. Lines, 13 on a page. Extent, 55 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Correct.

**Purusha-súktárádhana-vidhi.** This is a portion of the Bridad Brahma Samhitá. It treats of the method of worshipping the Purusha Súkta and of the merit to be derived from its recital.

**Beginning.** श्रीगणेशाय नमः ।

वत्स उवाच ।

विधिं पुरुषसूक्तस्य समाराधनवर्त्मना ।
वक्तुमर्हथ नो यूयं कृपाङ्कुरितचेतसः ॥

ते ऊचुः ।

नारायणोऽस्य सूक्तस्य कर्ता वक्ता पिता स्वयम् ।
तथापि चाभिधास्यामः शृणुतामेकचेतसा ॥
सम्प्राप्य चार्थतो मन्त्रं श्रीमदष्टाक्षरं परम् ।
विधिना पौरुषं सूक्तं गृह्णीयात्परमादरात् ॥
षडाद्यगर्ष्यर्पितं प्रणवाद्यं हरिप्रियम् ।
सूक्तं नारायणोक्तं तस्याराधनसिद्धये ॥ इत्यादि ।

**End.** सूक्तं प्रजपतां चात्र ग्रतीयुर्नः ग्रतं समाः ॥
श्रीवत्सो विष्णुधर्मा च सम्प्राप्यानेककारणम् ।
प्रणिपत्योत्थितौ तावन्नारायणमपश्यताम् ॥

Colophon. इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते पुरुषसूक्ताराधनविधिर्नाम द्वादशोऽध्यायः ॥

विषयः । ऋषीणां राज्ञे श्रीवत्साय पुरुषसूक्ताराधनविधिकथनम् । श्रीसूक्तपाठादिमाहात्म्यकीर्तनञ्च ।

---

**No. 4192.** पक्षहोमविधिः। Substance, country-made paper, 9 x 4 inches. Folia, 1. Lines, 23 ślokas. Character, Nágara. Date ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and Verse. Incorrect.

**Paksha-homa-vidhi** The method of performing the Paksha-homa for the purpose of removing all sorts of dangers and difficulties.

**Beginning.** श्रीगणेशाय नमः।

ॐ पक्षहोमविधिः। अथाशक्तेन सूतकादिविघ्नसम्भवे पक्षहोमः कार्य्यः। तदाह मरीचिः।

शरीरापाटवं यस्य भयाद्वार्त्तिः प्रजायते।

तथान्यास्वपि चापत्सु पक्षहोमो विधीयते॥

कृतपक्षहोमस्य चापन्निवृत्तौ स एवाह।

पक्षहोमं तथा कृत्वा मध्ये तस्माद्विवर्जितः।

होमं पुनः प्रकुर्य्याच्चेत्तदा दोषो न विद्यते—इति। इत्यादि।

**End.** उत्तमोऽग्निष्टुतः कुण्डे चात्मरं पश्च मध्यम।

समिदारोपणञ्चान्त्यमस्मात्कुर्य्य विचारयेत्॥

**Colophon.** इति पक्षहोमविधिः समाप्तः॥

विषयः। सर्व्वापत्क्षयकामेन पक्षहोमः कार्य्य इति तद्विधानकथनम्॥

---

**No 4193.** पञ्चक्रोशीमाहात्म्यम्। Substance, country-made paper, 12 x 5 inches. Folia, 9. Lines, 16 on a page. Extent, 394 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Pancha-krosí máhátmya** On the spiritual benefit to be derived by a residence within the area of five krośas or the holy area of Benares.

**Beginning.** श्रीविश्वेश्वरो विजयते।

श्रीदेव्युवाच।

देवदेव महादेव भक्तानामभयप्रद।

काशीवासः सुगमनः पापिनां धनलोभिनाम्॥

विषयासक्तमनसां न सुखाय कदाचन।

सुखाय सर्व्वलोकानां प्रवृत्तिः कथिता कथं॥

विषयैः परितुष्टानां जीवनं मान्यथा भवेत्।

प्रायश्चित्तान्तरं देव वदस्व यदि मन्यसे ॥
प्रायश्चित्तविहीनस्य यातना जायते ध्रुवम् ॥
बिभेमि दीनान् मनुजान् दृष्ट्वा शास्त्रपराङ्मुखान् ॥
मानपुष्कर देवेश शठान् स्वेच्छापरिग्रहान् ।

श्रीमहादेव उवाच ।

साधु पृष्टं त्वया देवि सर्वपापक्षतां नृणाम् ।
निस्तारः स्याद् यथा सद्यः प्रायश्चित्तेन येन हि ॥
प्रायश्चित्तविहीनानां यातना बहुदुःखदा ।
तस्मात् सर्व्वप्रयत्नेन प्रायश्चित्तं समाचरेत् ॥ इत्यादि ।

End. अविमुक्तं समासाद्य न त्यजेन्मोक्षकामुकः ।
क्षेत्रन्यासं दृढं कृत्वा वसेद्धर्म्मपरः सदा ॥
क्षेत्रन्यासपराणान्तु सम्यगनुगतात्मभिः ।
भार्गैः समागतां यान्ति द्विजाद्याः परमां गतिम् ॥
यथा पतिव्रता नारी भर्त्तारमनुगच्छति ।
तथा सा समतात्मा काशीमनुगतोभवेत् ॥
गुरुद्रोहपरोयस्तु + + द्रोहपरस्तथा ।
न तस्य काशी सिध्येत बहुभिः साधनैर्युता ॥
एवमष्टाशितनामेव क्रमः प्रोक्तो मयानघे ।
प्रदक्षिणायास्तु सदा सर्व्वपापघ्नः परः (?) ॥

Colophon इति श्रीब्रह्मवैवर्त्ते पञ्चक्रोशीमाहात्म्ये चतुर्थोऽध्यायः ॥

विषयः । पञ्चक्रोशीप्रदक्षिणविधिकथनमुखेन काशीमाहात्म्यादिकथनम् ।

---

**No. 4194** पर्य्यङ्कशौचविधिः । Substance, country-made paper. 9 × 4 inches Folia, 6 Lines 9 on a page. Extent, 88 ślokas. Character, Nágara Date, Sk 1750. Place of deposit, Calcutta, Government of India, Appearance, fresh. Prose and Verse. Generally correct

**Paryyaṅk-śaucha-viddhi** Method of performing the ceremony of renouncing the world, of holding the holy rod and of similar subjects.

**Beginning.** श्रीगणेशाय नमः ।

ॐ भूः सावित्रीं प्रविशयामि ॥ तत् सवितुर्वरेण्यं । ॐ भुवः सावित्रीं प्रविशयामि । भर्गो-

देवस्य धीमहि । ॐ स्वः सावित्रीं प्रविशयामि । धियो यो नः प्रचोदयात् ॥ ॐ भूर्भुवः स्वः सावित्रीं प्रविशयामि । सन्ध्यां गायत्रीं जपेत् । इत्यादि ।

**End** ततो गुरुणा विधिन्यासपूर्वकं शङ्खेन शिष्यशिरसि अभिषेकं कृत्वा वस्त्र-गन्ध-माल्य-धूप-दीपादि-नानाविध नैवेद्यैः संपूज्य स्तोत्राणि पठेत् ॥

**Colophon.** इति पर्य्यङ्कशौचविधिः समाप्तः ।

विषयः । सन्न्यासग्रहणविधिकथनम् । तत्र दण्डग्रहणकथनम् । तत्प्रयोगकौर्मञ्च ।

---

**No. 4195.** पूर्त्तप्रकाशः । (प्रतापनारसिंहः ।) Substance, country-made paper, 12 × 3¾ inches. Folia, 126. Lines, 7 on a page. Extent, 1,476 ślokas. Character, Nágara. Date, Sk 1731. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and Verse. Incorrect.

**Púrtta-prakáśa.** (Pratápa-nárasinha) by Rudradeva. This forms one of the books of the series entitled Pratápa Nárasinha mentioned in No. 4185? It treats of the ceremonies for the purpose of, consecrating tanks, wells, gardens, temples and so on. The writer was a resident of Pratisthápanapura (Allahabad (?) )

**Beginning.** श्रीगणेशाय नमः ।

नारसिंहं नमस्कृत्य गुरूंश्चैव विशेषतः ।
भारद्वाजकुलोत्पन्नस्तोरोनारायणात्मजः ॥
नाम्ना वै रुद्रदेवस्तु श्रीनृसिंहदयान्वितः ।
प्रतापनारसिंहाख्यं वक्ष्ये पूर्त्तप्रकाशकम् ॥

पूर्त्तमिति कर्मनामधेयम् । बौधायनेन सेतुबन्ध-नदी-खात-तड़ाग-पुष्करिणी-वापी-कूप-देवगृह-प्रासाद-वसतीनारोपधिवनस्पतीनाञ्च पूर्त्तं भवतीति पूर्त्तत्वनाभिधानात् । तथा श्रीमन्नैमिषारण्यवासिरामचन्द्रेण स्वकृतकुण्डश्लोकदीपिकायामिष्टापूर्त्तश्चेति प्रथमश्लोकव्याख्यायाम् इष्टं यागादि पूर्त्तं वापीकूपतडागारामादीति व्याख्यातत्वाच्च । इत्यादि ।

**End.** इति पूर्त्तप्रकाशे अध्यायादिप्रमाणम् ।

तोरोनारायणसुतो रुद्रदेवो महासुधीः ।
ग्रन्थाननेकान् संवीक्ष्य सारमुद्धृत्य यत्नतः ॥
प्रतापनारसिंहाख्ये ग्रन्थे पूर्त्तप्रकाशकम् ।
समाप्तमकरोत् तत्र विदुषां प्रीतये सदा ॥

बालानां सुलभो + + प्रयोगोऽयं निरूपितः ।
चन्द्रदेवेन च श्रीमान्‌ल्हसिंहः प्रीयतामिति ॥

**Colophon.** इति प्रतिष्ठापन-पुरवासि-तोरोनारायणात्मज-चन्द्रदेवेन कृते प्रतापनारसिंहाख्ये पूर्त्तप्रकाशः समाप्तः । शाके १७११ ।

विषयः । पूर्त्तलक्षणादिकथनम् । पूर्त्तनिर्म्माणादिफलकथनम् । सेत्वादीनां विनष्टानां पुनःकरणे फलश्रुतिकथनम् । विशेषेण जलाशयप्रशंसाकीर्त्तनम् । कूपादिनिर्म्माणविधिकथनम् । वाप्यादिलक्षणकथनम् । जलाशयारम्भकालादिनिरूपणम् । तदुत्सर्गकालकथनम् । जलाशयशुद्धिविधिकथनम् । शवादिसंस्पृष्टकूपादिजलपानप्रायश्चित्तकथनम् । वाप्यादिभेदन-प्रायश्चित्तकथनम् । जलाशयाद्युत्सर्गविधिकथनम् । तत्र वारुणमण्डलादिविधिकथनम् । बौधायनोक्तप्रकारेण जलाशयोत्सर्गप्रयोगकथनम् । । वरुणार्च्चा तत्र विशेषकथनम् । आरामोत्सर्गप्रयोगादिकथनम् । अश्वत्थ पत्तनप्रयोगादिकथनम् । देवतायतनाद्युत्सर्गप्रयोगकथनम् । देवमूर्त्तिप्रतिष्ठाप्रयोगकथनम् । शालग्रामलक्षणादिकथनम् । शिवलिङ्गलक्षणादिकथनम् । चलार्च्चास्थापनविधिकथनम् । इति शम् ।

---

**No. 4196** नन्दिसूत्तं । वा नन्द्यध्ययनसूत्रम् । Substance, country made paper, 13 × 5 inches. Folia, 19. Lines, 13 on a page. Extent, 741 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and Verse. Incorrect.

**Nandi-sútta, or Nandyadhyayana-súttra.** In Jaina Prákrit. Doing good to others is the result of purity of mind. One can do good in two ways (1) by gifts and (2) by advice. Gifts may produce bad results but teaching the doctrines of Jina can never do so. The religion of Jina promises merit to those who read its scriptures and also to those who reform their characters according to its dictates. Those again can reform their characters who have virtue and excellence, and who attentively read the Jaina scriptures.

**Beginning.** ॐ नमः श्रीपञ्चपरमेष्ठिभ्यः ।

जयइ जगजीवजोणीवियाणओ जगगुरू जगाणन्दो ।
जगणाहो जगबंधू जयइ जगप्पियामहो भयवम् ॥
जयसुयाणं पभवो तित्थयराणं अपच्छिमो जयइ ।
जयइ गुरुलोगाणं जयइ महप्पा महावीरः ॥
भद्दं सव्वजगज्जोयगस्सं भद्दं जिणस्स वीरस्स ।
भद्दं सुरासुरनमं सियस्स भद्दं धुयरयस्स ॥

गुणगणरयणभवणसुयरयणभरियदंसणविसुद्धरत्थागा ।
संघनगर भद्दं ते अक्खंडं चरित्तपागारा ॥
इत्यादि ।

End. आदिकर पुरिम तालेय चरित्तियात्तसभसेणस्स ।
अणुसा उसभसेणसेणसेणसेणायरणाए ॥
भावोपभावणं पदारोप तदुभय त्ति यं मञ्छाणा ।
पणात्तमपोय कप्पोय सम्बरच निञ्छार ॥

Colophon — — — — — पदौ समत्तो । शुभम् ॥

विषयः । अथ परमानन्दरूपश्रेयःपदमधिरोढुकामेन तद्वाप्तये स्वपरसमानभावेन परोपकाराय यतितव्यम् । तत्रापि सत्त्वानामाशयविशुद्धौ परोपकृतिः कर्त्तुं शक्यते इत्याशयविशुद्धिप्रकर्षसम्पादनाय विशेषतः परोपकारे यत्न आस्थेयः । परोपकारश्च द्विधा । द्रव्यतो भावतश्च । ततो द्रव्यता विविधान्नपानधनकाञ्चनादिप्रदानजनितः । स चानैकान्तिकः । कदाचित् ततो विसूचिकादिदोषसम्भवः । प्रकृतोपकारासम्भवात् किंयत्कालमात्रस्थायित्वाच्च । भावतो जिनप्रणीतधर्मसम्पादनजनितः । स चैकान्तिकः । कदाचिदपि ततो दोषासम्भवात् । आत्यन्तिकश्च । परम्परया शाश्वतिकमोक्षसौख्यसम्पादकत्वात् । जिनप्रणीतोऽपि धर्मो द्विधा । श्रुतधर्मश्चारित्रधर्मश्च । तत्र श्रुतधर्मः स्वाध्यायः, चारित्रधर्मः क्षान्त्यादिरूपो दशविधः श्रमणधर्मः । तत्र श्रुतधर्मसम्यक्त्वसमन्विता एव प्रायश्चारित्रधर्माभ्युपगमयथावत्परिपालनसमर्था भवन्तीति तत्प्रशंसा प्राशस्त्यकथनमुखेन दानादिधर्मनिरूपणम् ॥

---

**No 4197.** नागवलिः । Substance, country-made paper, 9×4 inches. Folia, 14. Lines, 9 on a page. Extent, 204 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and Verse. Correct.

**Nágavali.** Serpents should not be killed but they should be propitiated. The present work gives the process of propitiating serpents as given in Vidhána-Párijáta a well-known *Smriti* work.

Beginning. श्रीगणेशाय नमः ।
अथ नागबलिः । तत्र शौनकः ।
अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमम् ।
सिनीवाल्यां पौर्णमास्यां पञ्चम्यां कारयेत् ततः ।
अश्लेषाऋक्षयुक्तायाममायां वापि कारयेत् ॥

हतसर्पवधो विप्रः पूर्व्वजन्मनि चेद् वा ।
अनेकदुःखजालानि प्राप्नोति सततं नरः ॥
सन्ततिप्रतिबन्धश्च जातापत्यं विनश्यति ।
तस्य शान्तिं प्रवक्ष्यामि येन सम्पद्यते सुखम् ॥
स्नात्वागत्य ततो ब्रह्मदण्डं दद्याद् द्विजातये ।
वधं प्रख्यापयंश्चापि चरेत् कृच्छ्रांश्चतुर्दश ॥
इत्यादि ।

**End.** कृतस्य कर्म्मणः साङ्गतासिद्धये ब्राह्मणभोजनं भूयोदानञ्च विधाय, "यस्य स्मृत्या च — प्रमादात् कुर्व्वतां कर्म्म" इति विष्णुं स्मरेत् । अनेन सर्पसंस्काराख्येन कर्म्मणा सर्पाधिमार्थोऽनन्तः प्रीयताम् । ततः सुहृद्युतो भुञ्जीतेति ।

**Colophon.** इति नागबलिप्रयोगो विधानपारिजातोक्तः समाप्तः ।

विषयः । सर्पवधदोषकीर्त्तनपूर्व्वकं तच्छान्त्यै नागबलिः कार्य्य इति विधानकथनानन्तरं विधानपारिजातोक्तक्रमेण तत्प्रयोगकथनम् ॥

---

**No. 4198.** परभूप्रकरणं, वा परभूकथा । Substance, country-made yellow paper, $9\frac{1}{4} \times 4$ inches Folia, 17. Lines, 10 on a page Extent, 340 ślokas. Character, Nágara Date, Sk 1732 Place of deposit, Calcutta, Government of India Appearance, fresh. Prose Incorrect.

**Parabhú-prakarana, alias Parabhú-kathá** The work was written during the reign of Rájá Sháhu the grandson of the great Sivají. It contains a description of the ten purificatory ceremonies of the Parabhú race to which Rájá Sháhu's writer Govinda Ráya belonged It gives the origin of the Parabhú race also.

**Beginning.** श्रीगणेशाय नमः ।
श्रीसिद्धिसहितं + + प्रणम्य गणनायकम् ।
केनचिद्विदुषा कथा लिख्यते परभूकथा ॥
स्वस्तिश्रीमहाराजाधिराजचूडामणिमांसलवंशावतंसे श्रीशम्भुराजात्मजश्रीशाहुराजे सप्तर्षिराजधान्यां मुख्यप्रधानबालाजीबाजीरायसाहाय्येन निर्बाधमासमुद्रजगतीमखराज्यं कुर्व्वति सति कायस्थजात्यन्तर्गतपरभूजातीयो राजलेखको गोविन्दरायनामा राज्ञः प्रीतिपात्रमासीत् । तदनुजो बापुरायनामा च । अथ कस्मिंश्चिद्दिवसे गोविन्दरायः करहाटकजातीयमखमर्थ्यं मूर्त्तिमन्तं इवमिव स्थितं अतिशोभिनमतिमत्सरिणं बाळशोपाख्यवाबदेवभट्टनामानं आहूय एवमेवमप्रार्थयत ।

End. इत्थं यत् परभृष्टतममूच्छाद्यौ प्रशासति ।

स्मृत्यर्थं तत् पत्रिकाभि(पत्रिकाभि)रबध्नन् कोपिपण्डताः (केऽपि पण्डिताः) ॥

Colophon. इदं परभ्रप्रकरणं समाप्तम् । श्रीशके १७१२ शुक्लनामसंवत्सरे आषाढ-शुक्लाष्टम्यां इदं पुस्तकं ज्योतिर्षोत्पन्नामगोविन्दात्मजप्रभाकरेण लिखितम् ।

विषयः । परभ्रजातीयस्य गोविन्दरायनामकस्य राजलेखकस्य स्वजातीयानां दशविधसंस्कारार्थसुखमादिकथनम् । परभ्रजातीयस्योत्पत्त्यादिकथनञ्च ।

---

**No 4199** न्यायसङ्ग्रहः । Substance, country-made paper, 10 × 4 inches. Folia, 2 Lines, 17 on a page. Extent, 68 slokas and 10 Aksharas Character, Nágara Date, ? Place of deposit, Calcutta, Government of India, Appearance, fresh Prose Correct

**Nyáya-sangraha** The rules of interpretation applicable to the Jaina work on Sanskrit grammar entitled Siddha Hema Chandra and also to other works of similar nature. It was written by Hema Hansa Gani, the pupil of Ratna Sekhara, the head of a Jaina Gachchha who was himself the pupil of Soma Sundara the Lord of the learned Divines of the Jainas.

Beginning ॐ रूपाय नमः श्रीमद्हेमव्याकरणाय च ।

श्रीसोमसुन्दरगुरुस्वामाय च नमो नमः ॥

अथ ये तु शास्त्र×चिता लोकप्रसिद्धाय न्यायास्तदर्थं यत्नः क्रियते । स्वं रूपं शब्दस्याशब्दसंज्ञा । सुसर्वार्द्दिकशब्देभ्यो जनपदस्य । ततो—इत्यादि ।

End. शिष्टनामनिष्पन्नप्रयोगधातूनां सौत्रत्वाशब्द्यानुरोधात् सिद्धिः ॥

Colophon. इति श्रीसिद्धहेमचन्द्रव्याकरणस्यन्यायसङ्ग्रह ॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशर्मशिष्याग्रणी

गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ।

तच्छिष्याश्रवहेमहंसगणिना श्रीसिद्धहेमाभिधे

न्याया व्याकरणे विलोक्य सकलाः संसङ्ग्रहीता इमे ॥

प्रत्यक्षर गणनया ग्रन्थेऽस्मिन् न्यायसङ्ग्रहे ।

श्लोकानामष्टषष्टिः स्यादधिका च दशाक्षरी ॥ इति शम् ।

वि सिद्धहेमव्याकरणोक्तानां न्यायानां यथाक्रमेण सङ्ग्रहणम् । तदसमृचितानां केषाञ्चिदन्येषाञ्च सङ्ग्रहः ।

---

**No. 4200. न्यायमञ्जूषान्यासः ।** Substance, country-made paper, 10 × 4 inches. Folia, 57 Lines, 17 on a page. Extent, 3270 ślokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India, Appearance, fresh. Prose. Correct.

**Nyáya-mañjúshá-nyása.** A commentary on the above by the same author.

**Beginning** त्रैलोक्याह्लादहेतुश्रीसोमसुन्दरमूर्त्तये ।
नमः श्रीसिद्धचक्राय जगच्छ्रेष्ठाय तायिने ॥
न्यायाध्वन्यध्वगानां दिशि दिशि सुयशोऽद्यापि रामादिराजां
न्यायोपायानि विज्ञान्यमसुखकराण्यत्र चामुत्र चापि ।
न्याय्यत्वादेव जय्यं न खलु खलगिरां शासनं जैनचन्द्रं
तन्नित्य न्यायवृत्तिं शुभपदफलदामाद्रियध्वं बुधेन्द्राः ॥

इह तावत् सुगृहीतनामधेयप्रभुश्रीहेमचन्द्राचार्य्यैः स्वोपज्ञसंस्कृतशब्दानुशासनबृहद्वृत्तिप्रान्ते षट्पञ्चाशन्न्यायाः समुच्चीयन्ते । तस्मात्तेषामनित्यत्वमुपेत्य व्याख्या दाहरणाज्ञापकानामेव प्रज्ञापना कनीयसी टीका कैश्चित् प्राचीनानुचानैश्चक्रे । साम्प्रतन्तु पूर्व्वमसूचितानां इत्यादि ।

**End.** धातुरेव दर्शित इत्यतः प्राय इत्युक्तं सङ्ग्रहश्लोकेष्वेकोनविंशाय्यायां + + योगस्यात्पप्रयत्नोच्चार्य्यत्वम् । उत्पूर्व्वप्रस् (?) शङ्कानिरासार्थम् । शेषं निगदसिद्धम् ॥

**Colophon.** इति स्वकृतन्यायमञ्जूषायां तृतीयवक्ष×स्कन्यासः ॥
श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
र्गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्द्दीप्यते साम्प्रतम् ।
तच्छिष्याणुकहेमहंसगणिना स्वन्यायमञ्जूषिका
न्यासेनालमकारि चिररचनाचारुत्वमाबिभ्रता ॥
कल्याणमस्तु ।

विषयः । न्यायसङ्ग्रहापराभिधानस्वकृतन्यायमञ्जूषायाः सोदाहरणव्याख्यानम् ।

---

**No. 4201. माघमाहात्म्यम् ।** Substance, country-made paper, 9 × 4½ inches Folia, 2 Lines, 12 on a page. Extent, 54 ślokas. Character, Nagara Date, ? Place of deposit, Calcutta, Government of India, Appearance, new Verse Incorrect

**Mágha-máhátmya.** The sacredness of the month of Mágha, a plunge in a holy river in the morning in which produces great merit. This is written in the form of a Purána.

Beginning. श्रीगणेशाय नमः ।

अथर्व्वं नैमिषारण्ये मुनयो ब्रह्मवादिनः ।
आजग्मुरखिलास्तत्र सत्रं द्वादशवार्षिकम् ॥
असितो देवलश्चैव सुमन्तुः पैल एव च ।
सुमतिर्वामदेवश्च जाबालिः काश्यपो भृगुः ॥
पर्व्वतः शरभङ्गश्च सुतीक्ष्णो + स एव च ।
आपस्तम्बश्च माण्डव्यः सत्यः कात्यायनस्तथा ॥
रथीतरोऽङ्गिराश्चैव कपिलो रैभ्य एव च ।
मुद्गलो गौतमश्चैव कण्वः कौण्डिरस च ॥
धूम्रो रथीतकः शङ्कुः पृथुर्मङ्किश्च सङ्कृतिः ।
कौण्डिन्यो निध्रुवश्चैव कणादो गर्ग एव च ॥
कौशिको गालवो बभ्रुः शुकः शक्तिः पराशरः ।
शिनिर्विभाण्डकः पञ्चवृधो बौधायनो वसुः ॥
जमदग्निर्भरद्वाजो धूमपानश्च भार्गवः ।

— — — — — — — — — —

आगत्य नैमिषारण्यमशापगुणसंगतम् ।
क्रतुमारभिरे सत्रं गोमतीतीरसंगतम् ॥
एतस्मिन्नेव काले तु सूतः पौराणिकोत्तमः ।
पुण्यं तमाययौ देशं दीर्घसत्रदिदृक्षया ॥
इत्यादि ।

End. यथा वन्माघमाहात्म्यं वक्ता श्रोता च दुर्लभः ।
तथ शूरश्च सुलभा वक्तुं श्रोतुञ्च शक्तितः ॥
स माघमासोऽखिलपापशत्रुः
सौभाग्यहेतुः सकलार्थदायी ।
निमज्जनाद्युत्र विभातकाले
नवासुवर्लोककुटुम्बिनः स्युः ॥ (?)

Colophon. इति श्रीमाघमाहात्म्यम् ।

विषयः । माघमासे स्नानदानादिमाहात्म्यकीर्त्तनम् ।

**No. 4202.** कर्कटव्रतं वा, सङ्कटव्रतम् । Substance, country-made yellow paper, 10×2¼ inches. Folia, 5. Lines, 5 on a page. Extent, 75 ślokas. Character, Nágara. Date, Sm. 1883. Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Karkaṭa-vrata.** The process of performing a religious ceremony on the 4th day of the waning moon in the month of *Kártika.*

**Beginning.** श्रीगणेशाय नमः ।
श्रीसूत उवाच ।
अरण्ये वर्त्तमानं तं पाण्डुपुत्रं युधिष्ठिरम् ।
सबान्धवं सुखासीनमाययौ व्यासमादरात् ( व्यास आदरात् ) ॥
तं दृष्ट्वा मुनिशार्द्दूलं व्यासं प्रत्युद्ययौ नृपः ।
मधुपर्कञ्च सार्घ्यञ्च कृत्वा तस्मै नमस्कृत (?) ॥
अद्य मे सफलं जन्म भवतां गमनेन वै ।
य क्लेशा मम सञ्जाता वने वननिवासिनः ।
ते सर्व्वे विलयं जाता भवतां दर्शनेन वै ॥

**End.** ब्राह्मणान् भोजयेत् पश्चात् ततस्त्वेति विसर्जनम् ॥
त्यक्तगर्व्वो जितक्रोधो लोभदम्भविवर्जितः ।
प्रतिमासन्तु यः कुर्य्याच्चौणाब्दानेकमेव च ।
न दारिद्र्यं भवेत्तस्य सङ्कटं न भवन्ति हि ॥

**Colophon.** इति श्रीनारदीयपुराणे कार्त्तिककृष्णचतुर्थीसङ्कटनाम्नो व्रतकथा समाप्ता ।
संवत् १८८३ ।

विषयः । सङ्कटव्रतविधिकथन तत्कथाकथनञ्च ।

---

**No. 4203.** मुद्राकरणम् । Substance, country-made paper, 20½×4½ inches. Folia, 4. Lines, 6 on a page. Extent, 141 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

**Mudrákarana.** Mystic signs made with fingers of the hand. The fingers are so placed as to form the figures of cow, &c. The signs differ in the worship of different deities.

**Beginning.** अथ मुद्राः । मुद्रामुत्पत्तिमाह ( मुद्राया उत्पत्तिमाह ) तन्त्रे ।
मोदनात् सर्व्वदेवानां द्रावणात् पापसन्ततेः ।

तस्मान्मुद्रेति सा ख्याता सर्व्वकर्म्मार्थसाधिनी ॥
अथ मुद्राः प्रवक्ष्यामि सर्व्वतन्त्रेषु कल्पिताः ।
याभिर्विरचिताभिश्च मोदन्ते सर्व्वदेवताः ॥
अर्च्चने जपकाले च ध्याने काम्ये च कर्म्मणि ।
ध्याने चावाहने शङ्खे प्रतिष्ठायाञ्च रक्षणे ॥
नैवेद्ये च तथान्यत्र तत्तत्कल्पप्रकाशिते ।
स्थाने मुद्राः प्रदष्टव्याः स्वस्वलक्षणलक्षिताः ॥

End. बद्धा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।
अङ्गुष्ठे तु तदग्रे तु मुद्रेयं भूतिनी मता ॥
वाममुष्टिं विधायाथ + + + तर्ज्जनीं ततः ।
प्रसार्य्य तर्ज्जनीमुद्रा निर्द्दिष्टा वज्रपाणिना ॥

Colophon. इति मुद्राकरणं समाप्तम् ॥

विषयः । देवताभेदे मुद्राभेदकथनं तासां लक्षणकथनञ्च ।

---

**No. 4204 मृत्युञ्जयतन्त्रम् ।** Substance, country-made paper, 13 × 4½ inches Folia, 16. Lines, 5 on a page Extent, 300 ślokas Character, Bengali Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse Incorrect

**Mrityuñjaya-tantra** One of the original Tantras. The Principal interlocutors are Hara and Párvatí and the subjects treated of are the origin of the human body, how it represents the Universe and the definitions of Yoga terms.

Beginning. ॐ नमः श्रीगुरवे ।
अन्नदाता च (?) कर्त्ता च सर्वदा यौवनान्वितः ।
सर्वशास्त्रार्थतत्त्वज्ञो देवविप्राग्निपूजकः ।
जातिस्मरो महाप्राज्ञश्चिरायुः सर्वतत्त्ववित् ॥
अभ्यासं ज्ञानयोगञ्च देवीभक्तिरतः सदा । (?)
नाकाले मरणं भित्त्वा नच शोकेन युज्यते ॥

देव्युवाच ॥

कथयस्व महादेव प्रसादं कुरु शङ्कर ।
येन ज्ञानेन मोक्षः स्यात् संक्षेपात्तमसंशयम् ॥

End खण्डितशेषत्वात् समाप्तिसूचकं वाक्यं नास्ति ।

विषयः। १ म अध्याये, देहोत्पत्तिक्रमकथनं, देहस्य ब्रह्माण्डरूपताप्रदर्शनञ्च । २ यु, ३ य, ४ र्थ अध्यायेषु, आसनं, प्राणसंरोधः, प्रत्याहारः, धारणा, ध्यानं, समाधिः, एतेषां षणां योगाङ्गानां लक्षणादिकथनम् ।

---

**No 4205.** मातृकाभेदतन्त्रम् । Substance, country-made yellow paper, $12\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 27 Lines, 6 on a page Extent, 586 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Verse Incorrect.

**Mátrikábheda-tantra.** One of the original *tantra* works. The interlocutors are Bhairava and Chandiká. It treats of the process of turning inferior metals into silver, &c., of reducing mercury to ashes, of the impurity of anything offered to S'hiva, of the benefits of drinking and similar topics treated of in Tántric works.

Beginning. ॐ नमः परमदेवतायै ।

कैलासशिखरे रम्ये नानारत्नोपशोभिते ।
पप्रच्छ परया भक्त्या भैरवं परमेश्वरम् ॥
श्रीचण्डिकोवाच ।
त्रिपुरापूजनं नाथ स्वर्णरत्नैर्विशेषतः ।
कलिकाले सर्वरत्न गुप्तभावं तथा मणिः ॥
केनोपायेन देवेश स्वर्णरत्नादि लभ्यते ।
तद्वदस्व विशेषेण यथा रत्नादिकं भवेत् ॥

End शृणु देवि प्रवक्ष्यामि साधिकायाश्च लक्षणम् ।
दिव्यशक्तिर्वीरशक्तिर्गुरुशक्तिस्तथापरा ॥
कुलशक्तिः कामिनी च नवशक्तिः कुमारिका ।
श्रीगुरुं पूजयेद्भक्त्या स्वदेहदानपूर्वकम् ॥
अन्यथा तु स्वदेहस्य विपत्ती जायते ध्रुवम् ।
सप्तजन्मनि सा देवि पुंश्चली जायते ध्रुवम् ॥

Colophon इति मातृकाभेदतन्त्रे चण्डिकाशङ्करसंवादे चतुर्दशः पटलः ।

विषयः। १ म पटले, रौप्यनिर्म्माणोपायादिकथनम् । २ य पटले, सन्तानोत्पत्तिनियम-कथनम् । ३ य पटले, कुण्डलिनी भोगान् भुङ्क्ते न जीव इति ज्ञानपूर्वकभोजनस्य मोक्षसाधनत्व-

कथनं, देवान्तःस्थकुण्डादिकथनञ्च । ४ र्थ पटले, शिवलिङ्गान्यस्याप्याग्नत्वनिर्देशे चेतुनिर्देशः, मद्यपानप्रशंसा च । ५ म पटले, पारदभस्मौकरणोत्पादकथन, तद्भस्ममाहात्म्यकथनञ्च । ६ ष्ठ पटले, चन्द्रसूर्य्यग्रहणरहस्यकथनं, चामुण्डाया मन्त्रकथनं, तस्या आराधनविधिः । ७ म पटले, त्रिपुराया मन्त्रपूजास्तवकवचादिकीर्त्तनम् । ८ म पटले, पारदशिवलिङ्गपूजामाहात्म्य, पारदशिवलिङ्गनिर्म्माणोपायकथनञ्च । ९ म पटले, वराहवल्लदाहनियमः, तस्य द्रव्यान्तरयोगेन भक्षणात् कुष्ठरोगशान्तिकथनम् । १० म पटले, वर्णात्मकमन्त्रस्य शब्दब्रह्ममयत्वादिकथनम् । ११ श पटले, देव्यै प्रासादमण्डपकूपादिदानविधिः, वेदिभेदे यज्ञोपवीतपरिमाणञ्च । १२ श पटले, शालग्रामयन्त्रादीनां पूजाधारत्वकथनं, आधारभेदे पूजाफलभेदकथनञ्च, शिवपूजामाहात्म्यादिकीर्त्तनञ्च । १३ श पटले, मन्त्रजपार्थं गाणपत्यादिभेदे मालाभेदकथन, मालाया ग्रन्थिप्रकारकथनञ्च । १४ श पटले, दिव्यवीरपशुभेदेन विविधभावकथनम् ।

---

**No. 4206** अञ्जननिदानम् । Substance, country-made paper, 13 x 4 inches Folia, 21 Lines, 5 on a page Extent, 333 slokas Character. Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Verse Correct

**Anjana-nidána.** A medical work attributed to Agnibesha to whom Charakácháryya addresses his celebrated work. This is a short treatise giving within the compass of 333 verses the pathology of various deseases. As the eye-paint clears the eye, so the author expects this work will clear the intellects of physicians, clouded by reading a lasge number of big books.

**Beginning.** श्रीगणेशाय नमः ।

अबोधतिमिरच्छन्नचक्षुषां भिषजां कृते ।
सूक्ष्मं करोत्यग्निवेशो ग्रन्थमञ्जनमाख्यया ॥
दोषरोषौ रुजां हेतुस्तत्प्रकोपे तु कारणम् ।
प्रत्येकं हीनमिथ्यातियोगः कालार्थकर्म्मणाम् ॥
अथ वातस्य कारणमाह ।
कटुतिक्तकषायपयोदहति-
श्रमरूक्षहिमाम्लभयानशनैः ।
स्मरजागरसुक्षरणास्रगमै-
रपि कुप्यति केवलवैरनिलः ॥
अथ वातस्योपद्रवमाह ।

इत्यादि ।

End विद्रधि वृश्चिकेनाग्नं व्यल्लदङ्गारभागि च ।
सदाचरदमीचमन्यद्यथा स्वैतुषमुन्नयेत् ॥
इति विषरोगावलोकः ।

अतिविस्तरपुस्तकपाठरत-
प्रतिबन्धतया धृतभूरिभयम् ।
गगनानलदहनमित १११ पद्यकृतं
भिषजामिदमञ्जनमस्तु मुदे ॥
चकार चतुरोचितं तदिदमग्निवेशोऽञ्जनं
परोपकृतये कृतं परमिदं रुजाज्ञापकम् ।
ततः समुदितैः सदा सुकृतराशिभिस्तुष्यतां
तुषारगिरिकन्यकापरिवृढः स योषितुतः ॥

Colophon. इति श्रीअग्निवेशाचार्य्यविरचितं श्रीवैद्यकग्रन्थे अञ्जननिदानं सम्पूर्णम् ॥

विषयः। वातपित्तकफानां कारणकथनम्। तेषामुपद्रवादिकथनम्। तत्दोषादिलक्षण-कथनञ्च। प्राग्रूपादीनां लक्षणादिकथनम्। ज्वरादिलक्षणकथनम्। द्वन्द्वज्वरादिलक्षणकथनम्। विषमज्वरादिकथनम्। असाध्यज्वरादिलक्षणकथनम्। अतीसारलक्षणकथनम्। श्वास-कासाग्निमान्द्य-पाण्डुरोग-शोथ-कुष्ठ-कामला-मूर्च्छापस्मार-प्रमेह मूत्रकृच्छ्र वात-स्थौल्य-कार्श्य हृद्रोग-कुष्ठोदरव्रण-भग्न-भगन्दर-नाडीव्रण-विद्रधि-विसर्प-मसूरिका-स्फोटकादिलक्षणादिकथनम्। प्रसूतिरोगकथनम्। प्रदरादिरोगकथनम्। शिरोरोगादिकथनम्। विषरोगादिकथनञ्च। इति शम्।

---

No. 4207. पञ्चमसङ्ग्रहटीका। Substance, country-made paper, 9 × 3 inches. Folia, 351. Lines, 15 on a page. Extent, 19,687 ślokas. Character, Nágara. Date, Sm. 1712. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Panchama-sangraha-tíká.** The Sanskrit commentary by Malaya-giri, one a Jaina work entitled *Panchasamgraha* in Prákrit.

Beginning ॐ नमः श्रीवीतरागाय।
समस्तकर्म्मद्रुमदाहदावं
समस्तविज्ञातजगत्स्वभावम्।
विधूतनिःशेषकुतीर्थमानं
प्रणम्य देवं जिनवर्द्धमानम् ॥
संसारकूपोदरमग्नजन्तु-
त्वोमोद्धृतौ यत्नमिवावलम्बम्।

जैनागमं वाचितशेषशास्त्र-
न्यायभाषमापूर्णयथार्थवाक्यम्॥
विवृणोमि पञ्चसङ्ग्रहमतिनिपुणगभीरमल्पबुद्धिरपि ।
शास्त्रान्तरटीकातो गुरुपदेशाच्च सुखबोधम् ॥

इह शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमानाः सन्त इष्टदेवतानमस्कारपुरःसरमेव प्रवर्त्तन्ते । मचायमाचार्य्यो न शिष्ट इति शिष्टसमयपरिपालनाय, तथा श्रेयांसि बहुविघ्नानि भवन्ति । उक्तञ्च ।

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।
अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥

इदञ्च प्रकरणं सम्यग्ज्ञानहेतुत्वात् श्रेयोभूतमतो माभूदत्र विघ्न इति विघ्नविनायकोपशान्तये चेष्टदेवतानमस्कारं, तथा प्रेक्षापूर्व्वकारिणः प्रयोजनादिविरहे प्रवर्त्तन्ते, ततः प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनादिकञ्च प्रतिपिपादयिषुरादाविमां गाथामाह ॥ नेमि कणोति ।

End. समासतः संक्षेपतः प्रच्छिन्नभविकजनानुकम्पया भणितम ।

जयति सकलकर्मक्लेशसम्पर्कमुक्त-
+ + विततविमलज्ञानसम्भारलक्ष्मीः ।
प्रतिनिहतकुतीर्थाशेषमार्गप्रवादः
शिवपदमधिरूढो वर्द्धमानो जिनेन्द्रः ॥
गणधरदृष्टं जिनभाषितार्थमखिल + + भङ्गनयकलितम् ।
परतीर्थानुमतमा + + मभिगन्तु शासनं जैनम् ॥
बह्वर्थमल्पशब्दं प्रकरणमेतद्विवृण्वता + विलम् ।
यदवापि मलयगिरिणा सिद्धान्तेना + + लोकः ॥
अर्हन्तो मङ्गलं सिद्धा मङ्गलं मम साधवः ।
मङ्गलं मङ्गलं धर्म्मस्तान् मङ्गलमशिश्रियम् ॥

Colophon. इति मलयगिरिविरचिता पञ्चसङ्ग्रहटीका समाप्ता ।

व्योमाभोगसरोवरे सुरसरित्पूरेण पूर्णे स्फुर-
त्तारामण्डलपुण्डरीकनिकरे भास्वन्निशानाथकौ ।
यावच्चक्रचकोरयोः सुखकरौ गच्छन्ति धाम्यतः
श्रेयः कर्म्मणि तावदस्तु ललितं नीवलिकः पुस्तकः ॥

ग्रन्थाग्रं । १८०५०॥ संवत् १७१९ वर्षे, शाके १५७५ प्रवर्त्तमाने ॥

विषयः । पञ्चसङ्ग्रहाभिधानजैनसिद्धान्तस्य व्याख्यानम् ।

———

**No. 4208. पञ्चाशकटीका ।** Substance, country-made paper, 11 × $3\frac{1}{2}$ inches. Folia, 177 Lines, 15 on a page. Extent, 9,110 Slokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old Prose and verse. Incorrect.

**Panchásaka-tíká.** Haribhadra Súri's great work, the Panchásaka Sútra, is well-known. It has many commentaries, one of the largest being known as the Brihadvyákhyá. The present commentary follows that one closely.

**Beginning.** सद्दृष्टीनां समस्तार्था गोभिर्यस्य प्रकाशिताः ।
तं नत्वा श्रीमहावीरतीग्मरश्मिं तमोऽपहम् ॥
बृहद्व्याख्यानुसारेण वृत्तिं वक्ष्ये समासतः ।
पञ्चाशकाख्यशास्त्रस्य धर्म्मशास्त्रशिरोमणेः ॥

इह हि विस्फुरन्निखिलातिशयतेजोधामनि दुःसमाकालविपुलजलदपटलावलुप्यमानमहिमनि नितरामनुपलक्षीभूतपूर्व्वगतादिबहुतमग्रन्थमार्थतारकानिकरे पारगतगदितागमाम्बरे पटुतमबोधलोचनतया सुगृहीतनामधेयो भगवान् श्रीहरिभद्रस्तथाविधपुरुषार्थसिद्ध्यर्थम्—इत्यादि ।

**End** श्रीहरिभद्राचार्य्यकृततत्प्रकरणस्य सूचिता । विरहाङ्कत्वात् तस्येति गाथार्थः । एकोनविंशतितमपञ्चाशकवृत्तिः समाप्ता । समाप्ता चेयं शिष्यहिता नाम सितपटपटलप्रधानवाचनिकपुरुषप्रवरचतुर्दशशतसंख्यप्रकरणप्रबन्धप्रणयनसुगृहीतनामधेयश्रीहरिभद्रसूरिविरचितपञ्चाशकाख्यप्रकरणटीकेति ।

**Colophon.** (अतःपरं टीकाकर्त्तुः प्रशस्तिरेका वर्त्तते । सा तु खण्डितत्वादसमाप्तेति उपेक्षिता ।)

विषयः । हरिभद्रसूरिकृतपञ्चाशकसूत्राभिधानजैनप्रकरणस्य व्याख्यानम् ।

---

**No 4209. पञ्चाक्षरमाहात्म्यम् ।** Substance, country-made paper, 10 × 3 inches. Folia, 16. Lines, 8 on a page. Extent, 240 Slokas. Character, Nágara Date, Sm. 1688. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Correct.

**Panchákshara-máhátmya.** The sacredness of the S'aiva mantra in five letters given in the Linga Puráṇa.

**Beginning.** श्रीगणपतये नमः ।
भवानीतनयोद्योतनयमानन्दकारक ।
कामीवासिजनाघौघनाशिन् तुभ्यं नमोऽस्तु ते ॥

जयति जयति काशी काशितज्ञानराशिः
शिवचरितवरधाम्नश्रीगणेशाम्बिकानाम् ।
निवसतिरियमाद्या तां भजध्वं भजध्वं
स्मरत नमत शुद्धां शुद्धये कीर्त्तयध्वम् ॥

ऋषय ऊचुः ।

युगानि युगमानञ्च युगधर्म्माः सनातनाः ।
युगेषु लोकचरितं श्रुतमस्माभिरादितः ॥

इत्यादि ।

End. यः पठेच्छृणुयाद्वापि स याति परमां गतिम् ।
यः श्रावयेद्द्विजान् शुद्धान् पञ्चाक्षरविधिक्रमम् ।
दैवे कर्म्मणि पित्र्ये च शिवलोके महीयते ॥

Colophon. इत्यादिमहापुराणे लिङ्गे पञ्चाक्षरमाहात्म्यं समाप्तम् ॥ संवत् । १९८८ ।

विषयः । शिवस्य लिङ्गपुराणोक्तपञ्चाक्षरमन्त्रमाहात्म्यादिकीर्त्तनम् ।

---

No 4210. रुद्रभाष्यम् । Substance, country-made paper, 11×4 inches Folia, 19. Lines, 11 on a page Extent, 284 Slokas Character, Nágara. Date, Sm 1862 Place of deposit, Calcutta, Government of India Appearance, new. Prose Correct.

Rudra-bháshya. A commentary by Mátridatta on the rules for bathing Rudra as given in Baudháyana. The author has adopted the celebrated couplet *Yasya Nisvasitam Vedáh*, &c., used in Sáyana's and Mádhava's commentaries on Vedic works.

Beginning श्रीगणेशाय नमः ।
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथातो रुद्रस्नानविधिं व्याख्यास्याम इति । अथ शब्दोऽधिकारार्थः । रुद्रस्नानविधिव्याख्यानमारभ्यते इत्यर्थः । अतः शब्दो हेत्वर्थः । पापक्षयादिकर्म्मणामधिकारिणामभिलषितसाधनत्वेनयतः अत इति योजना । रुद्रस्नानविधिमित्यत्र रुद्रस्य स्नानमिति षष्ठीतत्पुरुषः ॥ इत्यादि ।

End. तद्दर्शनेन सप्तसप्ततिन्यूनचतुःशतानि शतमहस्राणि स्कन्दगो भवन्तीति इत्याह भगवान् बौधायन इति ॥

Colophon. इति मातृदत्तीयं रुद्रभाष्यं समाप्तम् । संवत् १८६२ ।

विषयः । बौधायनीय-रुद्रस्नानचतुष्टयस्य व्याख्यानम् ।

**No. 4211.** श्रीरामपद्धतिः। Substance, country-made paper, 11 × 4 inches Folia, 8 Lines, 12 on a page. Extent, 259 Ślokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

**S'rírámapaddhati.** The process of worshipping Ráma.

**Beginning.** श्रीगणेशाय नमः।

श्रीगुरुं सच्चिदानन्दं संसारार्णवतारकम्।

श्रीरामरूपिणं मूर्ध्नि भावयेत्त्वं पुनः पुनः॥

साधको ब्राह्मे मुहूर्त्ते उत्थाय रात्रिवासः परित्यज्य बद्धपद्मासनः शिरस्यधोमुखसहस्रदलकमल-युक्तावर्णकर्णिकान्तःस्थचन्द्रमण्डलान्तर्गतरत्नपीठे—इत्यादि।

**End.** मूलेन निर्म्माल्यकं कृत्वा शेषं निर्म्माल्यं नैवेद्यं भक्तेभ्यो दत्वा किञ्चित् स्वयं गृहीत्वा सुखं विहरेदिति श्रीरामपद्धतिः।

**Colophon** (अस्य पुरश्चरणं षट्लक्षजपः।)

विषयः। श्रीरामस्य पूजाविधिकथनादिकम्।

---

**No. 4212.** प्रयोगवैजयन्ती। (पशुप्रश्नीया।) Substance, country-made paper, 12 × 4 inches Folia, 54. Lines, 9 on a page Extent, 1,042 Ślokas Character, Nágara Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose. Correct.

**Prayoga-vaijayantí.** A commentary by Mahádeva on the Hiranyakesí Sútra. The present work confines itself to the fourth chapter entitled the Pas'uprasna.

**Beginning** श्रीगणेशाय नमः।

स्वविषयेषु नियतोपक्रमास्तु निरूपिताः।

दर्शाद्या इष्टिपर्य्यन्तास्तत्रारोऽथ निरूप्यते॥

नित्याभ्यासः पशुः पूर्वमनित्याभ्यासकर्मतः।

चातुर्मास्येभ्य एवैवं सौत्रामण्याश्च पूर्व्वतः॥

प्रश्ने चतुर्थ ऐन्द्रा + निरूढो विकृतैः सह।

सर्व्वेभ्यः कामेभ्यः पशुबन्धोऽपि विधीयमानो दर्शितो बोधायनेनार्थवादरूपफलकः। आपस्तम्बे-नाप्युक्तं प्रथमप्रश्ने प्रथमपटल एवाधिकारिनिर्णयो दर्शपूर्णमासवदेव इष्टोऽतो न व्याख्यायते॥ इत्यादि।

End. न्यायव्याख्याने सूवतात्पर्य्ये दर्शितम्। अतोऽन्यत्सूत्रे अयमेव प्रकारो ज्ञेयः।
न्यायोपदेशयोः केचिद्विकल्पं भवते न सत्।
युक्तं न्यायोऽनुमानञ्च श्रुतितुल्यं कथं भवेत् ॥

Colophon. इति श्रीसत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां महादेवकृतायां चतुर्थे पञ्चप्रश्ने पञ्चमः पटलः ॥ प्रश्नश्च समाप्तः ॥

विषयः। हिरण्यकेशीयपञ्चप्रश्नसूत्रस्य व्याख्यानम्।

---

No 4213. पाकयज्ञादिनिर्णयः। Substance, country-made paper, 8×3 inches Folia, 5 Lines, 10 on a page Extent, 90 Slokas Character, Nágara.* Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Prose. Incorrect.

**Pákayajnádi-nirnaya.** By Chandra-Chúra, the son of Umáśankara and the grandson Dharmesvara. It treats of the sacrifices performed with cooked food. S'hráddha is the only ceremony in which for some hundreds of years cooked food has been used and so this work treats of Shráddha only.

Beginning श्रीगणेशाय नमः।
अपराह्णे प्राचीनावीती कृतप्राणायामः प्रथमप्रयोगे पिण्डपितृयज्ञमारभ्य तेन मासि मासि यक्ष्ये इति। ततः पिण्डपितृयज्ञेन यक्ष्ये इति सङ्कल्प्य—इत्यादि।

End अत पिण्डानभ्यवहरेत्। ब्राह्मणं वा प्राशयेत्।
सन्निहिते पिण्डपितृयज्ञ इत्यलं प्रसङ्गेन ॥

Colophon धर्मेश्वरात्मजश्रीमदुमाशङ्करसूनुना।
कृतोऽयं चन्द्रचूडेन पाकयज्ञादिनिर्णयः॥ श्रीरस्तु।

विषयः। संक्षेपेण पिण्डपितृयज्ञाभिधानश्राद्धविधिकथनम्।

---

No. 4214 ऋष्यनुक्रमः। Substance, country-made paper, 13×4 inches. Folia. 12. Lines, 11 on a page Extent, 330 slokas Character, Nágara. Date, Sm 1863 Place of deposit, Calcutta, Government of India. Appearance, new Prose. Incorrect

**Rshyanukrama.** An index of Rishis to the Rigveda S'ákala S'ákhá. This is in prose, and appears to be a different work from No. 2112 noticed in the year 1881-82.

**Beginning.** श्रीगणेशाय नमः ।

अथ ऋग्वेदशाकलशाखासंहितायां ऋष्यनुक्रमो लिख्यते । अग्निमीळे पुरोहितम् । मधुच्छन्दाः वैश्वामित्रः ॥ १०१ ॥ एकोत्तरशत-ऋक्पर्य्यन्तमित्यर्थः । एवं सर्व्वत्र । इन्द्रं विश्वा अवीवृधन् । जेता माधुच्छन्दसः । १८ । अग्निं दूतं वृणीमहे । मेधातिथिः काण्वः । १४१ । कस्य नूनं कतमस्यामृतानां । शुनःशेप आजीगर्तिः । कृत्रिमो देवरातः वैश्वामित्रः ॥ ९७ ॥ इत्यादि ।

**End.** ऋतञ्च सत्यञ्चाभीद्धात् । अघमर्षणो माधुच्छन्दः । ३ । संसमिद्युवसे वृषन् । संवनन आङ्गिरसः । ४ । दशमं मण्डलम् । ऋक्सङ्ख्या १०५४ ॥

**Colophon** इति शाकलसंहितायां ऋष्यनुक्रमः समाप्तः । संवत् १८९१ ।

**विषयः ।** ऋग्वेदशाकलशाखीयासु ऋक्षु प्रत्येकं ऋषिकथनम् । ऋक्सङ्ख्याकथनञ्च ।

---

**No. 4215. सौभाग्यकवचम् ।** Substance, country-made paper, 10 × 4 inches. Folia 6. Lines, 9 on a page. Extent, 70 Ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Saubhágya-kavacha.** An amulet for obtaining the love of the husband.

**Beginning.** श्रीगणेशाय नमः । इदानीं सौभाग्यकवचमुच्यते ।

श्रीदेव्युवाच ।

कैलासशिखरे रम्ये सुखासीनं सुरार्च्चितम् ।
गिरिशं गिरिजा नत्वा स्तोत्रैर्वेदार्थगर्भितैः ॥
प्रणम्य परया भक्त्या ततोऽपृच्छत् कृताञ्जलिः ।
रहस्यं रक्षणकरं सर्वसम्पत्करं वद ॥

ईश्वर उवाच ।

एतत् सौभाग्यकवचं रहस्यातिरहस्यकम् ।
सौभाग्यकवचं देवि शृणु सौभाग्यदं परम् ॥
शिखायां सततं पातु महात्रिपुरसुन्दरी ।
शिरः कामेश्वरी नित्या तत्पूर्व्वं भगमालिनी ॥ इत्यादि ।

**End.** वश्यं भवति शीघ्रेण त्रैलोक्यं सचराचरम् ।
भूपालमहिला भूपाः किमु मायाविमोहिताः ॥

**Colophon** इति नित्याषोडशकार्णवे सौभाग्यकवचं नाम समाप्तम् ।

**विषयः ।** शिवाशिवयोः संवादे नराणां सौभाग्यप्राप्त्युपायकथनम् ।

---

**No. 4216** रुद्रन्यासः। Substance, country-made paper, $9\frac{1}{2} \times 3$ inches. Folia, 20. Lines, 7 on a page. Extent, 247 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Rudra-nyása.** Mystic figures made with the hands in honour of Rudra.

**Beginning.** श्रीगणेशाय नमः।

हरि ॐ। अथातः पञ्चाङ्गरुद्राणां न्यासपूर्व्वकं जपहोमार्च्चनाभिषेकविधिं व्याख्यास्यामः। यातेरुद्र शिवा तनूरघोरा पापकाशिनी। तया नस्तनुवा शंतम गिरिशन्त ताभिचाकशीहि। शिखायै नमः। ॐ अस्मिन् महत्यर्णवेऽन्तरीक्षे भवा अधि। तेषां शिरसे स्वाहा। इत्यादि।

**End.** तन्नो रुद्रः प्रचोदयात्। ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम्। उत्तरतत्पुरुषेश्वराय नमः निर्म्माल्यं विसृज्य। ॐ नमो भगवते रुद्राय। इति

विषयः। पञ्चाङ्गन्यासपूर्व्वकं महारुद्रप्रयोगकथनम्।

---

**No. 4217.** रामनामलेखनविधिः। Substance, country-made paper, $11 \times 3$ inches. Folia, 1. Lines, 7 on a page. Extent, 50 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Rámanáma-lekhana-vidhi.** This is said to be a part of the great *tántric* work entitled Rudra Yámala. It treats of the method of writing Ráma's name.

**Beginning.** श्रीगणेशाय नमः।

श्रीदेव्युवाच।

भगवन् सकला विद्याः श्रुतास्त्वाधिगता मया।
इदानीं श्रोतुमिच्छामि यत् त्वं शिक्षसि भैरव॥

ईश्वर उवाच।

ब्रह्मादिविबुधैः सर्वैः पृष्टो न कथितं मया।
तथापि कथयाम्यद्य यतस्त्वं प्राणवल्लभा॥
न देयं परशिष्येभ्यो नास्तिकेभ्यो नगेश्वरि।
नाशुश्रूषारतानाञ्च भेदामर्षप्रदायिनाम्॥ इत्यादि।

**End.** एतन्नामैव सर्वस्वं यदुक्तं तव वल्लभे ।
समासेन मया प्रोक्तं किमन्यच्छ्रोतुमर्हसि

**Colophon.** इति श्रीरुद्रयामले गौरीश्वरसंवादे रामनामलेखनविधिपटलं सम्पूर्णम् ।

विषयः । रामनामलेखनविधिकथनम् । तत्संख्याविशेषे फलविशेषकीर्त्तनञ्च ।

---

**No. 4218.** रोगशान्तिः । Substance, country-made paper, 9×4 inches. Folia, 9. Lines, 9 on page. Extent, 198 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Correct.

**Rogaśánti.** The consequences of getting fever in different days of the moon, and in different asterisms, and the method of getting rid of them by propitiatory ceremonies.

**Beginning** श्रीगणेशाय नमः ।

अथ बौधायनोक्ता ज्वराद्युत्पत्तौ शान्तयः । प्रतिपदि कष्टं सन्दे + + दिनान्यष्टादश । अग्निर्देवता । अग्निरस्मीति पूजामन्त्रः । हैमी प्रतिमा । घृतधूपो घृतदीपश्च । यथा सम्भवं नैवेद्य-घृतं होमद्रव्यं शान्तिर्भवति । इत्यादि ।

**End.** अष्टाविंशतिदिनानि क्रमात् पीड़ा । अन्ते सुखं । आश्लेषामघापूर्वाषाढ़ा-पूर्वभाद्रपदासु पञ्चे मृत्युरपि सम्भाव्यते । इति श्रीः ।

विषयः । प्रतिपदादितिथिविशेषे नक्षत्रविशेषे च ज्वराद्युत्पत्तौ तत्र तत्र भोगकालादि-कथनम् । प्रत्येकं शान्तिप्रकारकीर्त्तनञ्च ।

---

**No. 4219.** पिष्टपशुमीमांसा । Substance, country-made paper, 7×4 inches. Folia, 18 Lines, 11 on a page. Extent, 311 ślokas. Character, Nágara. Date, Sm. 1785. Place of deposit, Calcutta. Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Pishṭa-paśu-mímámsá.** By Náráyana Paṇḍit, son of Viśvanáth Súri. It treats of animal sacrifices though it teaches that killing animals is to produce evil consequences.

**Beginning.** श्रीगणेशाय नमः ।

श्रीमत्पूर्णगुणार्णवस्य वदनात् साक्षात्परब्रह्मणो
नि + ता चतुराननादिविबुधवृन्दैः शिरोभिर्धृता ।

या लोकचितयं निजेष्टविषये सम्यङ् नियुङ्क्ते तथा

विष्ठ + मयति स्वके + जननी सा मे प्रमाणं श्रुतिः ॥

इह खलु नानाविधदुःखसङ्कटदुर्गमे संसारकान्तारे निमग्नानामल्पास्थिरसुखलवोनिकामु द्योतमानास्वपि मनःप्रसादमनासादयतामधिकारिणां तन्निवृत्तये परमानन्दावाप्तये च सकलश्रुतिस्मृतीतिहासपुराणानां तदुपकरणीभूतमत्स्यमीमांसायाश्च सकलपुरुषार्थोपममंत्तप्रदभगवत्स्वरूपज्ञापनार्थं प्रवृत्तिरिति तत्त्वम् । इत्यादि ।

End. तेषामेवेदं हृदयङ्गमोऽस्त्वित्यखिलमतिमङ्गलम् ।

सर्व्वयज्ञेश्वरोऽनेन सर्व्वयज्ञफलप्रदः ।

सर्व्वयज्ञैकभुग्विष्णुः प्रीयतां पुरुषोत्तमः ॥

Colophon. इति श्रीमद्विद्वन्मुकुटरत्न श्रीविश्वनाथसूरिसूनु-नारायणपण्डितोन्नीता पितृ-पशुमीमांसा समाप्ता । संवत् १७८५ ।

विषयः । तत्र अनादिवासनानाममलिनचित्तानामपरिपक्वकषायाणां विना विषयवैराग्यं न प्रवृत्तिः । तदर्थञ्च विषयानित्यत्वमुपदिश्यमानमपि तावच्चेतसि न प्रतिबिम्बते यावन्न तत्रत्यं मालिन्यमपसरतीत्यत आदर्शस्येवान्तःकरणस्य शुद्धिरपेक्षितेति तदर्थं नित्यनैमित्तिककर्म्मविधयः प्रवर्त्तन्ते । कर्म्मणा ह्यन्तःकरणशुद्धौ सत्यां तत्र शुद्धादर्श इव शास्त्रार्थोपदेशः प्रतिफलति । तथाच श्रुतिः । कर्म्मणा ज्ञानमाप्नोति ज्ञानेनामृतो भवतीति । तच्च कर्म्म द्विविधम् । विहितानुष्ठानं प्रतिषिद्धवर्ज्जनञ्चेति । तेषु तेषु च कर्म्मसु सत्यधिकारे अननुष्ठानात् प्रत्यवायस्त्वधिकारः । तत्र अर्थो खलु सामर्थ्यमपेक्षते । सामर्थ्यं पुनर्द्विविधम् । अथ मन्त्रकारिमामर्थ्याच्च पदार्थानां विधिचशक्तिमत्त्वामद्भावः । तत्र कलौ अग्निष्टोमाद्यनुष्ठानावश्यकतानिरूपणम् । तथापि मन्त्राविनामर्थ-चेतुर्हिंसाविषयान् छागादिपशून् अविधाय तत्स्थाने तण्डुलनाकान् पिष्टपशून् वा घृतपशून् वा कृत्वा यागं समापयेदिति पिष्टपशुविधिविवेचनम् ।

---

**No. 4220. पारायणस्तोत्रम् ।** Substance, country-made paper, 10 × 4 inches. Folia, 1. Lines, 11 Extent, 12 ślokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Correct.

**Párấyaṇa-stotra.** Páráyana is a technical religious term. It means reciting a book from the beginning to the end. The present work treats of the beauty and excellence of Tripurá Sundarí, a form of Kálí worshipped in one of the three Mandalas, into which the Tantras divide India.

Beginning. श्रीगणेशाय नमः ।
शिवां पद्मासनारूढां शुद्धस्फटिकसन्निभाम् । ।
वन्दे वाग्देवतां देवीं महात्रिपुरसुन्दरीम् ॥
शैलाधिराजतनयां शङ्करप्रियवल्लभाम् ।
चरणेन्दुनिभां (?) वन्दे महात्रिपुरसुन्दरीम् ॥
सर्व्वलोकप्रियकरीं सर्व्वभूतेषु संस्थिताम् ।
सर्व्वैश्वर्य्यप्रदां वन्दे महात्रिपुरसुन्दरीम् ॥ इत्यादि ।

End. इति त्रिपुरसुन्दर्य्या दशकं यः पठेन्नरः ।
तस्य श्री-राज्य-रारोग्यसत्सन्तान-समृद्धिदम् ॥

Colophon. इति ज्ञानार्णवे पारायणस्तोत्रं सम्पूर्णम् ॥

विषयः । स्तुतिकथनव्याजेन त्रिपुरसुन्दर्य्या रूपगुणमाहात्म्यादिकथनम् ॥

---

No. 4221 फाल्गुनकृष्णचतुर्थीव्रतम् । Substance, country-made paper, 9 × 1½ inches. Folia, 5. Lines, 13 on a page Extent, 76 Ślokas, Character, Nágara. Date, Sm. 1837. Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Phálguna-kríshṇa-chaturthí-vrata.** The religious ceremony to be performed on the fourth day of the waning moon. This is said to be a part of the Brihannáradiya Purána.

Beginning. श्रीगणेशाय नमः ।
अरण्ये वर्त्तमानं तं पाण्डुपुत्रं युधिष्ठिरम् ।
सहान्वयं सुखासीनमाययौ व्यास आदरात् ॥
तं दृष्ट्वा मुनिशार्दूलं व्यासं प्रत्युद्ययौ नृपः ।
मधुपर्कयुतं चार्घं दत्त्वा तस्मै उवाच तम् ॥
अद्य मे सफलं जन्म भवदागमनं कृतम् ॥ इत्यादि ।

End. एवमुक्त्वा ततो व्यासस्तत्रैवान्तरधीयत ।
युधिष्ठिरस्तु तत् सर्व्वमकरोन्मुनिभाषितम् ॥
तेन व्रतप्रभावेण स्वराज्यं प्राप्तवान् ध्रुवम् ।
हत्वा रिपुगणान् सर्व्वानवाप्तः सकलां महीम् ॥
बुभुजे मेदिनीं राजा पुत्रपौत्रसमन्वितः ॥

**Colophon.** इति श्रीबृहन्नारदीये फाल्गुनकृष्णचतुर्थीव्रतं समाप्तम् ॥
संवत् । १८६०।

**विषयः ।** फाल्गुनकृष्णचतुर्थीव्रतविधिकथनम् । तत्कथाकीर्त्तनञ्च ।

---

**No. 4222. मेघमाला ।** Substance, country-made paper, 13 x 4 inches. Folia, 22. Lines, 11 on a page. Extent, 576 ślokas. Character, Nágara. Date, Sm. 1865 Place of deposit, Calcutta, Government of India Appearance, old. Verse Incorrect.

**Megha-málá.** An astrological work treating of the knowledge of months, days and *tithis*. It treats of the process of foretelling rains prognosticating famines, &c.

**Beginning.** श्रीगणेशाय नमः ।

अथ मेघमालायाः प्रारम्भः ।

अथातः संप्रवक्ष्यामि फल योगमनुत्तमम् ।
मासवारतिथीनाञ्च सस्यगज्ञानप्रकाशकम् ॥
प्रतिपदि रविवारश्चैत्रमासे यदि स्या-
न्न भवति खलुवृष्टिर्दुःखिता लोकसंघाः ।
अमृतकिरणवारो ज्ञा + + वाक्पतीनां
भवति ननु धरित्री शस्यतो + भिपूर्णा ॥ इत्यादि ।

**End** मीनान्ते वृश्चिकान्ते च वृषे कुम्भे च मेषगे ।
यावत् सौरिर्गुरो तिष्ठन् तावद्दुर्भिक्षलक्षणम् ॥
शनिरङ्गारको भानुरमावस्यान्तु माघवे ।
दुर्भिक्ष + + + घोर प्रेतपूर्णा वसुन्धरा ॥

**Colophon.** इति कालाकाल शुभाशुभलक्षण सम्पूर्णं । इति मेघमालायां मयूरचित्रकं समाप्तम् । सवत् १८६५ ।

**विषयः ।** भविष्यद्वृष्टिज्ञानोपायकथनम् । भाविदुर्भिक्षादिज्ञानोपायकीर्त्तनञ्च ।

---

**No. 4223. प्रयोगरत्नमाला ।** Substance, country-made paper, 9 x 4 inches. Folia, 42 Lines, 9 on a page. Extent, 622 ślokas Character Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, fresh. Prose. Incorrect.

**Prayogaratna-mála.** This is the name given to the commentary to the sacrificial section of Apastamba's work. The present commentary is by Vishnu Bhatta. There is another commentary of the same name or the same work by Caṇḍapa. The codex before us contains the commentary on the Agnihotra Praśna only.

**Beginning.** श्रीगणाधिपतये नमः ।

ॐ नमो भगवते सदाशिवाय नमः ।
यो वेदवपुराचारावयवो दर्शनेन्द्रियः ।
मामीरयन्नन्तरात्मा तं विज्ञानं गुरुं भजे ॥
कर्मब्रह्माध्वनीनस्य मन्त्रिभूपतिभूपतेः ।
व्याख्याग्निहोत्रप्रश्नस्य विष्णुभट्टेन तन्यते ॥

अग्न्याधेयानन्तरमग्निहोत्रं व्याचिख्यासुरधिकारं दर्शयति । अग्निहोत्रं व्याख्यास्यामः । अग्निहोत्रशब्दः कर्मनामधेयं । इत्यादि ।

**End** सत्यषाढिनोराजन्यस्य शुक्रयाद्दाग्निहोत्रमध्वर्युरिति ।
इत्थं राजाग्निहोत्रान्तमन्त्रतन्तुसुगन्धिभिः ।
सूक्तिप्रसूनैः पुष्णातु पुमर्थान् पुरुषोत्तमः ॥

**Colophon.** इत्यापस्तम्बीयाध्वरतन्त्रसूत्रतन्त्रव्याख्यायां प्रयोगरत्नमालायां षष्ठे प्रश्ने चतुर्थः पटलः । शुभं भूयात् ।

विषयः । आपस्तम्बीयाग्निहोत्रप्रश्नसूत्रस्य व्याख्यानमुखेन प्रयोगकथनम् ।

---

**No 4224.** प्रदोषव्रतप्रयोगः । Substance, country-made paper, 10×3½ inches Folia, 6 Lines, 14 on a page. Extent, 220 Ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India, Appearance, decayed. Verse. Correct.

**Pradosha-vrata-prayoga.** Treats of a ceremony to be performed by females at dusk for obtaining good fortune. This is said to be a part of the Skandapurána.

**Beginning.** श्रीगणेशाय नमः ।

अथ प्रदोषोद्यापनम् । स्कान्दे,पार्वत्युवाच ।
देव केन विधानेन प्रदोषोद्यापनं बुधैः ।
विधातव्यं नरैःस्त्रीभिः सन्तानसुखमिद्धये ॥

ईश्वर उवाच ।

त्रयोदश्यां मन्दवारे तदुद्यापनमाचरेत् ।
आचार्य्यं वरयेदादौ ब्राह्मणांस्तु त्रयोदश ॥
तेषां सम्पूजनं कुर्य्यान्मण्डलं तत्र कारयेत् ।
वेदिका तत्र कर्त्तव्या मण्डपे च सुशोभने ॥ इत्यादि ।

**End.** भवेन्न तस्य दारिद्र्यं जन्मान्तरशतेष्वपि ।
ज्ञानैश्वर्य्यसमायुक्तः सोऽन्ते शिवपुरं व्रजेत् ॥

**Colophon.** इति श्रीस्कन्दपुराणे ब्रह्मोत्तरखण्डे प्रदोषव्रतकथा समाप्ता ।

विषयः । स्त्रीभिः धनधान्यसम्मानार्थं प्रदोषव्रतानुष्ठानं कर्त्तव्यमिति तद्व्रतमाहात्म्यकथनमुखेन तस्य विधानकथनम् । तदुद्यापनविधिकथनम् । तद्व्रतकथाकीर्त्तनञ्च ।

---

**No. 4225. रामसहस्रनामस्तोत्रम् ।** Substance, country-made paper 14 × 1½ inches. Folia, 11. Lines, 10 – 12 on a page Extent, 277 Ślokas, Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India, Appearance, new Verse. Incorrect

**Ráma-sahasranáma-stotra.** The thousand names of Ráma as given in Rudra Yámala tantra in a dialogue between Rudra and Párvatí.

**Beginning** श्रीगणेशाय नमः । श्रीरामचन्द्राय नमः ।
कैलासशिखरे रम्ये नानाधातुविचित्रिते ।
नानाद्रुमलताकीर्णे नानापक्षिगणावृते ॥
नानापक्षिलतागुल्मवेष्टिते प्रमथावृते ।
देवदानवगन्धर्व्वकिन्नरैरुपशोभिते ॥
मन्दमारुतसंवीते पार्व्वतीपरमेश्वरौ ।
उपविश्य कथां शश्वच्चक्रतुस्तौ मुदान्वितौ ॥
भक्त्या शम्भुं प्रणम्याथ पार्व्वती परिपृच्छति ।
देवदेव महेशान सर्वागमविशारद ॥
त्वमेव शरणं नाथ त्राहि मां दुःखसागरात् ।
नाम्नां सहस्रं रामस्य ब्रूहि मे प्रमथाधिप ॥ इत्यादि ।

**End.** रामभद्रप्रसादेन शिवसंज्ञा नाम पार्वती ।
रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिञ्च विन्दति ॥

Colophon. इति श्रीरुद्रयामले रुद्रपार्वतीसंवादे रामसहस्रनामस्तोत्रं सम्पूर्णम् ।

विषयः । शिवाशिवयोः संवादेन श्रीरामस्य गुणमाहात्म्यादिप्रकटनपूर्वकं तस्य सहस्रनामकथनम् ।

---

No. 4226. महान्यासः । Substance, country-made paper, 10 × 4 inches. Folia, 17. Lines, 8 on a page. Extent, 272 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect

**Mahányása.** The process of reciting the S'atarudrí Súkta.

**Beginning.** श्रीगणेशाय नमः ;

अस्य रुद्रस्य प्रश्नस्यानुष्टुपच्छन्दः अघोर ऋषिः सङ्कर्षणमूर्त्तिस्वरूपो योऽसावादित्यः परपुरुषः स एष रुद्रो देवता अग्निक्रतुचरमायामिष्टिकायां शतरुद्रीयजपे विनियोगः । (?)

**End.** अग्निर्वायुः सूर्य्यश्चन्द्रमा दिश आपः पृथिव्योषधिवनस्पतय इन्द्रः पर्जन्य ईशान आत्मा पुनर्मे जयोदश । उत्तरन्यासः । सुमारथि० । हृदयाय० । यज्ञेन० । शिरसे० । + + + । शिखायै० । श्रौः ।

**Colophon** अतःपरं खण्डितम् ।

विषयः । महारुद्रप्रयोगविधिकथनम् ।

---

No. 4227 विश्वेश्वराष्टकम् । Substance, country-made paper, 7 × 4 inches. Folia, 5 Lines, 5 on a page Extent, 23 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, new. Verse Incorrect.

**Visvosvaráshtaka.** Eight verses in honor of Visvesvara the presiding deity of Benares.

**Beginning.** श्रीविश्वेश्वराय नमः ।

गङ्गातरङ्गरमणीयजटाकलापं
गौरीनिरन्तरविभूषितवामभागम् ।
नारायणं प्रियमनङ्गमदापहारं
वाराणसीपुरपतिं भज विश्वनाथम् ॥ १ ॥
वाचामगोचरमनेयगुणस्वरूपं
वागीशविष्णुसुरसेवितपादपीठम् ।

वामेन विग्रहवरेण कलत्रवन्तं
वाराणसीपुरपतिं भज विश्वनाथम् ॥ ९ ॥

End. श्रीविश्वनाथ करुणाकर शूलपाणे
शम्भो गिरीश शशिशेखर चन्द्रमौले ।
श्रीनीलकण्ठ मदनान्तक विश्वमूर्त्ते
गौरीपते मयि निधेहि कृपाकटाक्षम् ॥ ८ ॥
वाराणसीपुरपतेः परमेश्वरस्य
व्यासोक्तमष्टकमिदं पठते मनुष्यः ।
विद्याः श्रियं विपुलसौख्यमनन्तकीर्त्तिं
सम्प्राप्य देवनिलयं लभते च मोक्षम् ॥ ९ ॥

Colophon. इति वेदव्यासविरचितं श्रीविश्वेश्वराष्टकं समाप्तम् ।

विषयः । स्तुतिच्छलेन श्रीमद्विश्वेश्वरस्य रूपगुणमाहात्म्यादिवर्णनम् ॥

---

**No. 4228.** मणिकर्णिकाष्टकम्। Substance, country-made paper, 7 x 3 inches, Folia, 5 Lines, 5 on a page. Extent, 23 slokas Character Nagara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new Verse Generally correct.

**Manikarnikáshṭaka.** Eight verses in honor of Manikarnika the sacred burning ground at Benares by the great Sankaráchárya.

Beginning. श्रीमणिकर्णिकादेव्यै नमः ।
त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ
वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे ।
मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणा
त्तन्मध्याद्भृगुलाञ्छनो गरुडगः पीताम्बरो निर्गतः ॥ १ ॥
इन्द्राद्यास्त्रिदशाः पतन्ति नियतं भोगक्षये ते पुनः,
जायन्ते मनुजास्ततोऽपि पशवः कीटाः पतङ्गादयः ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति निष्कल्मषाः
सायुज्येपि किरीटकौस्तुभधरा नारायणाः स्युर्नराः ॥ २ ॥

End कल्पैः कोटिशतैः स्वपापनिधनैर्यद्यश्वमेधैः फलं
तत्सर्वं मणिकर्णिकास्नपनजं पुण्यप्रतिष्ठं भवेत् ।

स्तुत्वा स्तोत्रमिदं नरः पठति यः संसारपाथोनिधिं
तीर्त्त्वा पल्वलवत् प्रयाति सदनं तेजोमयं ब्रह्मणः ॥ ८ ॥

Colophon इति श्रीमच्छङ्कराचार्य्यविरचितं मणिकर्णिकाष्टकं समाप्तम् ।

विषयः । स्तोत्रव्याजेन मणिकर्णिकामाहात्म्यादिकथनम् ।

---

**No. 4229.** अन्नपूर्णाष्टकम् । Substance, country-made paper, 7 × 3 inches. Folia, 5. Lines, 5 on a page. Extent, 23 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government, of India, Appearance, new. Verse. Incorrect.

**Annapúrnáshṭaka.** Eight verses in honor of Anna Púrná by the same author.

**Beginning.** श्रीमदन्नपूर्णायै नमः ।

नित्यानन्दकरी वराभयकरी सौन्दर्य्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥
नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी ।
काश्मीरागुरुवासिताङ्गरुचिरे काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥

**End.** सर्वत्राणकरी महाशुभकरी विश्वेश्वरी श्रीधरी
साक्षान्मोक्षकरी निरामयकरी विद्यार्थविद्याधरी ।
आयुः-कीर्त्ति-यशः-पराक्रमकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥

Colophon. इति श्रीमच्छङ्कराचार्य्यविरचितं श्रीमदन्नपूर्णाष्टकस्तोत्रं समाप्तम् ।

विषयः । स्तुतिकथनव्याजेन अन्नपूर्णाया माहात्म्यादिकीर्त्तनम् ।

---

**No. 4230** प्रदोषव्रतनिर्णयः । Substance, country-made paper, 11 × 4 inches. Folia, 5. Lines, 9 on a page. Extent, 81 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose, and Verse.

**Pradoshavrata-nirṇaya.** Treats of a ceremony to be performed on the thirteenth day of the moon at dusk, the principal ceremonial being the worship of Siva. This appears to be a part of the Brahmottara Khaṇḍa of the Skanda Purána.

**Beginning.** श्रीगणेशाय नमः ।

अथ प्रदोषनिर्णयः । तत्र प्रदोषव्रतं ब्रह्मोत्तरखण्डे ।

पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा ।

घटिका त्रिरस्तमयात् पूर्वं स्नानं समाचरेत् ॥

शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः ।

कृतसन्ध्याजपविधिः शिवपूजां समारभेत् ।

अत्र त्रयोदशी प्रदोषव्यापिनी ग्राह्या । तत्रैव पूजाविधानात् । प्रदोषप्रमाणं स्कान्दे ।

त्रिमुहूर्त्तः प्रदोषः स्याद् भानावस्तंगते सति ॥

मदनरत्ने व्यासः ।

नक्तन्तु तत्र कर्त्तव्यमिति शास्त्रविनिश्चयः । इति ।

**End** अस्मिन् दिवा नक्तभोजने उत्तमोत्तमसुक्रमं. मध्यमोपाभ्नः । ततः प्राचीनो जघन्य इति ।

**Colophon** इति दिवामौरनक्तप्रदोषनिर्णयः ।

विषयः । चतुर्दश्यां शिवपूजाव्रते प्रदोषनिरूपणम् । तत्र नक्तादिकालनिरूपणम् । त्रयोदश्यां शिवव्रतारम्भकालादिनिरूपणम् । वारादियोगे प्रदोषविधिकथनञ्च । इति शम् ।

---

**No 4231.** प्रशस्तिकाप्रकरणम् । वा प्रशस्तिविधिपरम्परा । Substance country-made paper, 10×4 inches. Folia, 5. Lines, 7 on a page. Extent, 70 ślokas. Character Nágara Date, ? Place of deposit, Calcutta, Government of India, Appearance, new. Prose and Verse. Incorrect.

**Praśastiká,-prakaraṇa, or Praśasti-vidhi-parampará.** A letter-writer or rather the form of writing superscriptions to letters.

**Beginning.** श्रीगणेशाय नमः ।

अथ प्रशस्तिकाप्रकरणम् । तत्र प्रशस्तिनामानः पूर्वं श्रीशब्दमुख्यानियम तज्ज्ञोऽभियुक्तैः ।

षड्गुरोः स्वामिनः पञ्च द्वौ भृत्ये चतुरो ऽरौ ।

श्रीशम्भ्वादास् वयो मित्रे एकैकं पुत्रं भार्य्ययोः (?) ॥

तथादौ राज्ञः प्रशस्तयः। स्वस्ति श्रीमत्समस्तानन्दमन्दिरगुणवृन्दसुन्दरगुकुन्दपदारविन्दमकरन्द-विन्दुमिलितमानसमधुरसदसकलपुरुषार्थेषु सकलार्थिमनोरथवितरणलक्ष्मीकृतकल्पद्रुमादिदर्थेषु (?)। इत्यादि।

End स्वस्ति श्रीमद्दुद्दामप्रेमस्नेहमधुरिताभ्रदादि भक्तजनेषु प्राणप्रकृतिषु नेत्रयो-रधिष्ठानेषु कर्णयोरधिदेवेषु गिरामागारेषु नैयायिकेष्विव प्रकटितसकलप्रमाणेषु श्रीमद्-गुरुचरणसरोजेषु।

Colophon. इति प्रशस्तिविधिपरम्परा समाप्ता।

विषयः। प्रशस्तिलेखनविधिकथनम्।

---

No 4232 नृसिंहपरिचर्य्या। Substance, country-made yellow paper, $9\frac{3}{4} \times 3\frac{1}{2}$ inches. Folia, 6. Lines, 9 on a page. Extent, 126 ślokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India Appearance, old Prose. Incorrect.

**Nrisiñhaparicharyyá.** On the worship of Nrisinha. An incarnation of Vishnu and the method of placing the Pavitra or Strainer in his hand at the time of worship. This appears to be a part of a *Tantrik* work as its chapters are entitled *Patalas*.

**Beginning.** श्रीगणेशाय नमः।

अथ श्रौतस्मार्त्तमार्गेण नृसिंहोपासकानां बौधायनोक्तसंगृह्य महार्च्चितादि वा (?) गुणोपसंव-तिन्यायात् पवित्रादिविधिं ब्रुवे। श्रावणसिं हेमेन न रोपणा (?) तासेण वा पवित्राणि कार्य्याणि।

**End** श्वोभूते तत्तन्मूलमन्त्रेण देवाय दमनकं समर्प्य महापूजां कृत्वा देव देवेति कर्म्म निवेद्य गुर्वादीन् संपूज्य बन्धुभिः सह भुञ्जीतेति सायं साधारणो विधिः। विशेषतस्तु तत्तत्कल्पोक्तो द्रष्टव्यः।

**Colophon** इति नृसिंहपरिचर्य्यायां पञ्चमः पटलः।

विषयः। नृसिंहपरिचर्य्यायां पवित्रारोपणविधिस्तत्प्रयोगः नृसिंहपूजा चाभिहिता।

---

**No. 4233** निर्णयसिन्धुः, वा निर्णयकमलाकरः। Substance, country-made paper, $17 \times 6\frac{1}{2}$ inches Folia, 176. Lines, 17 on a page. Extent, 11,963 ślokas. Character, Nágara. Date, Sm. 1822. Place of deposit, Calcutta, Government of India Appearance, old. Prose and Verse. Generally correct.

**Nirṇaya-sindhu** *alias* **Nirṇaya-kamalákara**. This work was compiled in the year 1638 of the Vikrama era corresponding to 1572 A. D., by Kamalákara the son of Rámakrishna, the grandson of Bhatta Náráyana and the great-grandson of Rámésvara. It is a standard work on Hindu law in the North Western Provinces and the Punjab. It treats of the auspicious moments for the performance of various Hindu ceremonies and the method and occasion of performing them. It treats of the Saṃskáras or the ceremonies for the purification of the soul of a brahmana, of the ceremonies for the consecretion of temples, images, wells, tanks, trees, &c., and of the daily and occasional duties of brahmans.

**Beginning.** श्रीगजाननगुरुसरस्वतीभ्यो नमः ।

कारुण्यैकनिकेतं रामं सीतालताश्रयम् ।
विश्वामित्राध्वरायत्तनिममालम्बशाखिनं वन्दे ॥
सक्षौमचापं कम्पद्रुतनरम्भितगोकुलम् ।
बर्हापीडं घनश्यामं महः किञ्चिदुपास्महे ॥
वेदार्थधर्मरक्षायै मायामानुषरूपिणम् ।
पितामहं हरिं वन्दे भट्टनारायणाह्वयम् ॥
यत्पादसंस्मृतिः सर्वमङ्गलप्रतिभूर्मता ।
तान् भट्टरामकृष्णाख्यान् श्रीतातचरणान् नुमः ॥
सर्वकल्याणसन्दोहनिदानं यत्पदद्वयम् ।
पुनर्दौसोदरामम्बामुमाख्यां नौमि सादरम् ॥
विन्दुमाधवपादाब्जमाध्वीकलविपचम् ।
ज्यायांसं भ्रातरं भट्टदिवाकरमुपास्महे ॥
हेमाद्रिमाधवमते प्रविचार्य्य सम्य-
गालोच्य तत्त्वमथ सौर्यहतां परेषाम् ।
श्रीरामकृष्णतनयः कमलाकराख्यः
काले यथामति विनिर्णयमातनोति ॥
सन्ति यद्यपि विद्वांसस्तत्त्वज्ञास्तत्र कोविदाः ।
तथाप्यमुष्य वैदग्धीं किञ्चिद्विज्ञातुमीप्सते ॥

तत्र संक्षेपतः कालः षोढा ।

**End** तद्विधिरन्यत्र विशेषः प्रागुक्त इत्यलं बहुना ॥

एवं निरूपितमिदं गहनन्तु धर्म-
तत्त्वं विचार्य्य वचनैश्च बुधैश्च सम्यक् ।
तद्दोषदृष्टिमपहाय विवेचनीयं
विद्वद्भिरित्यविरतं प्रणतोऽस्मि तेषु ॥
— — — — — — — ।

यो भाट्टतन्त्रगहनार्णवकर्णधारः
शास्त्रान्तरेषु निखिलेष्वपि मर्मभेत्ता ।
योऽत्र श्रमः किल कृतः कमलाकरेण
प्रीतोऽमुनास्तु सुकृती बुधरामकृष्णः ॥
श्रीभट्टरामेश्वरसूरिसूनु श्रीभट्टनारायणसूरिसूनोः ।
श्रीरामकृष्णस्य सुतः कृतीमं व्यधान्निबन्धं कमलाकराख्यः ॥
नानानिर्णयवत्त्वान्निर्णयसिन्धुः प्रोच्यतां विबुधाः ।
निर्णयसरोजवत्त्वान्निर्णयकमलाकरोऽप्यस्तु ॥
वसुधातुऋतुभूमिते गतेऽब्दे
नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽयं
रघुपतिपादसरोरुहेऽर्पितश्च ॥
जगति सकलविद्यासिन्धुसृष्टि + यानां
परभणितिपरीक्षा युज्यते सज्जनानाम् ।
तदिह मम + बन्धे दूषणं भूषणं वा
यदि भवति विदग्धैस्तद्यवश्यं विमृश्यम् ॥

Colophon. इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमद्रामेश्वरभट्टसूरिसूनुनारायणभट्टसूत विद्वन्मुकुटहीराङ्कुरश्रीरामकृष्णभट्टात्मजकमलाकरभट्टकृते निर्णयसिन्धौ तृतीयः परिच्छेदः समाप्तः । समाप्तश्चायं निबन्धः । संवत् १८११ ॥

विषयः । अब्दशब्दनिर्वचनपूर्वकं अब्दभेदनिरूपणम् । अयननिर्णयः । ऋतुनिर्णयः । मासभेदादिनिरूपणम् । वेधस्वरूपादिकथनम् । एकभक्तनिरूपणादिकम् । अयाचितादिनिर्णयः । नक्तव्रतनिरूपणम् । व्रताधिकारिनिरूपणम् । तत्कालादिनिरूपणम् । तदुद्यापने विशेषकथनम् । व्रतत्यागे प्रायश्चित्तकथनम् । व्रतत्यागप्रायश्चित्तकथनम् । रजस्वलादेर्व्रते प्रतिनिधिविवेकः । प्रतिपदादितिथिस्वरूपकथनपूर्वकं तत्र तत्र कृत्यविशेषकथनम् । तत्र एकादशीमसामसक्तौ भक्ष्यनिरूपणम् । व्रतसंग्रहनिरूपणपूर्वकं तत्र तत्र प्रायश्चित्तकथनम् । अव्रतघ्नादिनिरूपणम् । सूतकादौ व्रतविधि-

व्रतकथनम्। छुरिकाबन्धकथनम्। विवाहनिरूपणम्। मातुलकन्यापरिणयनिरूपणम्। दत्तक-सापिण्ड्यनिरूपणम्। गोत्रप्रवरनिर्णयः। कुम्भविवाहविधिकथनम्। अश्वत्थविवाहविधिकथनम्। विष्णुमूर्त्तिदानानन्तरविवाहविधिकथनम्। सोदरयोर्विवाहनिर्णयः। ऋतुमतीविवाहविधिकथनम्। ऋतुप्रायश्चित्तकथनम्। पैशाचादिविवाहविधिकथनम्। विवाहमण्डपादिविधिकथनम्। वाग्दानोत्तरं वरस्य देशान्तरादिगमने विधिनिरूपणम्। कन्यादानादिविधिकथनम्। गृहप्रवेशहोमविधिकथनम्। औपासनारम्भकालनिरूपणम्। द्विरागमनकालादिनिरूपणम्। आधानादिविधिकथनम्। परिवेदनविधिविवेचनम्। शूद्रसंस्कारविधिकथनम्। जलाशयादिविधिकथनम्। कूपाद्युत्सर्गविधिकथनम्। वृक्षारोपणादिविधिकथनम्। मूर्त्तिप्रतिष्ठादिविधिकथनम्। प्रतिमाभेदकथनम्। शिवलिङ्गभेदादिकथनम्। तत्र तत्र अधिकारनिरूपणम्। त्रिपुण्ड्रादिविधिकथनम्। रुद्राक्षधारणादिविधिकथनम्। जीर्णोद्धारविधिकथनम्। पुष्पादेः पर्य्युषितत्वादिविवेचनम्। अथ कृषिकालादिनिरूपणम्। धान्यमर्द्दनादिविधिकथनम्। नववस्त्रालङ्कारादिधारणनिरूपणम्। गजाद्यारोहणनिर्णयः। भृत्यारम्भनिरूपणम्। राजदर्शनविधिकथनम्। क्रयविक्रयादिनिरूपणम्। सेतुबन्धनादिविधिकथनम्। गजदन्तच्छेदादिविधिकथनम्। निःक्षेपकालनिरूपणम्। ऋणमोक्षादिविधिकथनम्। राजमुद्रादिविधिकथनम्। नौकाकृत्यनिरूपणम्। शयनासनभोगविधिकथनम्। श्मश्रुकर्मनिर्णयः। नवान्नविधिकथनम्। नवफलादिभक्षणविधिकथनम्। होमनिरूपणम्। ज्वरादिशान्तिविधिकथनम्। भैषज्यकालनिरूपणम्। अथ दन्तधावनादिविधिकथनम्। स्नानादिविधिकथनम्। गृहारम्भकालनिरूपणम्। कलिवर्ज्यनिरूपणम्। अथ श्राद्धलक्षणादिकथनम्। गयाश्राद्धादिविधिकथनम्। श्राद्धनिषिद्धदेशादिकथनम्। श्राद्धकालादिनिरूपणम्। स्त्रीश्राद्धे विशेषकथनम्। वैश्वदेवविधिकथनम्। नित्यश्राद्धविधिकथनम्। रात्रौ श्राद्धविधिकथन्म्। श्राद्धानुकल्पविधिकथनम्। वृषोत्सर्गविधिकथनम्। एकोद्दिष्टपार्व्वणादिविधिविवेचनम्। अथ तर्पणविधिकथनम्। तीर्थश्राद्धादिविधिकथनम्। तत्र वपनादिविधिविवेचनम्। अथ अशौचनिरूपणम्। अनुगमनादिविधिकथनम्। आत्मघाते प्रायश्चित्तकथनम्। नारायणबलिविधिकथनम्। सन्न्यासिमरणादौ विधिकथनम्। पर्णनरदाहादिविधिकथनम्। प्रेताधानादिविधिकथनम्। उदकदानादिविधिकथनम्। अस्थिसञ्चयनादिविधिकथनम्। नवश्राद्धविधिकथनम्। एकादशाहकृत्यनिरूपणादिकम्। मासिकसपिण्डीकरणादिकथनम्। प्रथमाब्दे निषिद्धादिकथनम्। रजस्वलादिमरणे विशेषकथनम्। विधवाधर्म्मनिरूपणम्। सन्न्यासग्रहणविधिकथनम्। यतिधर्म्मनिरूपणम्। यतिसंस्कारविधिकथनम्। द्वादशाब्दादूर्द्ध्वं मेलनविधिकथनञ्च ॥ इति शिवम् ॥

---

**No. 4234 अनिला, वा प्रयोगदीपिका।** Substance, country-made paper, 12 × $4\frac{1}{2}$ inches. Folia, 44. Lines, 10 on a page. Extent, 886 ślokas. Character, Nágara. Date, Sm. 1601. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and Verse. Incorrect.

**Anilá, or Prayogadípiká.** The method of performing ceremonies of Darśa Paurnamása, &c., in accordance with the interpretation of the Apastambíya Sútras by Dhúrtta Svámí. By Kesava an inhabitant of Tálabrinda.

**Beginning.** श्रीगणेशाय नमः ।

गङ्गाप्रवाहपरिपूतजटाकलाप
क्रोडत्फणीन्द्रचकितेन्दुमणिप्रभाभिः ।
प्रक्षालितस्फुटितताण्डवारम्भ
प्रज्ञेन कालविषकण्ठहरं नमामि ॥

आपस्तम्बीयसूत्रस्य धूर्त्तस्वामिव्याख्यानुसारेण आश्वलायनसिद्धान्तप्रचलितामविरुद्धामप्युपसंहृत्य दर्शपूर्णमासावारभ्याग्निचयनपर्य्यन्तानां कर्म्मणां प्रयोगवृत्तिः क्रियते । सामान्यानि नित्यान्यनु + + यिना कर्त्तव्यानि—इत्यादि ।

**End** अग्निहोत्रे दर्शपूर्णमासौ चौलकर्म्म ।
एषा वैदिकवृन्देन तालवृन्दनिवासिना ॥
केशवेन कृता इति प्रयोगस्य प्रदीपिका ॥

**Colophon.** इति दर्शपूर्णमासानिला समाप्ता ।
संवत् १९०१ ।

विषयः । आपस्तम्बसूत्रस्य धूर्त्तस्वामिव्याख्यानुसारेण दर्शपूर्णमासप्रयोगकथनम् ।

---

**No 4235 प्रवासविधिः ।** Substance, country-made paper, 9 × 4 inches. Folia, 4. Lines 8 9 on a page. Extent, 38 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose, and Verse. Incorrect.

**Pravása-vidhi.** Treats of the ceremonies to be performed by a brahman who has taken the vow of maintaining the sacred fire throughout his life, on the occasion of his going to a distant place for the purpose of a long sojourn.

**Beginning.** श्रीगणेशाय नमः ।

अथ प्रवासविधिः । अग्नीन् विहृत्य प्रस्थास्य मध्यान् आचम्य प्राणानायम्य प्रवासविधिं करिष्ये इति सङ्कल्प्य गार्हपत्यतीर्थेन प्रविश्य आहवनीयगार्हपत्ययोर्मध्ये समीपे तिष्ठन् उपतिष्ठते । संज्ञपग्रन् मे पाहि । एवं गार्हपत्यम् । इत्यादि ।

End विच्छिन्नाग्निश्चेत् प्रत्यग्निं मन्त्राहुतिः । आगमोत्तरमनेनैव उपस्थानं । परि-समूहनादि पूर्ववत् ।

Colophon इति प्रवासविधिः ।

विषयः । अग्निहोत्रिणः प्रवासगमने आहवनीयादिविधिनिरूपणम् । तत आगमने पुनस्तद्विधिकथनम् । प्रकारान्तरेण उपस्थानविधिकथनञ्च ।

---

No. 4236. पुनःसन्धानम् । Substance, country-made paper, 9 × 4 inches. Folia, 5. Lines, 7-8 on a page. Extent, 70 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Punah-sandhána.** The rekindling of the sacred fire at the end of a long sojourn.

**Beginning.** श्रीश्रीगणेशाय नमः ।

अथ पुनःसन्धानम् । आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य विच्छिन्नदिनादारभ्य एतावन्तं कालं गृह्याविच्छेदजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकप्रायश्चित्तममुकप्रत्याम्नाय-द्वारा श्रीपरमेश्वरप्रीत्यर्थं—इत्यादि ।

**End.** समानतन्त्रकश्चैव चोभदयमिदं भवेत् ।

**Colophon.** इति पुनःसन्धानं समाप्तम् ॥ शाके १७१६ ।

विषयः । विच्छिन्नस्य अग्नेः पुनः सन्धानविधिकथनम् ।

---

No. 4237 पुरुषार्थचिन्तामणिः । (विवाहप्रकरणम् ।) Substance, country-made paper, 12 × 5 inches Folia, 20. Lines, 11 on a page. Extent, 617 ślokas. Character. Nágara. Date, ? Place of deposit, Calcutta, Government of India, Appearance, Fresh. Prose and Verse. Incorrect.

**Purushártha-chintámani.** Seems to be a series of Hindu law compilations by Vishnu Bhatta surnamed Árabalí. The present Codex treats of marriage only, and as it shows a special interest in proving the validity of marriage with maternal uncle's daughter, a custom prevailing in Southern India the work seems to have been compiled for that country.

**Beginning.** श्रीः ।

अथ विवाहोऽभिधीयते । तत्र दक्षः ।

वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्त्तनपूर्व्वन्तु लक्षण्यां स्त्रियमुद्वहेत् ॥
अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥

मनुः ।

गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम् ॥ इति ।

याज्ञवल्क्योऽपि ।

अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ॥ इत्यादि ।

**End** इतरो दाक्षिणात्य इतरस्मिन् उत्तरदेशे मातुलसम्बन्धं कुर्व्वन् दुष्यति, न स्वदेशे । तथेतर उदीच्य इतरस्मिन् दक्षिणदेशे सीधुपानादि कुर्व्वन् दुष्यत्येवेति सुधीभिर्विभावनीयमिति दिक् ।

**Colophon.** इति श्रीमदाढवल्लुपनामकविष्णुभट्टात्मजपुरुषार्थचिन्तामण्यन्तर्गतसापिण्ड्यविचारः समाप्तः ।

**विषयः ।** विवाहयोग्यकन्यालक्षणादिनिरूपणमुखेन विस्तरतः सापिण्ड्यविवेककथनम् । दाक्षिणात्यानां मातुलकन्यापरिणयनस्य धर्म्यत्वव्यवस्थापनञ्च ।

---

**NO 4238 पञ्चमाश्रमविधिः ।** Substance, country-made paper 10 × 4½ inches. Folia, 2. Lines, 10 on a page. Extent, 27 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose and Verse. Incorrect.

**Panchamáśrama-vidhi.** By Saṃkaráchâryya. The four stages of the life of a Brahman are well known. This work treats of a fifth stage, namely, a stage in which a brahman should give up the badges of the fourth stage, his walking staff, his water-pot, &c., and travel all alone like a child or a lunatic or a goblin. This stage is sometimes called the *Paramahaṃsa* stage.

**Beginning.** श्रीगणेशाय नमः ।

अथ पञ्चमाश्रमविधिं व्याख्यास्यामः । तत्र दण्डादिविसर्ज्जनमन्त्रमाह ? उदकमयमोममयादि·

शुभदिने प्रातराह्निकादिकं सम्पाद्य गुरोर्वन्दनपूर्व्वकं तदाज्ञया ब्राह्मणद्वारा तूष्णीमग्निं प्रज्वा-
ल्याभ्यर्च्य ब्रह्मसूत्रं शिथिलीकृत्य जुहुयात् ।

End. यत्किञ्चित्स्नानसन्ध्यादिजपध्यानादितत्परः ।
क्षुत्पिपासानिवृत्त्यर्थमन्नोदकपरायणः ॥
परदारपरद्रव्यधातुस्पर्शविवर्ज्जितः ।
एकाकी सञ्चरेद्भूमौ बालोन्मत्तपिशाचवत् ॥

Colophon. इति शङ्कराचार्य्यविरचितपञ्चमाश्रमविधिः ।

विषयः । सन्न्यासोत्तरं दण्डकौपीनादिपरित्यागरूपपञ्चमाश्रमग्रहणविधिकथनम् । तत्र चाग्नौ
दण्डनिःक्षेपादिविधिकथनम् । कमण्डल्वादिस्फोटनविधिकथनञ्च ।

---

**No. 4239** पञ्चपक्षिशकुनम् । Substance, country-made paper, 22 × $3\frac{1}{2}$ inches. Folia, 3. Lines, 6 on a page. Extent, 532 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose, and verse. Incorrect.

**Pañchapakshi-śakuna.** A short treatise on fortune-telling by the appearence of five kinds of birds.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य श्रीमहादेवं सर्व्वशास्त्रविशारदम् ।
भविष्यदर्थबोधाय पप्रच्छ मुनयो मुदा ॥
तेषां वचनमाकर्ण्य गिरिजाय महेश्वरः ।
त्रिकालज्ञानबोधार्थं पञ्चपक्षिप्रदर्शनम् ॥
अनेन शास्त्रसारेण लोके कालत्रयं प्रति ।
बलाबलानि दृश्यन्ते सर्व्वकार्य्येषु निश्चितम् ॥
आगतं प्रच्छकं दृष्ट्वा दैवज्ञः सावधानतः ।
यद्यत् करोति कर्म्माणि तस्मात् सर्व्वं विचारयेत् ॥

**End** ममित्र (?) भागः । इत्येवं जयो + + मृत्योऽसि ।
इत्युक्तं पञ्चपक्षिणां लाभालाभं जयाजयम् ।
येन विज्ञानमात्रेण त्रिकालज्ञो भवेन्नरः ॥
तावद्गर्ज्जन्ति शास्त्राणि वागीशानमनेकशः (?) ।
यावन्न श्रूयते पक्षिशकुनं शङ्करोदितम् ॥

**Colophon** इति महादेवविरचितं पञ्चपक्षिशकुनं समाप्तम् ॥

विषयः । प्रश्नकर्मभावविशेषेण त्रैकालिकशुभाशुभचिह्ननप्रकारकीर्त्तनम् ॥

No. 4240. प्राणाभरणम्, वा राजवर्णनम् । Substance, country-made paper, 12 x 4 inches Folia, 4. Lines, 16 on a page Extent, 224 slokas Character, Nágara Date. ? Place of deposit, Calcutta Government of India Appearance, new. Verse Incorrect

**Pránábharaṇa, or Rájavarnana.** In praise of Rájá Pránanáráyana Deva of Kámarúpa in Assam by Jagannatha Paṇdit.

**Beginning.** श्रीगणेशाय नमः ।

विश्वार्णव गुणशता समुदितो भूभार + + भरः (?)
कालोऽयं कलिराजगाम जगतोलावण्यकुक्षिम्भरः ।
एवं भावनया मदीयकविते मौनं किमालम्बसे
जागर्त्ति क्षितिमण्डले चिरमिव श्रीकामरूपेश्वरः ॥
करतलविनिर्गलद्विरलदानजलोम्नासितावनिवलयः ।
धनदाद्यमहितमूर्त्तिर्जयतितरां सार्व्वभौमोऽयम् ॥ इत्यादि ।

**End.** रण दीनान् देवान् दग्धदनविद्रावयति (?)
प्रभावप्रागल्भ्यं त्वयि तु मम माऽस्य परिकर ।
ललाटोद्यज्ज्वालाकवलितजगज्जालविभवो
भवो मे कोदण्डं भूतविशिखवेगं कलयतु ॥
कियदिदमधिकं मे यद्द्विजाचार्यमिव
कवचमरमणीयं कुण्डलं चार्पयामि ।

**Colophon** इति पण्डितेन्द्रजगन्नाथकृतराजवर्णनम् ।

विषयः । कामरूपाधिपतेः प्राणनारायणस्य यशोगुणादिवर्णनम् ।

---

No. 4241 अनुक्रमणिकाविवरणम् । Substance, country-made paper, 10 x 3 inches Folia, 89 Lines, 7 on a page. Extent, 962 slokas. Character, Nágara, Date, ? Place of deposit, Calcutta, Government of India Appearance, old Prose. Incorrect

**Anukramaṇiká-vivaraṇa.** By Jagannáth. An Index to the Rigveda Váskala Shákhá giving the Rishis, Chhandas and

Devatas. From Jagannátha's statement it appears that the Váshkalas had 1028 − 1017 = 11 súktas more than the Sákalas, while their number of richs fall short by 10580 − 10552 = 28. This does not agree with Weber's statement given in foot note No. 21 in page 32 of the second edition of the History of Indian Literature "that the recension of the Báshkalas had eight hymns more than that of the Sákalas." The Bálakhilyas are here said to be 18 in number while Sáyana in his commentary on the Aitareya Brahmana says they are eight and Max Mullar and Aufrecht say they are eleven.

**Beginning.** श्रीगणेशाय नमः ।

प्रणम्य विष्णुं शिरसाव्ययं समं
शिवञ्च सोमं वृषभेन्द्रगामिनम् ।
गणाधिपं भक्तमनोरथप्रदं
हरिञ्च वाक्सिद्धिकरीञ्च भारतीम् ॥
अनुक्रमणिकोक्तानि सूक्तादिप्रभृतीन्यहम् ।
छन्दोऽन्तानि निबध्नामि जगन्नाथो यथामति ॥

सूक्तादीनि सूक्तप्रतीकऋक्संख्यऋषिदैवतछन्दांसि प्रतिसंख्यमृचां संख्याशब्दैरेव विलिख्यते ।

अध्यायानाञ्च ऋक्संख्या सान्तेष्वङ्कैर्विलिख्यते ।
प्रायोऽत्र ऋषयः सर्व्वे लिख्यन्ते गोत्रसंयुताः ॥
प्रगाथानाञ्च सर्व्वेषां तत्तच्छन्दोऽभिधाः पुनः ।
आप्रीसूक्तेषु सर्व्वेषु समिद्धोऽग्न्यादिदेवताः ॥

इति परिभाषा । निदर्शनानि लिख्यन्ते परिभाषोदितान्यपि पदपङ्क्त्यादिभेदानां प्रगाथानाञ्च सर्व्वशः । चकारान्निवृदादीनामित्यर्थः । यथाग्निमीळे प्रभृतिसूक्तानामृक्संख्या ऋषिदैवतछन्दांसि विलिख्यन्ते । इत्यादि ।

**End.** आद्याग्नेयी । तृतीया त्रिष्टुप् । तृतीया त्रिष्टुप । ऋचः २१८ । सूक्तानि ४९ । ऋचः १२८१ । सूक्तानि १४६ (?) । इत्यष्टमाष्टके अष्टमोऽध्यायः । ऋचां संख्या १०५५२ वाष्कलशाखायां पूर्त्तिः स्यात् । सूक्तानां संख्या १०२८ । बालखिल्यरहितद्विपदानां चतुष्पदा त्वा ऋक्संख्या १००६ बालखिल्यवर्गः १८ । १०१४ । शिवम् ।

विषयः । ऋग्वेदवाष्कलशाखायामनु ऋषिच्छन्दोदैवतनिरूपणं सूक्तसंख्यादिकथनं । तत्र तत्र ऋक्संख्यादिनिरूपणञ्च ।

---

**No. 4242** **अर्थप्रकाशिका।** Substance, country-made paper, 12 × 3½ inches. Folia, 35. Lines, 8 on a page. Extent, 332 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old, mostly destroyed by worm. Prose. Incorrect.

**Artha-prakásiká.** By Raghudeva. This a new commentary on the Kávyaprakásha unknown as yet to Aufrecht. The work is, unfortunately, incomplete. The author is an advocate of the theory that the Kárikás are by Bharata Muni and the vritti by Mammaṭa. The commentator explains only the Karikás which are, in his opinion, Bharatánana-saṃbhúta or pronounced by Bharata.

**Beginning.** श्रीगणेशाय नमः।

रघुदेवकृतानेककृतिनामस्तु तोषिका।
भरताननसम्भूतकारिकार्थप्रकाशिका॥

भरतमुनिः स्वकर्त्तृककाव्यरसास्वादनकारणकारिकात्मकालङ्कारशास्त्रसमाप्तिप्रतिबन्धकविघ्नविघातय प्रत्यादौ भारतीस्तुतिरूपमङ्गलमाह। नियतिकृतेति। भारती वागधिष्ठात्री देवता जयति उत्कर्षविशिष्टा भवति। भारत्या उत्कर्षसम्पादकत्वं हेतुगर्भविशेषणमाह। कवेर्निर्मितिमादधतीति। इति।

**End.** सङ्केतपदविषयीभूतार्थपरिचयं विना तद्घटितोपदर्शितलक्षणज्ञानासम्भवात्

**Colophon.** (अतःपरं खण्डितम्।)

**विषयः।** काव्यप्रकाशाभिधानालङ्कारसन्दर्भस्य द्वितीयांशाभोगकतिपयपङ्क्तिपर्य्यन्तस्य व्याख्यानम्।

---

**No. 4243.** **अनुवाकानुक्रमणी।** Substance, country-made paper, 12 × 3½ inches. Folia, 3. Lines, 11 on a page. Extent, 75 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Anuvákánukramaṇí.** An index of the Anuvákas of the Ṛig-Veda, Sakala Shákhá, by Saunaka.

**Beginning.** श्रीगणेशाय नमः।

पितृदेवर्षिमाध्येभ्यो नाधुवेभ्यश्च सर्व्वतः।
आचार्य्येभ्यो गुरुभ्यश्च प्रणम्य प्रयतः शुचिः॥
मधुच्छन्दः प्रभृतिभिऋषिभिर्द्दिं तपोधनान्।
दृष्टानामनुवाकानामथ वक्ष्याम्यतन्द्रितः॥

आदौ सूक्तपरिमाणं संख्याश्च क्रममेवच ।

मण्डले मण्डले चैव यावन्तो हि समीरिताः ॥ , इत्यादि ।

**End.** एकञ्च शतमस्रं दश च सहस्राणि सप्तशतानि ।

अर्द्धापदानि ज्ञेयानि चान्यानि चत्वारि ॥

चत्वारि शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि ॥

**Colophon.** इति शौनककृतानुवाकानुक्रमणी समाप्ता ।

विषयः । ऋग्वेदशाकलशाखायास्तत् अनुवाकनिरूपणम् ॥

---

**No. 4244. पञ्चप्रकरणी वा सत्सुखानुभवः ।** Substance, country-made paper, 12 × 4 inches Folia, 15. Lines, 11 on a page Extent, 460 Ślokas Character, Nágara Date, Sm., 1868. Place of deposit, Calcutta, Government of India. Appearançe, fresh. Prose and Verse Correct

**Panchaprakaraṇí, or Satsukhánubhava.** A Vedánta treatise by Ichchhārāma Svámí who wrote this work in five chapters for the edification of his pupils. It treats of the knowledge of Brahma and of Atmā, of the nature of Ātmā as consisting of existence, intelligence and pleasure, of the evanascent character of the world and other topics interesting to the students of the Vedánta system.

**Beginning.** श्रीगणेशाय नमः ।

श्रीरामं सीतया सार्द्धं नत्वा सर्व्वहृदि स्थितम् ।

सत्सुखानुभवं ग्रन्थं कुर्व्वे बुद्धिविशुद्धये ॥

सच्चिदानन्दरूपं तत् पूर्णं विष्णोः परं पदम् ।

यत् प्राप्तये समारब्धा वेदान्ताः सकला अपि ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

अहं बद्धोऽस्मि संसारे मम मुक्तिः कथं भवेत् ।

किञ्चिद्वैराग्यसम्पन्नः सोऽस्मिन् शास्त्रेऽधिकारवान् ॥

तत्र प्रथमं गुरुशिष्यलक्षणम् । शान्तो दान्तो जितेन्द्रियः । इहलोके परलोके च विषयसुख-निःस्पृहो योग्यः शिष्यः । इत्यादि ।

**End.** ब्रह्म वेद ब्रह्मैव भवति । ॐ नमो ब्रह्मविद्भ्यः ।

ब्रह्मविद्भ्यः परं नास्ति न भूतं न भविष्यति ॥

इति पञ्चप्रकरणमात्मप्रकाशनिरूपणं नाम पञ्चमं प्रकरणं समाप्तम् ॥

पञ्चप्रकरणीमेतां सत्सुखानुभवप्रदाम् ।
विचारयन्ति ये नित्यमात्मारामा भवन्ति ते ॥
श्रीमन्नारायणः स्वामी विख्यातो जगतीतले ।
सत्सुखानुभवं शास्त्रं तस्य जानन्तु योगिनः ॥
इदमात्मगुणोपेतमात्मनैव विनिर्मितम् ।
आत्मज्ञानसुखावाप्त्यावात्मन्येव समर्पितम् ॥
इद पद्य वक्रर्थसमन्वितम् ।

**Colophon.** इदं सत्सुखानुभवशास्त्रं श्रीइच्छारामस्वामिभिर्विरचितं शिष्यबोधाय ॥
संवत १८६८ ।

विषयः । प्रथमे प्रकरणे, ब्रह्मात्मज्ञानविवेचनम् । तत्र गुरुशिष्ययोर्लक्षणादिविवेचनम् । आत्मतत्त्वनिरूपणम् । आत्मनः सच्चिदानन्दरूपत्वस्थापनम् । विश्वस्य मिथ्यात्वकथनमुखेन आत्मनः सत्यत्वनिरूपणम् । जीवस्वरूपादिनिरूपणम् । जीवब्रह्मणोरैक्यकथनम् ।

द्वितीये प्रकरणे, अध्यारोपस्य रूपादिनिरूपणम् । तत्र पञ्चीकरणस्वरूपादिनिरूपणम् । पञ्चकोषविवेककथनम् ।

तृतीये प्रकरणे, अपवादस्वरूपादिकथनम् ।

चतुर्थे प्रकरणे, ब्रह्मात्मतत्त्व साधनानुष्ठानं विना स्फुटं नानुभूयते—इति तत्साधनप्रकारकथनम् । तत्र श्रवणादीनां लक्षणादिकथनम् ।

पञ्चमे प्रकरणे, महावाक्यविवेकनिरूपणम् । आत्मस्वप्रकाशत्वादिनिरूपणञ्च । इति शम् ।

---

**No. 4245.** पादविधानानुक्रमणी । Substance, country-made paper, 14 × 5 inches. Folia, 3. Lines, 11-12 on a page. Extent, 90 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and Verse. Incorrect.

**Páda-vidhánánukramaní.** By S'aunaka. An index of those *pádas* or feet of the richs which are difficult to read or which have any doubt connected with their reading or meaning, &c. This work relates to the S'ákala S'ákhá of the Rig-Veda.

**Beginning.** श्रीगणेशाय नमः

अथ पादविधानानुक्रमणी ।
अष्ट पादाः सांशयिका भवन्ति

दुराम्नातायापि भवन्ति केचित् ।
तदनुमन्ट्रियतेदं ( ? ).विधीयता-
चार्य्येण शौनकेनेद्रिसं यत् ॥

ऋतेन मित्रावरुणौ दृता गृधाकवः सुताः । इन्द्र इदर्य्योः स च । अश्व च नो वसो सचा १ ॥
इमं मे वरुण श्रुधि । त्वं नो अग्ने पितोरुपस्य आ । २ । इत्यादि ।

End. ओषामवितर्य्यक्षते । त्यावच्छिमा वो वतम् ।
पितृभ्रतो न मन्तु मितृसुदानवः ॥ ८ ॥ इत्यष्टमाष्टकः ।

Colophon इति पादविधानानुक्रमणी ॥

विषयः । शाकलशाखायामन्त्र संग्रथितानां पादानां निरूपणम् ।

---

No. 4246. कौकिलसौत्रामणीविधिः । Substance, country-made paper, 9 × 3 inches Folia, 4 Lines, 10 on a page. Extent, 85 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Prose Correct

**Kaukila-sautrámaṇí-vidhi** The process of celebrating a sacrifice entitled Kaukila Sautrámaṇí in the manner prescribed by Ásvaláyana.

**Beginning.** श्रीगणेशाय नमः ।

अथ कौकिलसौत्रामण्युच्यते । सा आश्वलायनेन आम्नाता । अनाम्नातासु च श्रौतप्रकारस्तेनैव-दर्शितः । अनाम्नातास्वथ + + धिकारोऽध्वर्य्युर्वा यथा स्मरेदित्यादिसूत्रे + + ईर्य्युर्वेद विचितश्रौतस्याचार्य्याणामुक्तातत्वात् तदुच्यते । इत्यादि ।

End. यथा भक्तिसं प्राचीनावीतिनो दक्षिणतः प्राणभक्ष एके परिक्रीतो वा वैश्य राजन्ययोरन्यतरोऽगारेषु वा वक्ष्यत्यरिषि दक्षिणतो अचोतीति ।

विषयः । आश्वलायनश्रौतसूत्रोक्तप्रकारेण कौकिलसौत्रामणीयागविधिकथनम् ।

---

No. 4247. वशीकरणादिविधिः । Substance, country-made paper 10 × 4 inches Folia, 12. Lines, 9 on a page. Extent, 139 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Verse. Incorrect.

**Vasíkaraṇádi-vidhi**. The process of performing the *tántrik* ceremónies with the object of killing enemies, stupefying and fascinating men and women and so on.

**Beginning.** श्रीगणेशाय नमः ।

यः शान्तः परमोऽद्वयः परशिवः कन्दात्मकाशीतको
धामातीतमनादि + + निश्चयः सङ्कल्प + + वकः (?) ।
भाभासाम्बरभासकः समरसः सर्व्वात्मना बोधकः
सोऽयं सर्व्वमयो ददातु जगतां विद्यादिसिद्ध्यष्टकम् ॥

अथ सर्व्वज्ञमन्त्रम् ।

एकत्रिंशः स्थिरो मन्त्री मन्ते जङ्घायुगद्वयम् ।
नमः चोभयते लोकाम् दर्शनादेव साधकः ॥
भूतारवडमूलञ्च जपेन सच सर्पयेत् ।
विभूत्या संयुतं मन्त्रं तिलको लोकवशकृत् ॥ (?) इत्यादि ।

**End.** शनिवारेऽपि सन्ध्यादौ रवौ कुक्कुटको बलिः ।
देयः कृष्णसुरायुक्तः काल + + ततो चरेत् ॥

**Colophon** अतःपरं खण्डितम् ।

विषयः । मन्त्रोक्तप्रकारेण वशीकरणोच्चाटनस्तम्भनादिप्रकारकीर्त्तनम ।

---

**No. 4248** रविरोटाव्रतम् । Substance, country-made paper, 9 x 3 inches. Folia, 5 Lines, 9 on a page Extent, 81 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, decayed verse Correct.

**Ravirotá-vrata.** The process of performing the ceremony entitled *Ravirotá.* The principle interlocutors are Dhaumya and Draupadí in the forest during the exile of the Pándavas.

**Beginning.** श्रीगणेशाय नमः ।

वनवासगते भूपे कुन्तीपुत्रे युधिष्ठिरे ।
द्रौपदी परिपप्रच्छ धौम्यं धर्म्मभृतांवरम् ॥
द्रौपद्युवाच ।
प्रत्यहं भुञ्जते विप्र येऽस्माकं मुनिसत्तम ।
नानाग्नताम् वनं विद्धि किं कार्य्यमधुना मय
तच्छ्रुत्वा च मुनिर्धीमान् धौम्यो मतिमतांवरः
पाञ्चालीं कथयामास व्रतमेकं सुदुर्लभम् ॥

धौम्य उवाच ।

शृणु देवी प्रवक्ष्यामि सर्व्वकामफलप्रदम् ।

अन्नवृद्धिकरं मद्यो बलपुष्टियशस्करम् ॥

रविरोटाव्रतं नाम सर्व्वपापप्रणाशनम् ॥ इत्यादि ।

End. यः पठेच्छृणुयाद्वापि कथां पापप्रणाशिनीम् ।

आरोग्यधनसम्पन्नो रविमायुज्यमाप्नुयात् ॥

Colophon. इति श्रीरविरोटाव्रतं समाप्तम् ॥

विषयः । द्रौपद्या सह धौम्यस्य संवादेन अन्नप्राचुर्य्यादिकामनया रविरोटाव्रतं कर्त्तव्यमिति तद्व्रतविधानादिकथनम् ।

---

No 4249. होमभक्षः । Substance, country-made paper, 8 × 4 inches. Folia, 5 Lines, 9 on a page. Extent, 67 ślokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Prose Incorrect.

Homa bhaksha The food to be eaten by means of sacrificial ladles from dishes set apart for Indra and other deities at the three sacrifices, the morning, the noon and the evening. The work belongs to the School of Baudháyana.

Beginning. श्रीगणेशाय नमः ।

अथ बौधायनानुसारेण होमभक्षो निरूप्यते । तत्र भक्षणे त्रीणि निमित्तानि । वषट्कारो होमाभिषवः समाख्या च । तत्र होत्रादयो वषट्कर्त्तारः । अध्वर्य्वादयस्तु होमाभिषवकर्त्तारः । इत्यादि ।

End. तत उन्नेता तत्रैव होतारमुपहूय द्विः प्रत्यक्षं भक्षयति ॥ ततोऽध्वर्य्वादयस्तु उन्नेतारमुपहूय भक्षयति ॥

विषयः । बौधायनानुसारेण प्रातःसवनमाध्यन्दिनसवनतृतीयसवनेषु ऐन्द्रादिपात्रविशेषे चमसादौ भक्षनिरूपणम् ।

---

No. 4250. दिग्विजयेष्टिः । Substance, country-made paper, 9 × 4 inches Folia, 4. Lines. 12 on a page, Extent, 94 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

**Digvijayeshti**. The process of performing the vedic sacrifice for the conquest of the world.

**Beginning**. श्रीगणेशाय नमः ।

अथ वै भवति यथा वा इन्द्रो देवानां यथा मनुर्मनुष्याणा मेवमहं भूयासमिति स एतयेष्ट्या यजेत सर्व्वासु दिक्षु पुण्यकीर्त्तिकाम. सर्व्वदिग्विजयकामो वा इत्यादि ।

**End**. भुक्तिविमोकाग्ने वाजिनयागः । यज्ञविमोकाग्ने उत्कर उपवेषमुद्धरेत् । सिद्धमिष्टिः सन्तिष्ठते ॥

**Colophon**. इति दिग्विजयेष्टिः समाप्ता ।

**विषयः** । दिग्विजयेष्टिरेव प्रयोगकथनम् ।

---

**No. 4251**. अर्घ्यदानविधिः, वा अर्घ्यदानविधिसंक्षेपः । Substance, country-made paper, 5×3 inches. Folia, 8. Lines, 10 on a page. Extent, 100 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Arghya-dána-vidhi or Arghya-dána-vidhi-sankshepa**. The process of offering *argha* to the sun and of worshipping him according to the process prescribed by Trichákalya.

**Beginning**. श्रीगणेशाय नमः ।

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य श्रीसूर्य्यनारायणदेवताप्रीत्यर्थममौष्टिककाममामिष्ट्यर्थं त्रिचाकल्योक्तविधिना अर्घ्यप्रदानं करिष्ये । शरीरशुद्ध्यर्थं शुद्ध्यादिकं करिष्ये । इत्यादि ।

**End**. नमः सूर्याय शान्ताय + गणायादितेतवे ।
निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥

**Colophon**. इत्यर्घ्यदानविधिसंक्षेपः ।

**विषयः** । सूर्यार्घ्यदानविधिकथनप्रसङ्गेन तत्पूजाविधिकथनम् ।

---

**No. 4252**. अनुवाकानुक्रमणीभाष्यम् । Substance, country-made paper, 13×5 inches. Folia, 6. Lines, 13 on a page. Extent, 244 ślokas. Character, Nágara. Date, Sm. 1863. Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Correct.

**Anuvákánukramaṇí-bháshya**. A commentary by Shadgurushiśya on the Anuvákánukramaṇí by Śaunaka noticed above 4243.

Beginning. श्रीगणेशाय नमः ।

सर्व्वं कर्म्मफलं यत्र तुष्टे ऽ-

तुष्टेन किञ्चित् नमत्वं नमामि ।

विनायकं गिरिराजेन्द्रपुत्री-

महेश्वरप्रियसूनुं दयाब्धिम् ॥

बह्वृचानां जनानान्तु शौनकस्य प्रसादतः ।

अनुवाकानुक्रमणीरूपं किञ्चित् प्रवर्ण्यते ॥

पितृदेवर्षीति । माद्यर्थे प्रणम्य । प्रातः जितेन्द्रियः । द्विविधं शौचम् । मृज्जलाभ्यां बाह्यमाभ्यन्तरमर्थशुद्धिः । प्रणम्य नमः किम् । इत्यादि ।

End. द्वात्रिंशत्सहस्राधिकचतुर्लक्षमक्षराणीत्यर्थः । ४३२००० । द्विपञ्चिः समाप्तिज्ञापनार्था । एव वा ऋक् एव वा अर्द्धर्च एव वै पादः । एव वा अक्षरमित्यादि सर्व्वेषां मन्त्ररूपओंकाराणके । अथापि सर्व्वं सम्यक् संज्ञातं भगवता शौनकेन बह्वृचसिंहेन वेदितव्यम् ॥

Colophon. इति श्रीषड्गुरुशिष्यविरचितानुवाकानुक्रमणीविवृतिः समाप्ता ।

संवत् १८९१ ॥

विषयः । शौनककृतानुवाकानुक्रमण्या व्याख्यानम् ॥

---

No. 4253. सावित्राग्निप्रयोगः। Substance, country-made paper, 9 x 3½ inches. Folia 13. Lines, 12 on a page. Extent, 309 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Incorrect.

**Sábitrágni-prayoga.** The process of performing sacrifices in fire by tying the sacrificial animal to the stake.

Beginning. श्रीगणेशाय नमः ।

सावित्राग्नेः प्रयोगो वक्ष्यते । इममेव लोकं पशुबन्धेनाभिजयतीति श्रुतेः । पशुबन्धमाचित्य उच्यते । द्यावो वा सद्यः काले वा प्रातरग्निहोत्रं हुत्वा याः पुरस्तादित्यादि सर्वकामः पशुबन्धेन यक्ष्य इति संकल्प्याग्नीन् समारोप्योद्दवसाय मथित्वा । —इत्यादि ।

End. इन्धिषतो हिरण्मयं पुरुषं हिरण्यगर्भमित्युक्त्वा तमुपस्थानवाति । तथाहि—।

Colophon. (अतःपरं खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्तीति ज्ञेयम् ।)

विषयः । सावित्राग्निप्रयोगकथनमुखेन पशुबन्धविधिकथनम् ।

---

**No. 4254. स्वर्गद्वारेष्टिप्रयोगः।** Substance, country-made paper, 8 × 4 inches. Folia, 14. Lines, 9 on a page. Extent, 212 ślokas Character, Nágara. Date, Sk. 1659. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Incorrect.

**Svarga-dváreshṭi-prayoga.** By Dhuṇḍirája, 1627 Sk. The process of performing a sacrifice for going to heaven. The work belongs to the school of Baudháyana.

**Beginning.** श्रीगणेशाय नमः ।

प्रणम्य रामं जमदग्निसूनुं
गुरुं गणेशं गिरिजां गिरीशम् ।
तनोति सत्यस्य विधिप्रयोगं
गुरोः प्रसादादिह ढुण्ढिराजः ॥

स्वबौधायनीये चातुर्होत्रीये प्राक् दौषबोधाया दिवः स्वर्गीरनुविष्णोः प्रजाकचं निर्वपति । इत्यादि ।

**End.** तस्य शुक्लपक्षाद्दौनि सत्यानि द्वार्षु पञ्च ।
स्वर्लोके कामचारोऽस्य इत्युवाच बौधायनः ॥
चन्द्र-द्वि-षट्कु-युक्शाके चित्रभानुमिते मिते ।
अकरोत् पद्धतिं ढुण्ढिः स्वर्गद्वारेष्टिसिद्धिदाम् ॥

**Colophon.** इति स्वर्गद्वारेष्टिप्रयोगः समाप्तः । शाके १६ ५९ ।

**विषयः ।** बौधायनसूत्रानुसारेण स्वर्गद्वारेष्टिप्रयोगकथनम् ।

---

**No. 4255 शिलान्यासविधिः।** Substance, country-made paper, 9 × 4 inches. Folia, 1. Lines, 24 on a page Extent, 36 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose, and verse. Incorrect.

**S'ilányása-vidhi.** The process of laying the foundation-stone of palaces and other dwelling-houses as given in the Matsya Puráṇa.

**Beginning.** श्रीगणाधिपाय नमः ।

अथ कर्ता देशकालौ सङ्कीर्त्य करिष्यमाणवास्तोः शुभतासिद्ध्यर्थं निर्विघ्नतासिद्ध्यर्थं च भूमिपूजनं शिलान्यासं च करिष्ये इति सङ्कल्प्य तदङ्गत्वेन गणपतिपूजनं स्वस्तिवाचनं च कृत्वा चाचार्यं तथा चतुरो ब्राह्मणान् वृत्वा तान् पूजयेत् । इत्यादि ।

**End.** तदा विनिर्दिष्टं पूर्वं स्तोत्रार्था चिरकाम्यया । पश्चिमोऽपि चनिष्ठ…

च्छिद्रो भव मत्प्रभुनेति प्रार्थ्य ब्राह्मणान् सम्पूज्य आचार्य्यादिभ्यो दक्षिणां दत्वा कर्म्मेश्वरार्पणं कुर्य्यादिति मात्स्ये संक्षेपतः शिलान्यासविधिः ॥

**विषयः ।** प्रासादादिनिर्म्मितौ वास्तुपरिग्रहार्थं तत्र शिलान्यासावश्यकताकथनम् । तत् प्रयोगकथनञ्च ।

---

No. 4256. शिवामुष्टिव्रतम् । Substance, country-made paper, 9 x $2\frac{1}{2}$ inches. Folia, 4. Lines, 7 on a page. Extent, 54 Slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Verse. Incorrect.

**S'ivámushti-vrata.** The gift of a handful of corn for the purpose of propitiating S'ivá. The story of Rájá Chandra Prabha has been related in this connection as one who obtained great fortune by making this gift. Unmárried girls would acquire great merit by this gift.

**Boginning.** अथ शिवामुष्टिव्रतम् ।

बाल्यावस्थायां स्त्रीणामुक्तं भविष्ये ।

देव्युवाच ।

देवदेव जगन्नाथ जगदानन्दकारक ।
कौतुकेनेप्सितं किञ्चिद्धर्म्मप्रश्नं करोम्यहम् ॥
श्रुतानि देव देवेश व्रतानि नियमास्तथा ।
तीर्थानि च महान्तीह यज्ञदानान्यनेकशः ॥
नास्ति मे निश्चयो देव + मितोयं + + पुनः ।
कथयस्व महादेव यद्गोप्यं व्रतमुत्तमम् ॥
केन त्वं हि मया प्राप्तस्तपोदानव्रतादिना ।
अनादिमध्यनिधनोभर्त्ता चैव जगत्प्रभो ॥ इत्यादि ।

**End.** एतत्ते कथितं देवि तवापि व्रतमुत्तमम् ।
कोटियज्ञशतपुण्य-मस्यानुष्ठानमात्रतः ॥

**Colophon.** इति श्रीभविष्योत्तरपुराणे गौरीशङ्करसंवादे शिवामुष्टिव्रतोद्यापनं समाप्तम् ।

**विषयः ।** शिवाशिवयोः संवादेन बालिकानां भर्तृसौभाग्यसम्पदर्थं शिवामुष्टिव्रतविधानम् । तद्व्रतमाहात्म्यकथनप्रसङ्गात् सरस्वतीनदीतीरालङ्कारभूतस्य विमलापुरीपुरन्दरस्य चन्द्रप्रभस्य राज्ञ उपाख्यानकथनम् ।

---

**No. 4257.** सन्ध्याप्रयोगः । Substance, country-made yellow paper, 8×3 inches. Folia, 12. Lines, 7 on a page Extent, 132 slokas. Character, Nágara Date, Sm 1890 Place of deposit, Calcutta, Government of India Appearance, new Prose, and verse. Correct.

**Sandhyá-prayaga** The performance of the three daily sandhyá ceremonies by a process in which an attempt has been made to reconcile the vedic and the tántrik modes of performance.

**Beginning** श्रीगणेशाय नमः ।

आचमनम् । ॐ अच्युतानन्दगोविन्देति नीलकण्ठऋषिरनुष्टुप्छन्दः आपोदेवता आचमने विनियोगः । ॐ अच्युताय नमः ॐ अनन्ताय नमः ॐ गोविन्दाय नमः । शिखाबन्धनम् । ॐ ऊर्द्ध्वकेशीतिमन्त्रस्य विरूपाक्षऋषिश्चामुण्डादेवता शिखाबन्धने विनियोगः ।

ॐ ऊर्द्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ।
तिष्ठ देवि शिखामध्ये चामुण्डे ह्यपराजिते ॥
शिखा या ब्रह्मपुत्री च बालकन्या तपस्विनी ।
मस्तके दीयते स्थानं शिखाबन्धं करोम्यहम् ॥

**End.** अजरे अमरे देवि विश्वयोनि नमोऽस्तु ते ।

इति योनिमुद्रां प्रदर्शयेत् । पूर्व्वोक्तमर्घ्यविधानं कुर्यात् । इति सायसन्ध्या समाप्ता ।

**Colophon.** इति सन्ध्याप्रयोगः ।

**विषयः ।** श्रुतितन्त्रोभयसम्मतसन्ध्याविधिकथनम् । तत्र त्रिसन्ध्याप्रयोगकथनञ्च ।

---

**NO. 4258** सन्न्यासदीपिका । Substance country-made paper, 12×5 inches. Folia, 103 Lines, 10 on a page. Extent, 21,041 slokas Character, Nágara. Date, Sk 1768 Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse Correct

**Sannyásadípiká.** By Sachchidánandásrama the pupil of Nrisinhasrama. It treats of the renunciation of the world and refutes the theory that such renunciation is prohibited in the Kali Yuja. It gives in detail the process of initiation to a mendicant life and enumerates the duties and obligations of the Sannyásis up to the time of their death.

**Beginning.** श्रीगणेशाय नमः ।

प्रणम्य परमात्मानं ब्रह्मादीन् समुत्कलाः ।

सर्व्वेषामुपकाराय कुर्व्वे सन्न्यासदीपिकाम् ॥

तत्रादौ आरुणेयोपनिषत् । ॐ आरुणिः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन् कर्म्माण्यशेषतो विसृजामीति । तं होवाच प्रजापतिस्तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखां यज्ञोपवीतञ्च यागञ्च सूत्रञ्च स्वाध्यायञ्च भूर्लोकञ्च भुवर्लोकञ्च स्वर्लोकञ्च महर्लोकञ्च जनलोकञ्च तपोलोकञ्च सत्यलोकञ्च अतलतलातलपातालानि विसर्ज्जयेत् । दण्डमाच्छादनं कौपीनं च परिग्रहेच्छेषं विसृजेदिति । इत्यादि ।

End. संवित्सुखसागरे सदा विलीयते यस्य मनः प्रचार इति ।
आश्रमः सच्चिदानन्दोऽकरोत् सन्न्यासदीपिकाम् ।
विश्वेशः प्रीयतां तेन सर्व्वसाक्षी महेश्वरः ॥

Colophon. इति श्रीपरमहंसपरिव्राजकाचार्य्य श्रीनृसिंहाश्रमशिष्यसच्चिदानन्दाश्रमविरचिता सन्न्यासदीपिका समाप्ता । शके १७६८ ।

विषयः। आरुणिना सह प्रजापतेः संवादेन कर्म्मत्यागकामस्य सन्न्यासावश्यकतानिरूपणम् । तत्र सन्न्यासस्वरूपकीर्त्तनम् । कलौ सन्न्यासस्थापनविधिकथनम् । द्विविधसन्न्यासनिरूपणम् । सन्न्यासविधिकथनम् । कृच्छ्रादिप्रायश्चित्तविधिकथनम् । सन्न्यासकालनिरूपणम् । सन्न्यासे श्राद्धविधिकथनम् । सन्न्यासाङ्गक्षौरविधिकथनम् । दारत्यागविधिकथनम् । दण्डलक्षणादिकथनम् । शिक्यादिनिरूपणम् । वेदादिजपविधिकथनम् । सक्तुमुष्टिप्राशनविधिकथनम् । सावित्रीप्रवेशविधिकथनम् । होमादिविवेककथनम् । विरजाहोमविधिकथनम् । दक्षिणाविधिकथनम् । पात्रादिप्रतिपत्तिविधिकथनम् । पुत्राग्रे जपविधिकथनम् । उपवीतत्यागविधिकथनम् । अभयदानादिविधिकथनम् । गुरूपसत्तिविधिकथनम् । गुरुलक्षणकथनम् । उपदेशक्रमकथनम् । नामकरणविधिकथनम् । सन्न्यासमाहात्म्यकीर्त्तनम् । सन्न्यासग्रहणात् प्रथमादिदिवसे भिक्षाप्रशंसाकीर्त्तनम् । सन्न्यासिकर्म्मकथनम् । तस्य स्नानभिक्षादिविधिकथनम् । विरक्तप्रशंसाकथनम् । भेदवादिधिक्कारकथनम् । परमहंसधर्म्मकथनम् । जीवन्मुक्तिसाधनकथनम् । मौनविधिकथनम् । एकान्तसेवनविधिकथनम् । पाथेयभैक्ष्ययोर्विवेककथनम् । गुरुसमीपे वासविधिकथनम् । स्थावरादिग्रहणनिषेधकथनम् । सन्न्यासिकर्त्तव्यकथनम् । त्याज्यकथनम् । भिक्षाटनविधिकथनम् । निषिद्धकथनम् । जपप्रशंसाकथनम् । नाममाहात्म्यकथनम् । प्राणायामप्रशंसाकीर्त्तनम् । श्रवणमाहात्म्यकीर्त्तनम् । ब्रह्मजिज्ञासाप्रकारकथनम् । दिव्यशौचादिविधिकथनम् । दिव्यभिक्षाविधिकथनम् । विद्वत्सन्न्यासिकर्म्मकथनम् । नमस्कारविवेचनम् । ईश्वरस्तुतिकर्त्तव्यताकथनम् । आह्निकविधिकथनम् । तत्र शौचविधिकथनम् । आचमनविधिकथनम् । दन्तधावनविधिकथनम् । स्नानविधिकथनम् । तिलकधारणविधिकथनम् । सन्ध्याविधिकथनम् । पूजाविधिकथनम् । जपादिविधिकथनम् । मध्याह्नस्नानविधिकथनम् । आचमननिमित्तकथनम् । तद्गुणरूपकथनञ्च । प्राणायामादिविधिकथनम् ।

अग्निसाधनादिकथनम् । यतये भक्षादिदानप्रशंसाकथनम् । सायंसन्ध्यादिविधिकथनम् । शयन विधिकथनम् । क्षौरविधिकथनम् । आसपूजनविधिकथनम् । चातुर्मास्यधर्मकथनम् । अध्यामता चारनिरूपणम् । पर्य्यङ्कशौचविधिकथनम् । योगपट्टविधिकथनम् । सिद्धिं गतस्य यतेः संस्कारविधि- कथनम् । यतेर्मरणे आशौचाभावादिकथनम् । तदूर्द्ध्वक्रियाविधिकीर्त्तनञ्च । इति क्रम ।

---

**No. 4259. सर्व्वानुक्रमप्रयोगः ।** Substance, country-made paper, 21 × 4 inches. Folia, 56. Lines, 11 on a page. Extent, 1,701 ślokas. Character, Nágara. Date Sm 1863. Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Correct.

**Sarvvánukramaprayoga.** An index to the Rig-Veda giving the Rishi, Chhandah and Devatá of every rich.

**Beginning.** श्रीगणेशाय नमः ।

अग्निमीळे इति नवर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । अग्निर्देवता । गायत्रीच्छन्दः । वायविति नवर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । प्रथमतृचस्य वायुर्देवता । द्वितीयतृचस्य इन्द्रवायू देवते । तृतीयतृचस्य मित्रावरुणौ देवते । गायत्रीच्छन्दः । अश्विनेति द्वादशर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । प्रथमतृचस्य अश्विनौ देवते । द्वितीयतृचस्य इन्द्रो देवता । इत्यादि ।

**End.** सं समिति चतुर्ऋचस्य सूक्तस्य । आङ्गिरसः संवनन ऋषिः । आद्याया अग्निर्देवता । ततस्तिसृणां संज्ञानं देवता । तृतीयाभिष्टुप्छन्दः । शिष्टानां तिसृणामनुष्टुप्छन्दः इत्यष्टमोऽष्टमः । ८ । सू० ४९ । ऋ० १९८ ॥ इति दशम मण्डलम् ॥ संवत् १८६३ ।

**विषयः ।** ऋग्वेदीयसाकलशाखायाः ऋचां प्रत्येक ऋषिच्छन्दोदेवताप्रयोगकथनम् ।

---

**No. 4260. सिंहानुवाकभाष्यम् ।** Substance, country-made paper, 9 × 4 inches. Folia, 4. Lines, 10 on a page. Extent, 80 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Correct.

**Siñhánuváka-bháshya.**—A commentary on the Vedic Anuváka apparently apocryphal commencing with Simhe Me Manyuh. The Simhánuváká of the Taittiríya Bráhmana does not agree with the present anuváka.

**Beginning.** अथ सिंहानुवाकभाष्यम् । सिंहे मे मन्युः । मे मम मन्युः क्रोधः सिंहे । हिनस्तीति सिंहः पृषोदरादित्वात् हकारसकारयोर्व्यत्ययः । हकारस्य सः । सकारस्य हः ।

सिंच इति शब्दो जातिवचनः। अस्य वाक्यस्यापरिसमाप्तत्वात् क्रियापदाध्याहारः कर्त्तव्यः। वर्त्ततामिति शेषः। मम क्रोधः प्राणिनां हिंसाकारिण्युग्रजन्तौ वर्त्ततां न मयीत्यर्थः॥ इत्यादि।

End. वैश्वानरेणानन्तावानन्दं स इहोदिवैति च।
जाते यत्वमग्ने शोम्याकमग्ने + मस्त + तौ॥
सावित्रादौ मेत्तणेन गणहोमे चतुःशतम्।
उपहोमं व्याहृतिभिः सिंहे मे ते वरं तथा॥

Colophon. श्रीः।

विषयः। सिंहे मे मन्युर्व्याघ्र मेऽन्तरामय इत्याद्यनुवाकस्य व्याख्यानम्।

---

No. 4261. सोमाङ्गपानकारिका। Substance, country-made paper, 9×4 inches Folia, 26 Lines, 8 on a page. Extent, 364 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, new. Verse. Incorrect.

Somáṅgapána-káriká.—The process by which a family of brahmans who make default in performing the Somajága for three generations may resume the right of performing that sacrifice.

Beginning. श्रीगणेशाय नमः।
सोमेन यक्ष्यमाणस्य (यस्य) पितादय त्रयः।
नेजिर सोमयागेन स स्याद्विच्छिन्नसोमपः॥
आलभेत स ऐन्द्राग्नमवशौ + + + + +।
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्॥
स वै दुर्ब्राह्मणो नाम यथैव वृषलीपतिः।
विच्छिन्नसोमपानो वा दुर्ब्राह्मण उदाहृतः॥
आलभेताश्विने धूम्रं ललामं सत्वजं पशुम्। इत्यादि।

End कुर्य्यात्सोमयतः पाशं + मयेतत्त्रिप्रदक्षिणः।
— — — — — ।
एव विशङ्कुमार्गः स्याद्विष्णोपरवकादिषु॥

Colophon इति सोमाङ्गपानकारिका समाप्ता।

विषयः। त्रिपुरुषं यावत् विच्छिन्नसोमयागस्य विप्रस्य पुनः सोमयागाङ्गत्वाधिकारादि-विधिकथनम्।

---

**No. 4262.** **श्राद्धविभक्तिः।** Substance, country-made paper. 9×3 inches. Folia, 4. Lines, 10 on a page. Extent, 75 ślokas. Character Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**S'ráddha-vibhakti.**—On the case-endings in words used in the *Shráddha* ceremony.

**Beginning.** श्रीगणेशाय नमः।

अथ श्राद्धविभक्तिरभिधीयते।

अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा।

अन्नदाने चतुर्थी स्याच्छेषं सम्बोधनं स्मृतम्॥

+ + + पितृपितामहप्रपितामहानाम्। अमुकशर्म्मणाम्। वसुरुद्रादित्यस्वरूपाणाम्।

इति षष्ठीबहुवचने। अथ षष्ठ्येकवचनम्। अस्मत्पितुरमुकदेवशर्म्मणः। अमुकगोत्रस्य वसुरूपस्य।

**End.** पितृपितामहप्रपितामहाः शर्म्माणः गोत्राः। व० रु० आ० पा० तत्पयात् (?)

तृप्ताः स्थः। मातः दे० गो० व० तृप्तासि॥ तृप्तासि॥

**Colophon** इति श्राद्धविभक्तिः।

**विषयः।** श्राद्धेषु अक्षय्यासनादिदानवाक्ये पित्रादिशब्दोत्तरं विभक्तिनिर्द्देशकथनम्।

---

**No. 4263** शिवपूजासूत्रव्याख्यानम्। Substance, country-made paper, 9×4 inches. Folia, 6. Lines, 9 on a page. Extent, in ślokas, 90 Character, Nágara. Date, ? Place of Deposit, Government of India. Appearance tolerable. Prose. Correct.

By Ráma Chandra the son of Pánduranga of the *Atri gotra*. The codex treats of the worship of Síva as laid down by Baudháyana.

**Beginning** श्रीगणेशाय नमः।

श्रुतिकष्टार्थसन्धी यो विकाशयति स्वरत।

स पायात् सच्चिदानन्दः सूर्य्यमण्डलगो हरिः॥

बोधायनेन मुनिना शिवार्च्चोक्ता सुसूत्रतः।

तद्व्याख्यानं विधास्येऽहं शिवभक्तसुखाप्तय॥

अथातो महादेवस्याहरहः परिचर्य्याविधिं व्याख्यास्यामः। अत्र स्वप्रतिज्ञाप्रकारप्रवचनानन्तरं यतस्तत्पूजा प्रसक्ता अतो महादेवस्य अहरहः प्रतिदिनं परिचर्य्याविधिं पूजाप्रकारं व्याख्यास्यामः। विस्तरं चाभिमुख्येन कथयिष्यामः।

**End.** इदं पूजनं भवत् प्रोक्तं लोकोत्तरमिति यावत् ।
किञ्च । स्वस्त्ययनं कल्याणनिलयम् । इत्येवमाचक्षते ब्रुवन्ति ब्रह्मब्रुदिन इतीदृशमाह ब्रूते.
भगवान् मान्याम्नोपेतो बोधायनाभिधो महामुनिः ।

**Colophon** श्रीमद्विश्वामित्रगोत्रसमुद्भूतपाण्डुरङ्गसूरिसूनुना रामचन्द्रेण कृतं शिवपूजासूत्र-व्याख्यानं समाप्तम् ।

**विषयः ।** बोधायनीयशिवपूजासूत्रस्य व्याख्यानम् ।

---

**No 4264. सिंहस्थपद्धतिः ।** Substance, country-made paper, 10 × 4 inches. Folia, 16 Lines, 8 11 on a page. Extent, 390 ślokas. Character, Nágara. Date, Sk. 1735 Place of deposit, Calcutta, Government of India Appearance, old Prose and verse Correct.

**Siñhastha-paddhati.**—A plunge in the Godávarí when the planet Vrihaspati or Jupiter is in Leo is said to confer great merit. The writer gives the process of performing this holy bathing according to Hemádri the greatest compiler of modern Smriti.

**Beginning.** श्रीगणेशाय नमः ।
अथ सिंहराशिस्थिते बृहस्पतौ गोदावरीयात्रा कर्त्तव्या । स्वष्टदेवार्चनं गेहे विधायाभ्युदयं ब्रजेदिति विधेस्तस्य च बृहस्पतिपूजाया अपि विधायकत्वेन मुण्डनादेरित्यादिवाक्येन च सिंहस्थ-परत्वात् । तदुक्तं श्राद्धे । मुण्डनञ्चोपवासश्च गौतम्यां सिंहगे गुरौ । इत्यादि ।

**End.** ततः श्राद्धं कृत्वा ब्राह्मणपूजनं कुर्य्यात् । कर्म्मसाद्गुण्यार्थं + + + ब्राह्मणभोजनञ्च कृत्वा कर्म्मेश्वरार्पणं कुर्य्यात् ॥

**Colophon.** इति हेमाद्र्यनुसारिसिंहस्थपद्धतिः ॥ शाके १७३५ ।

**विषयः ।** हेमाद्रिनिबन्धानुसारेण सिंहस्थगुरौ गोदावरीयात्राविधानकथनम् । तत्र स्नानादिविधि-तत्प्रयोगादिकथनञ्च ।

---

**No 4265. निबन्धमहातन्त्रम् ।** Substance, country-made yellow paper, 16 × 6 inches. Folia, 314. Lines, 8 on a page. Extent, 7,838 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Nibandha Mahátantra.**—One of the 64 original *tantras*, the principal interlocutors being Hara and Párvatí. It has four *kalpas*

devoted to Síva, Ganesha, Sarasvatí and Sákti. **It takes the words** Brahma, Náráyaṇa and Śakti to mean the same thing. It treats of the preservation of health. It glorifies Sarasvatí whose colour changed from white to blue owing to a plunge into poison by the treachery of Hayagríva. The Fish Incarnation saved her from the effects of the poison. She pervades the whole universe, as the universe is composed of 50 letters. The gods are mere Mantras, and the Mantras are Sarasvatí. The work goes on with the glorification of the ten Mahávidyás, the selection of sacrificial animals on the different *yugas*, the prohibition of the use of non-sacrifice flesh, the enumeration of the various schools of *tántrikas*, namely the Vírácháras, Chínáchåras, Gandharvácháras and Vámácharas, the glorification of the worshippers of Durgá as superior to those of Vishnu, Siva, &c., the description of various mystic performances and so on.

**Beginning.** ॐ नमः परमदेवतायै ।

ईश्वर उवाच ।

एकधा बहुधा चैव दृश्यते भावभेदतः ।
अतो भेदाश्च कथ्यन्ते तन्त्रे तन्त्रे महेश्वरि ॥
वस्तुभेदः क्वचिदपि न हि कुत्रापि कर्हिचित् ।

देव्युवाच ।

एकत्वमपि देवेश मन्त्रोऽप्येकश्च कथ्यते ।
एकाप्यहं नैव नाना कथं जल्पन्त्यनेकधा ॥

ईश्वर उवाच ।

त्वं हि चैका त्रिभुवने त्वदन्या नास्ति सुन्दरि ।
अहमेकः क्व च पुनर्मदन्यः कोऽस्ति भूतले ॥ इत्यादि ।

**End.** अन्ते निरामयं ब्रह्म जीवन्मुक्तिश्च विन्दति ।
अष्टम्याञ्च चतुर्दश्यां नवम्याञ्च विशेषतः ॥
अग्निभौमदिनोपेते नित्यां संपूज्य मादिभिः ।
पठित्वा पाठयित्वा वा नरो मुच्येत सङ्कटात् ॥

**Colophon.** इति निबन्धे महातन्त्रे देवीश्वरसंवादे शाक्तीयं नाम चतुस्त्रिंशत्पटलः ॥

श्रीशिवौ जयतः ॥

**विषयः ।** शिवाशिवयोः संवादेन निबन्धमहातन्त्रस्य शारदात-माहेश गाणेश-शाक्तेयभेदेन चतुःकल्पमयत्वादिकथनम् । नीलसरस्वत्या एव सर्वाधीतिःस्वरूपत्वादिकथनम् । शक्तिनारायण-

